त्रैमासिकी

# संस्कृत मञ्जरी

वर्षम् 10 अङ्कः 2-4

## 'भावना' शब्दपरक-समस्यापूर्ति-विशेषाङ्कः

सम्पादकः
श्रीकृष्णसेमवालः







## दिल्ली संस्कृत अकादमी

(राष्ट्रिय राजधानी क्षेत्र दिल्ली सर्वकारः)

रणसंख्या/एफ-२ (एस) (३७) प्रेस/९०/२०९७ वर्षं दशमम् (द्वितीयाङ्कः)

# संस्कृत-मञ्जरी

## (त्रैमासिकी)

### 'भावना' शब्दपरक-समस्यापूर्ति-विशेषाङ्कः

सम्पादकः

**श्रीकृष्णसेमवालः**

सचिवः



## दिल्ली-संस्कृत-अकादमी

(राष्ट्रिय-राजधानी-क्षेत्र-दिल्ली-सर्वकारः)

प्रकाशकः

सचिवः
**दिल्ली-संस्कृत-अकादमी**
(राष्ट्रिय-राजधानी-क्षेत्र-दिल्ली-सर्वकारः)



प्राप्तिस्थानम्–
विक्रय-विभागः
**दिल्ली-संस्कृत-अकादमी**
(राष्ट्रिय-राजधानी-क्षेत्र-दिल्ली-सर्वकारः)
प्लाट सं० ५ झण्डेवालानम् करोलबाग़ोपनगरम्, नवदिल्ली-११०००५
दूरभाष : ३५५५६७६, ७५३५५९२, ३६८१८३५

मूल्यम्–१५.०० रूप्यकाणि

मुद्रकः–
**दोना प्रिंटर्स**
नेहरू-विहारः
दिल्ली-११००५४
दूरभाषः २९४१२२५

# सम्पादकीयम्

अयि सस्कृतवाङ्मय-साधनैकव्रतास्तत्र भवन्तो भवत्यश्च ! दिल्ली-संस्कृत-अकादमी प्रतिवर्षं संस्कृतस्य प्रसाराय विभिन्नानां कार्यक्रमाणामायोजनं करोति । तेष्वनेके कार्यक्रमाः विदुषां विदुषीनां कवीनां कवयित्रीणाञ्च कृते भवन्ति । ज्ञान-विज्ञानयोः विषयाणामनुसन्धानाय परिष्काराय च पुरा समस्यापूर्ति-शास्त्रार्थ-वाद-विवाद-प्रतियोगिताभिः प्रतिभानां योग्यतानाञ्च प्राकट्यं भवति स्म । संस्कृतभाषायाः या श्लोकसमास्यापूर्तिप्रतियोगिता प्राचीनकाले कवित्वपरीक्षणाय निकषा आसीत्, तामेवाधार्याकादमी प्रतिवर्षमखिलभारतीयस्तरीयां प्रतियोगितामायोजयति । गतवर्षेऽस्याः प्रतियोगितायाः विषयः आसीत् 'भावना', भारतस्य विभिन्नेभ्यः प्रान्तेभ्यः त्रिषष्टिः प्रविष्टयः, प्रतियोगितायामस्यां सम्प्राप्ताः । अकादम्या मूल्यांकनानन्तरमधिगताङ्कानां क्रमेणत्रिंशत् कवीनां कवयित्रीणाञ्च श्लोकान् संगृह्य सम्पाद्य च प्रकाशितः संस्कृतमञ्जर्याः अङ्कोऽयमपि सर्वेभ्यो विद्वद्भ्यः संस्कृतानुरागिभ्यश्च ज्ञानरञ्जनार्थमुपयोगी भविष्यतीति मे दृढो विश्वासः । 'भावना' शब्दपरकसमस्यापूर्ति-विशेषाङ्कस्यैतेषां श्लोकानामनुशीलनाय प्रसाराय च निवेदयत्ययं जनः ।

**विविध-भाव-विभाव-विभाविनी**
**सरसकाव्यकथादिविकासिनी ।**
**सकलमानव-मानस-मोदिनी**
**विजयतां भुवि संस्कृतमञ्जरी ॥**

निवेदकः
**श्रीकृष्णसेमवालः**
सचिवः



# अनुक्रमणिका

(विषयः भावना)


सम्पादकीयम् iii

१. श्रीगोपालसिंहजिज्ञासुः १

२. डॉ० कपिलदेवपाण्डेयः ४

३. श्री ओम्प्रकाशठाकुरः ७

४. श्रीरामदेवः १०

५. श्रीपरमानन्दझा १३

६. डॉ० रामकिशोरमिश्रः १६

७. डॉ० हरेकृष्णमेहेरः १९

८. श्रीअरैयर्श्रीरामशर्मा २२

९. श्रीकृष्णदत्तशर्माशास्त्री २५

१०. श्रीसुन्दरराजः २८

११. डॉ० मीराद्विवेदी ३१

१२. श्री कैलाशनाथो द्विवेदी ३४

१३. पं० रामानुग्रहशर्मा ३७

१४. डॉ० प्रशस्यमित्रशास्त्री ४०

१५. डॉ० शिवदत्तपाण्डेयः ४३

१६. डॉ० बनमालीविश्वालः ४६

१७. श्रीपद्मशास्त्री ४९

१८. डॉ० रामाशीषपाण्डेयः ५२
१९. श्री शालिहासः सिरसा ५५
२०. श्रीवागीशदिनकरः ५८
२१. डॉ० नागेन्द्रकुमारः भगो ६१
२२. डॉ० शिवसागरत्रिपाठी ६४
२३. श्रीरामेश्वरदत्तशर्मा ६७
२४. डॉ० अशोककुमारडबरालः शास्त्री ७०
२५. श्रीरहसविहारीद्विवेदी ७३
२६. डॉ० सुभाषवेदालंकारः ७६
२७. डॉ० हरेकृष्णमेहेरः ७९
२८. आचार्यः अयोध्याप्रसादशास्त्री ८२
२९. आचार्यः श्रीधरप्रसादबलूनी ८४
३०. आचार्यः जयप्रकाश शर्मा ८७
परिशिष्टम्-दिल्ली-संस्कृत-अकादम्याः समाचाराः-डॉ० जीतरामभट्टः ९०

# सम्पादकीयम्

अयि संस्कृतसाहित्यानुशीलनतत्परास्तत्र भवन्तो भवत्यश्च जानन्त्येव यत् साम्प्रतिके विज्ञापनप्रधाने युगे संस्कृतभाषायाः प्रसारस्याप्यावश्यकता विद्यते । दिल्ली-संस्कृत-अकादमी प्रतिवर्षं विभिन्नैः कार्यक्रमैः विविधाभिः योजनाभिश्च संस्कृतवाङ्मयस्य प्रसाराय संवर्धनाय च प्रवृत्तास्ति । इयमकादमी लोकाभिरुचिमनुभूय नित्यं नूत्नैः प्रयोगैः संस्कृतं प्रति लोकमभिप्रेरयति, अस्मिन्नैव क्रमेऽकादमी अन्यासां भाषाणां साहित्यस्य संस्कृतभाषायां संस्कृतवाङ्मयस्य चान्यासु भाषास्वनुवादाय प्रयासरता विद्यते, अकादम्याः संस्कृतमञ्जरीति त्रैमासिक्याः पत्रिकायाः दशमवर्षस्य तृतीयोऽङ्कोऽयं 'श्रीरवीन्द्रकाव्यकुसुमाञ्जलिविशेषाङ्क' रूपे प्रकाश्य भवतां भवतीनाञ्च करकमलेषु समर्पयन्नतितराम्मुदमावहामि । धुवड़ी आसामस्थ बी.एन. महाविद्यालयस्य संस्कृतविभागस्य पूर्वाध्यक्षाः आचार्याः रामप्रसन्नभट्टाचार्यमहोदयाः महता परिश्रमेण बङ्गभाषायाः प्रसिद्धानां कवीनां श्रीमतां रवीन्द्रनाथठाकुरमहोदयानां कतिपयानां काव्यानां संस्कृतेन भाषान्तरमकुर्वन् । तेषामेवेयं कृतिः विशेषाङ्केऽस्मिन् प्रकाश्यते । प्रयासोऽयमाधुनिकसंस्कृतवाङ्मयस्य पाठकानां ज्ञानवृद्धिं करिष्यतीति मे प्रत्ययः । 'श्रीरवीन्द्रकाव्यकुसुमाञ्जलिविशेषाङ्कस्यैतेषां काव्यानामध्ययनाय निवेदयत्ययं जनः ।

**विविध-भाव-विभाव-विभाविनी**
**सरसकाव्यकथादिविकासिनी ।**
**सकलमानव-मानस-मोदिनी**
**विजयतां भुवि संस्कृतमञ्जरी ॥**

निवेदकः
**श्रीकृष्णसेमवालः**
सचिवः

# अनुक्रमणिका


| | पृष्ठसङ्ख्या |
|---|---|
| १. सम्पादकीयम् | iii |
| २. उत्सर्गतः | १ |
| ३. १४०० वङ्गाब्दाः | २ |
| ४. संवादकाव्यानि | |
| (क) कर्णकुन्तीसंवादम् | ४ |
| (ख) प्रस्थानाभिशापम् | १३ |
| (ग) गान्धार्या निवेदनम् | २७ |
| (घ) आवेदनम् | ४९ |
| ५. क्षुद्रकाव्यानि | ५५ |
| ६. लेखनतः | ८५ |
| ७. इतस्ततः सङ्गृहीतानि | |
| (क) मातृवन्दना | ९५ |
| (ख) परिहासविजल्पितम् | ९६ |
| (ग) द्वितीयमहासमरकालविषयिणीरचना | ९६ |
| (घ) चार्ल्स् एण्डरुज् | ९७ |
| (ङ) शरच्चन्द्रचट्टोपाध्यायस्य तिरोधाने | ९७ |
| (च) परमहंसश्रीरामकृष्णदेवः | ९७ |
| (छ) देशबन्धुचित्तरञ्जनदासस्य स्मृतिसौधतः | ९८ |
| (ज) स्मरणीय आशुतोषमुखोपाध्यायः | ९८ |
| (झ) आचार्य श्रीजगदीशचन्द्रवसुः | ९८ |

पृष्ठसङ्ख्या

(ञ) उइलि पियरसन्-बन्धुवरेषु ९८
(ट) विज्ञानाचार्य श्रीयुक्तजगदीशचन्द्रवसुकरकमलेषु ९९
८. कवितासञ्चयनम्
(क) ऊर्ध्वं पञ्चाशतो वनम् १००
(ख) तपोवनम् १०१
(ग) प्राचीनभारतम् १०२
(घ) सभ्यतां प्रति १०२
(ङ) कालिदासः १०३
९. परिशिष्टम् –
दिल्ली संस्कृत अकादम्याः समाचाराः –डॉ० जीतरामभट्टः १०५

# सम्पादकीयम्

अयि सुरभारती सेवासमाराधनैकव्रता विद्वद्वर्याः, संस्कृतभाषेयं ज्ञानविज्ञानयोः रहस्योद्योतिका भाषा वर्तते । देववाण्या संस्कृतभाषया एव भिन्नभाषाभाषिणः भारतवासिनः परस्परं ऐक्यभावेन निवसन्ति । संस्कृतभाषायाः प्रभावः भारतीयासु भाषास्वेव नह्यपितु विश्वस्य भाषास्वपि दृश्यते । अनया भाषया सम्प्रेरिताः कवयः लेखकाः स्वकीयासु मातृभाषासु काव्यानां ग्रन्थानां वा रचनाः अकुर्वन् । येषु तेभ्यः विश्वस्तरीयाः सम्मानाः समर्पिताः अभवन् । तेष्वेव प्रसिद्धं बङ्गकविं श्रीरवीन्द्रनाथठाकुरं विश्वस्मिन् विश्वे को न जानाति ? तेषामेव कृतेः केषाञ्चित् पद्यांशानां संस्कृतानुवादः विशेषाङ्केऽस्मिन् प्रकाश्यते । संस्कृतमञ्जर्याः दशमवर्षस्य तृतीयेऽङ्केऽपि भवद्भिः तेषां कृतेः केषाञ्चित् पद्यांशानां संस्कृतानुवादः पठितः । तस्यामेव शृङ्खलायां संस्कृतमञ्जर्याः दशमवर्षस्य चतुर्थोऽङ्कोऽयं श्रीरवीन्द्रकाव्यकुसुमाञ्जलि-विशेषाङ्क-द्वितीयभागरूपेण प्रकाश्य भवतां भवतीनाञ्च करकमलेषु समर्पयन्नतित- राम्मुदमावहामि । धुवडी-आसामस्थ बी.एन. महाविद्यालयस्य संस्कृतविभागस्य पूर्वाध्यक्षाः आचार्याः रामप्रसन्न-भट्टाचार्यमहोदयाः महता परिश्रमेण बङ्गभाषायाः प्रसिद्धानां कवीनां श्रीमतां रवीन्द्रनाथठाकुरमहोदयानां कतिपयानां काव्यानां संस्कृतेन भाषान्तरमकुर्वन्, तेषां प्रयासोऽयं संस्कृतसहित्यसंवर्द्धनाय समर्प्यते । श्रीरवीन्द्रकाव्यकुमुमाञ्जलिविशेषाङ्के प्रकाशितः पद्यानुवादोऽयं भवतां भवतीनाञ्च काव्यरसानन्दवृद्ध्यै भवेदिति मे कामना ।

**विविधभावविभावविभाविनी**
**सरसकाव्यकथादि विकासिनी ।**
**सकलमानव-मानस-मोदिनी**
**विजयतां भुवि संस्कृतमञ्जरी ॥**

निवेदकः
**श्रीकृष्णसेमवालः**
सचिवः

# अनुक्रमणिका


| | | पृष्ठसङ्ख्या |
|---|---|---|
| सम्पादकीयम् | | iii |
| १. | कुमारसम्भवगानम् | १ |
| २. | मेघदूतम् ( I ) | २ |
| ३. | ऋतुसंहारः | ३ |
| ४. | काव्यम् | ४ |
| ५. | मानसलोकः | ५ |
| ६. | प्रार्थना | ६ |
| ७. | न्यायदण्डः | ७ |
| ८. | निवेदनम् | ८ |
| ९. | ब्राह्मणः | १३ |
| १०. | स्वर्गात् प्रत्यावर्तनम् | १७ |
| ११. | विजयिनी | २३ |
| १२. | मेघदूतम् ( II ) | २९ |
| १३. | अधुना प्रत्यावृत्य मामानय | ३६ |
| १४. | परिशोधः | ४५ |
| १५. | उपायनम् | ५८ |
| १६. | नमस्कारः | ८५ |
| १७. | शिवाजि-उत्सवः | ८९ |
| १८. | सुप्रभातम् | ९६ |
| १९. | उज्जीवनम् | ९९ |
| २०. | पूजयित्री | १०१ |

पृष्ठसङ्ख्या


| | | |
|---|---|---|
| २१. | अभिसारः | १०६ |
| २२. | स्वल्पाक्षतिः | १०९ |
| २३. | बन्दी वीरः | ११४ |
| २४. | भारतभाग्यविधाता | ११९ |
| २५. | राजविचारः | १२१ |
| २६. | तदानीन्तनकालः | १२२ |
| २७. | साधारणी कन्या | १२८ |
| २८. | एकतानः | १३६ |
| २९. | पृथिवी | १४१ |
| ३०. | परिशिष्टम्-दिल्ली-संस्कृत-अकादम्याः समाचाराः-डॉ० जीतरामभट्टः | १४५ |

# भावना

–गोपालसिंहजिज्ञासुः
प्रधानाचार्यः,
सेठ लक्ष्मीनारायणसंस्कृतमहाविद्यालयः
मथुरामण्डलान्तर्गतवरसानावास्तव्यः

(१)

भुवो विधानं प्रभवेण्णिचस्ततः,
युजागमः स्याद्धि णिजन्ततस्तथा ।
"युवोरनाका"–विति सूत्रयोगतः
पदं प्रसिद्धं भवतीति *भावना* ॥

(२)

समुच्यते ब्रह्मसह शुभोत्तमा
अनन्तरं कर्ममयीति मध्यमा ।
तृतीयभावेऽस्ति तथोभयात्मिका,
प्रवक्ति शास्त्रं त्रिविधाऽस्ति *भावना*॥

(३)

उदीर्यते ब्रह्ममयी सनन्दने,
तथा द्वितीया स्थिरजङ्गमादिषु ।
हिरण्यगर्भादिषु चोभयात्मिका,
प्रवर्तितेत्थं भुवनेषु *भावना* ॥

(४)

आयुक्तचित्तस्य न निर्मलास्तु धीः,
न भावनाऽभावयतः कुतः सुखम् ।
शमीप्सवः सन्तु फलान्विताः यथा,
रमा-धवस्योच्चरिताऽस्ति *भावना* ॥

(५)

गतो यदा रङ्गभुवं रमापतिः,
बलान्वितोः मातुलकंससन्निधौ ।
विभिन्नरूपेषु विलोकितस्दा,
विभिन्नताकारणमत्र *भावना* ॥

(६)

गरीयसी जन्मधरा हि नाकतः,
पिनाकपाणेर्जयघोकारिणः ।
चरन्ति ये कार्गिलदुर्गभमावनौ,
न कस्य वन्द्या इति देश*भावना* ॥

(७)

समस्त देशस्य म्नांसि साम्प्रतम्
विचारयन्तीह न कार्गिलात्पृथक् ।
समागताः लुण्ठकदस्युपाकजाः
भवन्तु नष्टाः द्रुतमस्ति *भावना* ॥

( ८ )

गताः गतिं वीर जनोचितां भटाः
रणाङ्गणे कार्गिलसंज्ञकेऽधुना ।
सभाजनीयाः सुतरां समैः सदा
समाप्नुयुः शान्तिममुत्र *भावना* ॥

( ९ )

प्रिया नवोढा जननी तथा पिता,
सहोदराः धैर्यधुरन्धराः प्रभो ।
तदर्भकाश्चोन्नतिमार्गगामितः
समग्रराष्ट्रस्य हृदीति *भावना* ॥

( १० )

प्रवर्तिते संस्कृतवत्सरे भवेत्
वसुन्धरायामिह संस्कृते रतिः ।
समे जनाः संस्कृतभाषणे क्षमाः,
भवेयुरित्यस्ति मदीय*भावना* ॥



# भावना

–डॉ० कपिलदेवपाण्डेयः
सम्पादकः 'सूर्योदयः'
सी २७/२३९-१(क) जगतगंजः, वाराणसी–२२१००२

(१)

ऐषमः संस्कृतं वर्षमायोज्यते
संस्कृतेरुन्नतिस्तेन सङ्कल्प्यते ।
तत्र जायेत राष्ट्रे समं संस्कृतं
संस्कृतं जीवनं संस्कृता *भावना* ॥

(२)

काम्यते चेत्स्वदेशस्य मानोन्नतिः
आर्थिकी भौतिकी साधु सैद्धान्तिकी।
प्राप्तुमिष्येत चेत्प्राक्तनं गौरवं
तत्कृतेऽपेक्ष्यते नैष्ठिकी *भावना*॥

(३)

स्मर्यतां कालिदास्य वाग्वैभवं
पीयतां बाणभट्टस्य कादम्बरी ।
गीयतां गीतगोविन्दगीतिस्तथा–
ऽऽश्रीयतां शङ्कराद्वैतसद्*भावना* ॥

(४)

ऊर्ध्वमुन्नीयतां भारतीयो ध्वजः
सर्वतः शान्तिसद्भावसन्धायकः ।
सार्वभौमश्रुता संस्कृता भारती
सौगती चापि कारुण्यभृद् *भावना*॥

(५)

जातिधर्मादिकोऽशेषभेदोऽधुना
देशभक्तैर्जनैः सर्वथा त्यज्यताम् ।
विश्वबन्धुत्वभावः समाधीयतां
यत्नतः स्थाप्यतामेकता*भावना*॥

(६)

क्रौञ्चशोकात्समुत्पन्नकारुण्यवाग्
द्रागकार्षीदृषी रम्यरामायणम् ।
व्यासदेवोऽतनोद् यन्महाभारतं
तत्र सर्वैर्विधेया शुभा*भावना*॥

(७)

वेदावेदाङ्गतत्त्वं पुराणदिकं
विश्वविज्ञानकोषो महाभारतम् ।
आस्तिकं नास्तिकं षड्विधं दर्शनं
ज्ञायतां जायतां भारती*भावना*॥

(८)

आर्हताः सौगताः सिक्खधर्मानुगाः
शैवशाक्तास्तथा वैष्णवास्तान्त्रिकाः।
सन्ति नाम्ना पृथग्वस्तुतस्ते समाः
साम्प्रतं वाञ्छिता सर्वसद्*भावना* ॥

(९)

स्मर्यतां भारतं पूर्वमासीद्गुरुः
कृत्स्नविश्वस्य चारित्र्यशिक्षापटुः ।
नैव भाव्यं कदाचिन्निराशैर्वृथा
सर्वथा हीयतां हीनता*भावना* ॥

(१०)

संस्कृत्या प्रकृतिप्रदत्तनिधिभिर्गीर्वाणवाण्या तथा
देशोऽयं विभवैर्निसर्गभरितैर्भूयो भुवि भ्राजते ।
वृद्धिं प्राप्नुवतो भृशं स्वमहसा विश्वाभिभावित्विषो
भूयाद् भा-रत-भारतस्य भुवने बन्धुत्वसद्*भावना* ॥



# भावना

–ओम्प्रकाशठाकुरः
डी-७५७ सरस्वतीविहारः, दिल्ली-३४

(१)

ये वैषम्यभवं पिबन्त्युनुदिनं भीमं विषं भूतले
भोज्यं चापि परिच्छदो न सुलभो येषां नराणां क्वचित्
दृष्ट्वा तान् करुणापरीतमनसो ये साह्य दानोन्मुखा
वन्द्या सर्वजनैरियं परकृते तेषां शुभा *भावना* ॥

(२)

कार्यं दुष्करमस्तु विघ्नबहुलं साध्यं भवेद्वा सुखं
उद्योगाश्रयिणो नरास्दखिलं संसाधयन्ते मुदा
पूर्णत्वं लभतां हि तत्कथमहो सम्यग्विचार्योच्यतां
तत्सिद्ध्यै यदि नैव कापि हृदये वेविद्यते *भावना*॥

(३)

क्रूरान् कापटिकानरातिनिवहान् संलक्ष्य युद्धोद्यतान्
स्वीयां पावनदेशभूमिमवितुं सत्साहसाः सैनिकाः
सार्धं तैर्युधि भीमविग्रहपराः प्राणान् प्रियान् जुह्वते
तन्नूनं स्वधरार्थजीवनवतां प्रेमोद्धुरा *भावना* ॥

(४)

स्वार्थः सिध्यतु येन केन विधिना वित्तं च संवर्धतां
किं जात्या च कुलेन किं च कलया किं सद्गुणैरर्जितैः।
एवं स्वोदरपूरणैककुशलां ये धारयन्ते धियं
तेषां राष्ट्रवसुन्धरां प्रति सखे ! किं प्रेम का *भावना ?* ॥

(५)

कामं कोऽपि निगूहतु स्वमनसो भावव्रजं यत्नतः
वेषादेः परिवर्तनेन निपुणं तं गूढतां सन्नयेत् ।
दृष्ट्वा किन्तु तदिङ्गितं नयनयोः आकारचेष्टागतीः
तज्ज्ञैस्तस्य विभाव्यते द्रुतमहो चेतोगता *भावना* ॥

(६)

नानोपद्रवभीषणाः सुविषमा हर्तुं रुजो रोगिणां
ओषध्या गुण-धर्मवर्धनविधौ शक्तेश्च सम्पादने
नारङ्गामलकादिकस्य सुरसैः संघोट्य ता ओषधीः
प्रायो वैद्यवरैर्हि शास्त्रविधिना संदीयते *भावना* ॥

(७)

केचित् सन्ति कलाविदां सुनिपुणाः सम्माननीया जनैः
आहार्यादिकसंज्ञकैरभिनयैस्ते मोहयन्ते जगत्
तैर्हर्षस्य शमस्य कोपविकृतेर्हासस्य वा व्यज्यते
वाणी-वेष-विभावविभ्रमशतैः सत्येव हृद्-*भावना* ॥

( ८ )

पुण्ये विश्वजनैर्नुते सुमहिते लब्ध्वा जनिं भारते
ये पश्यन्त्यवहेलया क्षितिमिमां लोका इहत्या अपि
वाचं वेष-विचारजातमखिलं धृत्वा परेषां मुदा
ये हृष्यन्ति, तनोतु किं जनहितं तेषामियं *भावना* ॥

( ९ )

औदार्यं नहिं लक्ष्यते म तपसा पूतं मनो विद्यते
अन्येषां व्यसने न यस्य हृदये जागर्ति संवेदना
बाधां वीक्ष्य जहाति यो धृतितरा दूरे च सत्सङ्गमात्
पुंसस्तस्य विवेकशून्यमनसो याताश्मतां *भावना* ॥

( १० )

सन्त्येके प्रदिशन्ति बोधमबुधान् नीतिं कुमार्गे रतान्
उन्नेतुं सुजनांश्च यत्ननिरताः कृत्वाऽभ्युपायान् बहून्
संरक्षन्ति विपत्सु दीनमनुजं दानैरथो सान्त्वनैः
तेषां सर्वसुखैषिणां विजयते कल्याणकृद् *भावना* ॥



# भावना

## एषास्त्युत्कलविप्लवे श्रुतिगते चेतोव्यथा भावना

—श्रीरामो दवे
५३९ बी, श्रीनिकेतनम् ८ सी रोड सरदारपुरा जोधपुरं (राज०)

(१)

आकर्ण्योत्कलविप्लवं जलनिधेः संहारसम्पादकम्,
व्याप्ते व्याहतिसंकटाम्बुदकुले घोरेऽभितो मेदुरे ।
नेदिष्ठो जगदीश्वरोऽपि नु यदा मौनं स्थितो मन्दिरे,
किं कुर्यात् कृपणस्य खिन्नमनसः संवेदना-*भावना* ॥

(२)

सञ्जातस्तव सन्निधौ प्रभवतो विध्वंसको व्युत्क्रमः
प्रौद्धत्यं पुरतश्च तेऽत्र घटितं झञ्झानिलस्य प्रभो! ।
उत्पाताश्च निरङ्कुशैर्जलनिधेस्तीरे तरङ्गैः कृताः
तद् दृष्ट्वापि दयानिधेर्नहि कथं जाता दया*भावना* ॥

(३)

झञ्झाझम्पनलम्पटेन विटपाश्छायाप्रदाः पातिताः
रम्या तीरविहारिणी च सुषमा प्रोद्वेजिता निर्घृणम् ।
हाहाकाररता गृहेषु वनिता वैधव्यवह्नौ हुताः
नो जाने मृदुलात्मनोऽपि नु कथं लुप्ताद्रुते*र्भावना* ॥

(४)

नौका यैश्च क्नाटिनस्तवसरित्पारं पुरा प्रापिता
दृष्टास्ते नु कया दृशाऽतिकृपणः कैवर्तका लौडने ।
क्रीडन्तो बटुकाः प्रमोदपुलिने क्षिप्ताः प्रवाहेऽम्भसाम्,
जाता हा ! जगदीश्वरे त्वयि कथं सम्प्लाविनी *भावना* ॥

(५)

केदाराः कृषकश्रमार्जितमुदः क्रौर्येण वाराऽर्दिताः,
उद्यानानि च पाटितानि विटपैः संवेष्टितान्यम्भसा ।
प्रासादा गगनङ्कशाः नवनवाः भूसात्कृता वात्यया
किं ब्रूमः करुणानिधे ! तव हृदः का लोडने*भावना* ॥

(६)

येन स्वात्मकुलोद्भवा अपि मिषान्नीताः क्षयं यादवाः,
त्यक्ताश्चैकपदे प्रमुग्धहृदया बाल्यप्रिया गोपिकाः ।
मायां ते नहि माधवस्य मुनयो वेत्तुं न शक्ता यदा
विघ्नोऽज्ञास्तु कथं तदा हृदि जगन्नाथस्य का *भावना* ॥

(७)

मातस्त्वं करुणार्णवे ! कथयमे ! मौनं सुभद्रे स्थिता,
नैतद् ध्वंसंकरं त्वयापि वरुणस्यात्याहितं वारितम् ।
क्रन्दन्त्यः कमलाननाः कथमिमाः मात्रा त्वयाऽलोकिताः
किं वेयं कलिकृत्यकोपकलिता नाथोचिता *भावना* ॥

(८)

नीरे सत्यपि पेयवारिविरहे तृष्णाकुला मानवाः,
धान्ये ध्वंसमुपागते च जनता जाता बुभुक्षाकुलाः ।
याचन्ते धनिनोऽपि धान्यकणिकां भूविश्रुता दानिनः,
किं कालेन कलौ यदा कवलिनी सम्प्रेरिता *भावना* ॥

(९)

कालेऽस्मिन् सहसोदितार्तिविषमे राष्ट्रे च वित्ताकुले,
मग्ने भूरिजने जलौघवलये ध्वस्ते धरामण्डने ।
नष्टे चायुतजीवने च विकले जाते प्रदेशोत्कले,
भूयाद् भारतवासिनां समुदिता चित्ते समा *भावना* ॥

(१०)

उत्साहो धनधान्यदानमनसां गच्छेन्न मान्द्यं क्वचित्
कारुण्यं विपदाकुलार्तिहरणे चित्ते स्थितं वर्धताम् ।
सुप्ता स्वार्थविषावलेपलुलिता दूरेऽस्तु दुर्वासना,
संभूयात् सबले सदैव हृदये राष्ट्रैक्यता *भावना* ॥



# भावना

–श्रीपरमानन्दझा
ग्रा० गङ्गौली, पो० राजे, भा० सरिसब-पाही, ज़ि० मधुबनी (बिहारः) पि०८४७४२४

[ भारत-वन्दना ]

( १ )

नमामि भारतावनीं समस्तविश्वपावनीं,
नरैर्नतां सुरैर्मतां सतां हिताम्बुधिं हि ताम् ।
जने जनेऽभिजृम्भते ध्रुवैव यत्र धीरता-
धुरन्धरा वसुन्धरावलत्कुटुम्ब*भावना* ॥

( २ )

चिरन्तनात्मचिन्तनादवाप्तदिव्यलोचनै-
स्तपोधनैरधिष्ठितां धराधुरि प्रतिष्ठिताम् ।
स्तुवे भुवं हृदा ध्रुवं हितेषु भारतं रतं
व्यलोकि यत्र विश्वतः स्वतो गुरुत्व*भावना*॥

( ३ )

जयत्यहो! महोच्चशैलशाखिनिर्झराटवी-
सदानवीभवच्छटाऽस्य भूतलस्य भासुरा ।
यतः स्वतः समुद्गता जगन्मनो विनोदना
सुबन्धुकालिदासभट्टभासभव्य*भावना* ॥

(४)

विपत्सु धैर्यधारणे वसुन्धरानुकारिणीं
समुन्नतिक्षणेषु च क्षमावचः प्रचारिणीम् ।
नमामि नित्यनिर्मदां भुवं सदा स्वजन्मदी-
मुदेति यत्पदे नृणां स्वतः पवित्र *भावना* ॥

(५)

गतोऽसि धन्यतामुपेत्य सत्यमेव भारतं
सखे ! सुखेन विद्धि सिद्धिमात्मनः पुरातनीम् ।
यदीयसर्वदिक्समृद्धिभावमत्र भावय-
त्यहो ! सुधान्धसोऽधिपेऽपि भात्यभव *भावना* ॥

(६)

मठे मठे द्विजैः पवित्रवेदमन्त्रघोषणा
शुकेषु पिञ्जरोल्लसत्सु तत्पदानुवर्त्तना ।
गृहेषु मन्दिरेष्वरण्यचत्वरायनेष्वहो !
विभाति विष्वगत्र मित्र ! देशभक्ति*भावना* ॥

(७)

स्वमातृमातृभूविपत्क्षेणषु यत्क्षमातले
प्रयात्यहो ! महोल्वणा दृशं भृशं विलक्षणा ।
स्फुरत्प्रचणबाहुदण्डखण्डितारिमण्डली-
बलीभवच्छिरस्त्रवत्कदस्त्रपान*भावना* ॥

(८)

महोत्पलातिकोमला विनिर्गलन्मनोमला
सदाशयेषु सत्यपि प्रकाममङ्ग ! मङ्गलाः ।
विभात्यलं विभाविता नरेषु नैकधाऽभिधा-
विभारतेऽत्र भारते शठे शठत्व *भावना* ॥

(९)

ससीतकौशलेयकृष्णपादपद्मपावनी
वनी वनी विभाति मित्र ! चित्रतावहाऽत्र भोः ।
यदीयमाधुरीमवेक्ष्य वक्षसि प्रवीक्षिता
क्षितावलं विलक्षणा हि कापि भव्य*भावना* ॥

(१०)

सदैव दैवमेवमेव याचते मनो मुदा
मदीयमत्र मित्र ! यद् भवे भवेज्जनुस्सदा ।
क्वचिन्न मे रुचिर्मनागपीतरत्र संस्थिता
समक्षमेयमत्र भूर्ममेति मे वि*भावना* ॥



# भावना

–डॉ० रामकिशोरमिश्रः

२९५, पट्टीरामपुरम् रेलवेरोडः डाकगृहसमीपे खेकड़ा-२०११०१ (बागपत) उत्तरप्रदेशः

(१)

करुणा प्रति मां कथं न ते ?
हृदये प्रेम न किं कृतस्मृते !
किमपि स्खलितं मयाऽत्र तत्,
तव किं मां प्रति रोष*भावना*? ॥

(२)

अवदस्त्वमिदं त्वयं जनो
व्रजितुं कामये कवेः पदम् ।
अगमं सहपाठि-हासताम्,
तव किं मां प्रति हास*भावना*?॥

(३)

भव नो कठिनं, रतिं कुरु,
भव नाऽऽसक्तजनात्पृथग्गति ।
भव नो प्रिय पुष्प ! नीरति,
हृदि ते किं नहि राग*भावना*? ॥

(४)

न तितीर्षुरपां पतिं त्वहं ?
गगनाद् दैववशादधोऽपतम् ।
अवयाहि निमज्जितं न माम् ,
हृदि धेया नहि पार*भावना?* ॥

(५)

कलिका जलविन्दुसङ्कुलाः,
विकचास्ताः सहसा हि पश्य याः ।
अवलोक्य सदुःखमेव माम्,
नहि धार्या हृदि साश्रु*भावना?* ॥

(६)

पतिता धरणौ तदुत्त्थिताः,
मरुता स्पन्दितविग्रहा इमाः ।
मदहर्षरुजाकुलास्तु ताः,
न विधेया हृदि कष्ट *भावना?* ॥

(७)

नहि यद्यपि कापि दुःखिता,
किमु साऽऽभिर्न तथापि मन्यते ?
हृदि ते किमु भूतमीदृशम् ?
भुवि कार्या न कठोर*भावना?* ॥

(८)

अयि ! मा रुदिताऽद्य कोरकाः ।
समयोऽयं नहि रोदनस्य वः ।
दिवसोऽद्यतनः प्रियोऽस्ति सः,
हृदि धार्या नहि हर्ष*भावना?* ॥

(९)

अयि रोदनकर्मतत्पराः !
कलिकाः ! मा रुदित, प्रसीदत ।
अविचार्य विधेयमत्र नो
नहि कार्यात्वविचार*भावना* ॥

(१०)

भ्रमरानुपलभ्य कोरकाः !
सह तैस्तन्मधुरस्वरेण च ।
अह ! गायत हर्षगीतिकाम्,
हृदि कार्या मधुगान*भावना* ॥



# भावना

–डॉ० हरेकृष्णमेहेरः
संस्कृतविभागाध्यक्षः, सर्वकारीयमहाविद्यालयः, भवानीपाटना-७६६००१
कालाहाण्डिः (उत्कलप्रदेशः)

(१)

प्रयामि यस्मिन् जगती-महोदरे
त्वमेव तस्मिन् विपुले चराचरे ।
त्वमेव-मूर्तिर्विततता शुभानना
प्रिये ! मम त्वं मनसोऽसि *भावना* ॥

(२)

प्रालेय-शैलाद् रमते कुमारिका
यदीय-संज्ञान-रसाब्धि-बोधिका ।
सद्-वैजयन्ती सुयशो-विवर्धना
सा भारतीया सुभगाऽस्ति *भावना* ॥

(३)

या वैदिकैरार्यवरैर्महस्वती
मनीषिभिः सत्प्रतिभां वितन्वती ।
प्रकीर्तिता विश्वजनीन-दर्शना
मान्यैव सा मानवतेति *भावना* ॥

(४)

उदात्त-कण्ठैर्भुवि विश्व-बन्धुता,
विधीयते या नितरां जनैर्नुता ।
महानुभावा महनीय-चेतना
सनातनी सैव विभाति *भावना* ॥

(५)

ऊर्जस्वला सिंहबला समुज्ज्वला
सूर्य-प्रकाशामित-शौर्य-मण्डला ।
अजेय-सेना दलितारि-वासना
जातीयता सा जयतीह *भावना* ॥

(६)

कश्मीर-रश्मि-प्रकरै-र्विभास्वरा
विराजते वर्जित-सर्व-मत्सरा ।
प्रेम-स्वरूपा जन-शक्ति-बोधना
स्वमातृभक्तिर्मधुराऽस्ति *भावना* ॥

(७)

किं चेष्टकैर्बहुधनैरुपलैः श्रिया वा
नात्मीयता यदि गृहे परिवार-भावा?
किं देश-नागरिकता कुरुते धृतासना
नेष्टा यदि स्वहृदि राष्ट्रियताऽपि *भावना*? ॥

(८)

न यत्र पर्यावरण-प्रदूषिका
न वै वधू-प्राणहरा विभीषिका ।
न यत्र हिंसा शठता प्रवञ्चना
दिव्या चिरं सैव चकास्ति *भावना* ॥

(९)

प्रवर्तिता विश्वजनस्य संविदा
परोपकाराभ्युदया विभूतिदा ।
परम्परा-सेवित-पुण्य-साधना
भूयात् सदा सर्व-शुभाय *भावना* ॥

(१०)

सङ्कल्प-सात्त्विक-रुचा रुचिरा विचारणा
कायेन यत्र वचसा मनसा च कर्मणा।
श्रद्धा-प्रशान्ति-ममता-समता-निबन्धना
ध्येया सुधा-मधुमती जगतीह *भावना*॥





# भावना

—अरैयर् श्रीरामशर्मा
मेलुकोटे-मण्डयज़िल्लाकर्णाटकराज्यम्-५७१४३१

(१)

वसन्तगुणगुम्फिता विविधपुष्पवर्णोद्धुरा
विवाहरससोदरा विरहवेदनापोहिनी ।
वधूवरपरिग्रहा वरणमालिका वर्णिका
ततान सखि ! सम्मदं मम हृदन्तरे *भावना* ॥

(२)

जगत्यविरले जने जडमुखे सखि ! प्रेयसीं
क्षणे विरहकातरां क्षणश एव कुर्वत्यहो !
जनेन वरदक्षिणाधनपरेण मत्त्याजिना
सुखं किमिह ! दुर्विधौ मम हतैव सद्*भावना* ॥

(३)

अये सखि ! सुखायते किमिह कर्मकारुस्थले
विना स्वजनसङ्कथां किमिह भोजनं रुच्यते ?
गतागतपरिश्रमः प्रतिदिनं हि याने मम,
प्रियेण रहिता त्वया ननु धृतास्म्यसौ *भावना* ॥

(४)

पुमानिह भवे भवे क्व भवितेति किं निश्चितं !
स्त्रिया न खलु जीव्यते जगति किं पुमांसं विना ।
स्वतन्त्र इह भारते सुकृतसंविधाने सखि !
स्वतन्त्रजनजीवनं सुखमितीह मे *भावना* ॥

(५)

स्त्रिया-सरसभावया ननु धिया विभाव्यं जगत्
नयानयविभावना परिणता सुखायैव सा ।
क्रिया नयवती प्रिया त्वमिव हे ! सखि ! प्रायशो
यशो भवति जीवने मम सदेति मे *भावना* ॥

(६)

समेऽपि पुरुषा वयः परिणतास्तु नीता मम,
स्वभावसदृशास्समा वयसि ते मम भ्रातरः ।
तथैव किल वत्सलास्म्यहमशेषबालेषु हे !
सखि ! प्रणयकोपिनी स्वविषयेषु मे *भावना* ॥

(७)

अलं हि मम भोजनं प्रतिदिनं द्विवारं तथा
गृहं परिमितं तथा वसनभूषणाद्यं च मे ।
भवत्सदृशमित्रताऽप्यहह ! सौख्यदा सर्वथा
सखि ! त्वमिव कर्मठा सुखमिहास्म्यलं *भावना* ॥

(८)

नरैरिह कृतं कृतं यदपि कर्म तत्तथा
स्त्रियाऽपि विधया तया सकलमेव निर्वर्त्यते ।
शरीर इह लिङ्गिनां अपि विभेदमात्रं मुधा
कृतं कृतकसाधनैस्सुखमपीति मे *भावना* ॥

(९)

सखि ! प्रतिपुरं जगत्यखिलकर्मनिर्वर्तने-
ष्वनेकविध यन्त्रवत्परिकरा भवन्त्येव हि ।
प्रतीत इह रेडियो-टिलिविजन्-मुखे यन्त्रके
विलासविषयेऽत्र मे गृहसुहृन्मयी *भावना* ॥

(१०)

वयः परिणतौ तथा भवति यत्र वृद्धाश्रमो
धनं यदिह सञ्चितं तदपि वृद्धिमत् साह्यदम् ।
तदेति भवितव्यतां अपि विचिन्त्य भूयस्सखि !
त्वयीति विनिवेदये स्ववशतैव मे *भावना* ॥



# भावना

–कृष्णदत्तः शर्मा शास्त्री,
८१ जवाहरगंजः, हापुड़नगरम् (गाज़ियाबाद) उ.प्र.

(१)

दिवंङ्गतैः सुसैनिकैः, सुरेन्द्रलोकसंस्थितैः
स्वजन्मभूसुरक्षकैः सुराङ्गनाभिरर्चितैः ।
विलोक्यते यदा तु तैर्महीतलं सुविस्तृतम्,
तदा प्रशस्यते मुदा, शुभाऽस्मदीय*भावना* ॥

(२)

स्वशीर्षदानतत्परैर्महाबलैः रणोद्भटैः,
विपक्षमानमर्दकैः स्वभूमिमानरक्षकैः ।
सदास्त्रशस्त्रसज्जितैर्गतप्रमादमत्सरैः
सुसैनिकैः प्रदर्शिता रणे प्रवीर*भावना* ॥

(३)

कृषीवलैः कृतोद्यमैः सदारपुत्रपौत्रकैः
सुकृष्टिकर्मसाधकैर्महामनस्विभिर्नरैः ।
विशुद्धकर्मकारकैर्महाशयैः श्रमाश्रितै-
र्दिवानिशं प्रपोष्यते सदा सदैक्य*भावना* ॥

(४)

प्रफुल्लितैर्द्रुमैः शुभैर्मनोहरैः स्वपत्रकै-
र्मृदुप्रसूनगुच्छकैर्मधुव्रतालिचुम्बितैः ।
मुदर्तुभिर्निरन्तरं विना प्रमादमेव तु,
प्रमण्ड्यते महीतले सदेयमेक*भावना* ॥

(५)

स्वकण्ठनिःसृतैः स्वनैर्मनोहरैः प्रमोददै-
र्दिनोदये निशामुखे, वनेऽथवा महावने ।
पतत्त्रिवृन्दकैः शुभैर्विभिन्नपादपाश्रितैः,
प्रगीयते निरन्तरम्, महेशभक्ति*भावना* ॥

(६)

महोच्चशृङ्गशोभितैर्मनोहरैर्महीधरै-
र्महावनोपवाटिकाप्रशोभमानशेखरैः ।
पयोधरैः सुमण्डितैर्जलौघदानतत्परैः
सुरक्ष्यते प्रतिक्षणं सदेयमेक*भावना* ॥

(७)

उदन्वता तरङ्गकैर्मुहुर्मुहुर्गतक्लमैः,
कदाचिदुग्रभीषणैर्भयङ्करैर्भयप्रदैः ।
कदातिकोमलैः शुभैः प्रतिक्षणं शनैः शनैः
समन्ततः प्रसार्यते सदाऽस्मदीय*भावना* ॥

(८)

महातिकृष्णवर्णकैः कदा विचित्रचित्रकैः
भयङ्करैर्लयङ्करैर्मनोहरैश्च सुन्दरैः ।
जलप्रवर्षणोत्सुकैर्विशालकायवारिदैः,
प्रपोष्यते सदैव नः सदैक्यवृद्धि *भावना* ॥

(९)

भुवस्तले वसन्ति ये, भवन्तु ते निरामयाः,
स्वतन्त्रतन्त्रिता लसन्तु विश्वमानवाः ।
न केन कोऽपि कुत्रचिद् भवेन्नरोऽपि निन्दितो,
भवेद् दृढा च सुस्थिरा, सदेयमेक*भावना* ॥

(१०)

सुचिन्तकैर्मुनीश्वरैर्महामनस्विभिर्नरैः
परोपकारतत्परैर्दयारतैः कृपापरैः ।
अहिंसकैर्विकल्मषैः स्वधर्मशास्त्रपोषकैः,
समर्थिता सदा हि नः परोपकार*भावना* ॥



# भावना

—श्रीसुन्दरराजः
२१, वी.आय्.पी. कालोनी एकाम्रविहारः, नयापल्ली भुवनेश्वरम्-७५१०१५

( १ )

भवाभावकृते भाष्ये भवाभावकरे भुवः ।
विना भावं विना भो वः भवे भवतु *भावना* ॥

( २ )

भवने नवतीतमोषणे पटमोषे पथि घोषयोषिताम् ।
पटुमीक्ष्य सुतं यशोदया कलिता काचन शास्ति*भावना* ॥

( ३ )

काममेधयति कामिनी यथा काऽप्यलङ्कृतिमती सुवर्णिनी।
कान्तकोमलपदा कवेरियं काव्यबन्धरचनासु *भावना* ॥

( ४ )

दुरन्तदुःखेन कदाऽपि दूयसे कदाऽपि संतोषवशेन नन्दसि।
शुचा मुदा वा तव याऽत्र सा सखे मरीचिकावन्मनसो हि *भावना* ॥

(५)

व्यतिकरैस्समयस्सुखदायिभिः द्रुतमयैति विलम्ब्य किलान्यथा।
द्रुतविलम्बितता समये न सा मनसि काचन केवल*भावना* ॥

(६)

कवितेति काव्यवनिता सकामना
कलिकेव काऽपि हसिता सवासना ।
करणोपकारकरणी सवेदना
भविता मयीति मम काऽपि *भावना* ॥

(७)

सावलेपकोपतापपापलोपकारिणी
शोषदोषपोषरोषशेषमोषकारिणी
श्रान्तितान्त्यशान्तिदान्त्यनन्तशान्तिदायिनी
रागभोगरोगवेगनाशिनीश*भावना* ॥

(८)

सुगन्धिसुमनोभरैरतिमनोहरैराहृतैः
समेत्य विनयान्वितैस्सततमर्चनीयान् गुरून् ।
सदा सदुपदेशदान् सदयमस्मदर्थेऽस्तु नः
प्रति प्रतिपदं प्रतिक्षणमुपासिनी *भावना* ॥

( ९ )

**परमपुरुषे न्यस्तात्मानः परावरवेदिनः**
**परमकृपया यान् वीक्षन्ते स्वातोऽनुजिघृक्षवः ।**
**परमगहने शास्त्रेऽप्येषां प्रवेशमनीयुषां**
**परमसुलभा प्रत्युत्पन्ना प्रसीदति *भावना* ॥**

( १० )

कान्तालापपरा नितान्तमधुरस्थानोदयन्मूर्च्छना
वीणानादकृतप्रिया लयसुधाहृद्धारि कण्ठोज्ज्वला ।
सुस्वाद्यस्वरसोदया त्वयि गता गीतिर्यथा रीतिमत्
यारोहत्यवरोहति प्रियतमे रागान्विता *भावना* ॥



# भावना

–डॉ० मीरा द्विवेदी
संस्कृत प्राध्यापिका; वनस्थली विद्यापीठं वनस्थली (राज०)

(१)

विहाय राज्यं भरताय भाविनं
वनं गतः सानुजजानकीयुतः ।
ह्यकामरामोऽनुजभावभावितः,
भव्यैव तस्याद्‌भुतबन्धु*भावना* ॥

(२)

यदा न रामो निजराज्यभारकं
गृहीतवान् नैव वनान्तरे तदा ।
शिरोऽवधार्य शुभपादपादुके,
तपश्च तेपे भरतस्य *भावना* ॥

(३)

विलोक्य रामं मदनं विमोहकं,
स्वसा वने सा ह्यसुरस्य मोहिता ।
क्षुरेण कृत्ते कलकर्णनासिके,
कुरूपिणी सान्वितकाम*भावना* ॥

(४)

वनेऽतिघोरे वनिताऽपहारिणम्,
निकामभीमं भयभीतरावणम् ।
जटायुवीरो हृतवान् निशाचरं,
बलीयसी पक्षिसु भक्ति*भावना* ॥

(५)

बली स बाली बलवीर्यवर्धितः,
प्रियं सुकण्ठं निजबन्धुशोभनम् ।
प्रियां च राज्यं हृतवान् कपीश्वरः,
गता क्व तस्याद्भुतबन्धु*भावना* ??

(६)

प्रियारुमायै हृतराज्यकामुकः,
वधाय बन्धोर्बलवीर्यशालिनः ।
गतः सुकण्ठः शरणं तपस्विनो
गता क्व तस्याद्भुतबन्धु *भावना* ??

(७)

विभीषणो भीषणरावणानुजः,
प्रहारितो रावणपादपीडितः ।
हितं श्रुतं तेन न तद्वचस्तदा,
गता क्व तस्याद्भुतबन्धु *भावना* ??

(८)

स्वदेशलंङ्कामपमानपीडितो
विहाय बन्धुं रघुनाथभावितः ।
समुद्रतीरं त्वरितं समागतः,
गता क्व तस्याद्भुतभ्रातृ*भावना ??*

(९)

जगाम रामं शरणं रणातुरो
विहाय लंङ्काहितकारिभावनाम् ।
विभेदकारी निजराष्ट्रघातको
गता क्व तस्याद्भुतराष्ट्र *भावना* ??

(१०)

रणे विजेता दशकण्ठघातको
ह्यशोकवृक्षादवमोच्य जानकीम् ।
स्वदेशयात्रां कृतवान् सपुष्पको,
हृता न केनापि सुराष्ट्र*भावना* ॥



# भावना

–कैलाशनाथो द्विवेदी
मथुराप्रसादमहाविद्यालयः, कौंच (जालौन) उ०प्र०

(१)

न दीनता न हीनता,
न लोललोभलालसा ।
नरे प्रभासते तदा,
प्रभाविभव्य*भावना* ॥

(२)

दमो न संयमः क्वचित्,
प्रकामकामपीडिते ।
न कामनाऽऽकुले नरे,
विभूषिताऽस्ति *भावना* ॥

(३)

न शूरता न वीरता,
न धीरता धुरीणता ।
अरे ! नरे मृतेव हा !
मृगेन्द्रता नृ*भावना* ॥

(४)

न धार्मिकी क्वचिन्मतिर्न
कर्मणि क्वचिद्रतिः ।
गतिर्न लोकजीवने
न दृश्यते सु*भावना* ॥

(५)

न वाचि सत्यवादिता
ह्यसत्यता क्षणे क्षणे ।
पदे पदे विलोक्यते,
कुनीतिजा कु*भावना* ॥

(६)

परोपकारिणां कथा,
तथा तथागतच्छविः ।
प्रदूष्यते नृराक्षसै-
रहिंस्त्रभव्य*भावना* ॥

(७)

न राष्ट्रप्रेमपावनं,
न राष्ट्रकीर्तिगौरवम् ।
न राष्ट्रशत्रुध्वंसनं,
न राष्ट्रियैव *भावना* ॥

(८)

श्रमे रतिर्न नागरे,
प्रजागरे मतिश्च न ।
गतिर्न विद्यते पथि,
प्रसुप्तकर्म*भावना* ॥

(९)

अमूल्यमर्त्यजीवनं,
क्व मूल्यहीनजीवनम् ।
न जीवनं मृतं नरे,
मृतेव भव्य*भावना* ॥

(१०)

स्वदेशदिव्यदीपकाः !
तमोऽन्धदोषदुर्गुणे ।
विशालविश्वप्राङ्गणे
प्रकाशनीय*भावना* ॥



# भावना

–पं. रामानुग्रहशर्मा
शास्त्रचूडामणिर्विद्वान्, राजकीयसंस्कृतमहाविद्यालयः राँची (बिहारराज्यम्)

–द्वादशात्मकाक्षर-स्त्रग्विणी-छन्दसा–

(१)

चञ्चले जीवने सात्विकी भावना
कायिकी वाचिकी मानसी साधना ।
मामकी कामना राष्ट्रसेवा परा
देशसेवामयी मे भवेद् *भावना* ॥

(२)

भारतीया मही निर्जरैः सेविका
लालिता पूजिता देशभक्तैः सदा ।
रक्षिता प्राणदानैः सुपुत्रैः प्रिया
ताम्प्रति स्यात्प्रतिष्ठामयी *भावना* ॥

(३)

एकतापोषिका मानवे सुस्थिरा ।
शान्तिबीजाङ्कुरा द्रोहमोहापहा ।
ज्ञानगङ्गामयी मोक्षदा मङ्गला
भूतले स्यात्पवित्रा सुधा *भावना* ॥

(४)

बालहिंसामयी जीवहिंसामयी
दीर्घतृष्णामयी द्रोहबीजाङ्कुरा ।
नृत्यति दृष्टिभीतिप्रदा कुत्सिता
सर्वतः क्लेशदा दानवी *भावना* ॥

(५)

तृष्णया लालिता दुःखदा पूतना
शासने नीतिमार्गे रणे जीवने ।
ग्रामभागे पुनर्दीर्घदावानला
वर्द्धतेऽहर्निशं दानवी *भावना* ॥

(६)

शोषिता पीडिता शोचती[१]ला क्रुधा
मे सुता भ्रष्टमार्गे स्थिताः सर्वथा ।
देवलोकं गता ब्रह्मलोकं गता
विष्णुलोकं गता वा दया*भावना* ॥

(७)

भेदबुद्धिं गता मानबुद्धिं गता
मोहपाशैर्निबद्धा वयं शत्रुणा ।
दुष्टक्रोधेन नित्यं भवे छद्मना
सृष्टितो निर्गता हा ! दया*भावना* ॥

१ शोचति + इला (इला=पृथ्वी)

( ८ )

भूपते ! श्रीपते ! कृष्ण ! राधापते !
साधुता हन्यते क्रुद्धकंसैः क्रुधा ।
शासका निर्दयाः स्वार्थवृत्तिं गता
निष्क्रिया भूतले हा ! दया*भावना* ॥

( ९ )

पालिताः क्रोडतल्पे मदीयाः सुता
वीरमेधाविनो शेषरूपंधराः ।
पीडिता स्यात्कथं नाकतुल्या धरा
ताम्प्रति स्यात्प्रतिष्ठामयी *भावना* ॥

( १० )

सज्जनाः सत्यमार्गे सदा निर्भया
रक्षिताः पूजिताः कन्यकाः स्युः सदा।
छात्रवृन्दे प्रसन्ना भवेच्छारदा
वर्द्धतां माधुरी मानुषी *भावना* ॥



# भावना

–डॉ० प्रशस्यमित्रशास्त्री
बी-२९, आनक-नगरं (जेलरोड) बरेली उ०प्र०

(१)

विविधदुष्टविचारविवर्जितम्
अमलतादिगुणैः सुविभूषिताम् ।
सुहृदशेषवृतं मम यन्मनः
वसतु तत्र सदा शुभ-*भावना* ॥

(२)

मलयजं प्रददाति न शीतताम्
सरसिजं न च कोमलतां ददौ ।
यदि मनः परिपूर्णमिहाऽऽधिभिः,
क्व नु तदा प्रभवेच्छुभ-*भावना?* ॥

(३)

वसतु कश्चिदहो ! न गृहं विना,
भवतु नो जनता च बुभुक्षिता ।
न तु जनश्च भवेत् कुपितः क्वचित्
सरतु शान्तिरियं मम *भावना* ॥

(४)

हरति कस्य मनो न यशस्विनः?
पवन एष सुमन्दगतिर्वने ।
यदि च कूजति तत्र च कोकिलः
भवति का च तदा वद *भावना?* ॥

(५)

कमल-कोशगतो भ्रमरो यदि
सततमिच्छति जीवनमात्मनः ।
परमहो ! करिणा च विमर्दितः
कथमहो ! दुरिता वद *भावना?* ॥

(६)

चरणमेव यदा न चलत्यहो !
शरणमस्ति सदैव तदा प्रभोः ।
इह पदेषु च चञ्चलता यदा
नहि तदा मनसि प्रभु-*भावना* ॥

(७)

वचनमस्ति यदा मधुरं मुखे
सहनमस्ति च दुःख-सुखे समम् ।
हसनमस्ति तथा त्वधरेषु यत्
मनुजबुद्धिषु सा सुर-*भावना* ॥

(८)

स्मरणमेव यदा न कृतं प्रभोः
चरणमेव धृतं न पितुर्यदा ।
वरणमेव कृतं न गुरोर्यदा
वद कथं नु तदा वर-*भावना?* ॥

(९)

भवनमस्ति न भाजनमस्ति वा
सलिलमस्ति न पेयमहो ? क्वचित् ।
वसनमस्ति न देहगतं यदा
न जनतन्त्रमिदं मम *भावना* ॥

(१०)

यदि सहर्षमिदं हि समर्पितम्
निजवपुर्भरते भुवि साम्प्रतम् ।
भवति सा न हि केवल-मृत्तिका
परमिदं जननी-गत-*भावना* ॥



# भावना

–शिवदत्तपाण्डेयः

एम. ए. (हिन्द्यां संस्कृते च) साहित्याचार्यः,
सुभाषनगरम्, सैनी, कौशाम्बी–२१२२१७

(१)

देववाणी वरेण्या समेषां कृते ।
दीयते सद्गतिः तन्यते चेतना ।
शिक्ष्यते नम्रता प्रार्थ्यते जागृतिः ।
वन्दनीया सुरैः भारती-*भावना* ॥

(२)

संस्कृते संस्कृतिः झङ्कृताऽलङ्कृता ।
भारतीयैः चिरात् सादरं सेव्यते ।
राष्ट्रसंस्कारकर्त्री सतां वल्लभा ।
प्रीतिगर्भाऽस्मदीया मनो*भावना* ॥

(३)

राजतन्त्रं निरस्यैकभावङ्गतैः ।
प्राणिभिः लोकतन्त्रं सदा सेव्यते ।
ज्ञानदीपेन या हन्ति जाड्यं धियो-
वर्धतां सा स्वराष्ट्राङ्गणे *भावना* ॥

(४)

सुष्ठु राष्ट्रं सदा रक्ष्यते सैनिकैः ।
'नाभिकी'-शक्तिराविष्कृता नूतना ।
राजवैज्ञानिकैः व्यस्तचित्तैः ध्रुवम्
सैन्य-विज्ञान-वृद्धिस्तु मे *भावना* ॥

(५)

शान्ति सन्देशदक्षः स्वदेशो भवेत् ।
सङ्गरे क्रूरकालोऽग्निविस्फोटकः ।
'पाक'-शिक्षाप्रदाने समर्थो भवेत् ।
नूनमेतादृशी मेऽस्ति सद् *भावना* ॥

(६)

वर्तते यत्र देशे सदाऽखण्डता
प्रेजते यत्र आतङ्कवादोऽधुना ।
विश्ववन्द्ये तथा लोकतन्त्रप्रिये ।
भारते भातु भव्या शुचिर्*भावना* ॥

(७)

धर्म-सङ्कीर्णतां स्वार्थ्यवृक्षं गुरुम्
उग्रवादञ्च वा क्षेत्रवादं कटु ।
जातिवादं समुन्मूल्य संस्थापिता
शासकैरेकताप्राप्तये *भावना* ॥

(८)

राजनीतौ सदा सर्वकारेण वै
सर्वधर्मादरो दीयते सर्वथा ।
दुर्लभा सर्वराष्ट्रेषु या भावना
भारते शोभते सा प्रिया *भावना* ॥

(९)

साम्प्रतं भारते मार्गभ्रष्टाः जनाः
धावमानाः मिथश्चालपन्तो मुधा ।
कामयन्ते कथं 'शासनं' लप्स्यते
द्वेषजाता क्वचिद् दृश्यते *भावना* ॥

(१०)

देशतो यान्तु दूरं नराः दम्भिनः ।
कूटनीतौ प्रवीणाः जनाः वञ्चकाः ।
नायकाः सन्तु राष्ट्रे विशुद्धाशयाः ।
विद्यते मे हि चित्ते त्वियं *भावना* ॥



# भावना

–डॉ० बनमाली विश्वालः
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
आज़ाद पार्कः, इलाहाबाद-२११००२

(१)

विहाय पत्नीं पितरौ सुताः सुतान्
अहर्निशं युद्धरतोऽस्ति सैनिकः ।
तृणाय नूनं मनुते स्वजीवनं
महान् स धन्या खलु तस्य *भावना*॥

(२)

तथा न सीमोद्वेलिताऽद्य कारगिले
उपद्रवोऽप्यस्ति रिपोः प्रशामितः ।
विवाहितानां पतयोऽत्र के मृताः
अप्यत्र तासां व्यथिता न *भावना* ॥

(३)

करोति देशस्य हितं स्वकर्मभिः
ददाति देशाय सदाऽऽत्मनो बलिम् ।
नमत्यहो ! मस्तकमद्य तत्पुरः
महीयसी राष्ट्रपराऽत्र *भावना* ॥

( ४ )

प्रिये ! त्वमासीः प्रथमा ह्युपासना
प्रिये ! त्वमासीः प्रणयस्य चार्चना ।
प्रिये ! ममास्यत्र विदेहकामना
प्रिये ! ममास्यत्र वरेण्य-*भावना* ॥

( ५ )

क्वचित् प्रिया काव्यगता विराजते
क्वचित् प्रिया प्रीतिगताऽपि राजते ।
कवेः प्रिया काव्यगता व्यथा क्वचित्
प्रियां विना क्वास्ति कवित्व-*भावना* ॥

( ६ )

स्वजायया चेद् विहिताः कटूक्तयः
स्वपुत्रपौत्रैश्च गृहाद् विताडितः ।
अभिन्न-मित्रेण यदि प्रवञ्चितः
मनोगता स्याद् विहताऽत्र *भावना* ॥

( ७ )

गृहे न भोक्तुं कणशोऽपि तण्डुलः
यथा-कथञ्चित् समयोऽपि यापितः।
अविद्यमानेऽपि सुखस्य साधने
न बाधिता राष्ट्रगता हि *भावना* ॥

(८)

न जीवने प्रेम सकृत् प्रदर्शितम्
विवाहमात्रेण च याऽद्य मे प्रिया ।
विधौ तु जाया भवितुं क्षमाऽस्ति सा
कपोलकल्या प्रणयस्य *भावना* ॥

(९)

मतप्रकाशे सततं निवारिताः
कदा स्व-पित्राऽथ कदा स्वभर्तृणा ।
कथं स्वतन्त्राः जगतीह तास्त्रियः
पदे-पदे चेद्बाधिताऽस्ति *भावना* ॥

(१०)

विधाय वैज्ञानिकशास्त्रवेदयोः
समन्वयं सार्थकमद्य संस्कृतम् ।
युगाब्दके संस्कृतशुद्धवत्सरे
सदाऽस्तु संस्कारयुता हि *भावना* ॥



# भावना

—पद्मशास्त्री
१२८, मुक्तानन्दनगरम् गोपालपुरामार्गः, जयपुरम्-१८

( १ )

उद्गमन्तं हिमं कृष्णमेघावृतं
मानवैरप्यगम्यं भृशं प्रोन्नतम् ।
कारगिलं नामकं शैलराजं जितं
सेनया दर्शिता राष्ट्रिया *भावना*॥

( २ )

राष्ट्रभक्तान् सशक्ताँस्तथा जित्वरान्
प्राणदानोद्यतान् राष्ट्रभूमुक्तये ।
सङ्गरे ब्रह्मसायुज्यमाप्तान् सुतान्
पूजयामो हृदि स्यादियं *भावना* ॥

( ३ )

कण्ठपाशेन मृत्योर्मुखं प्रापिता
राष्ट्ररक्षाव्रता भारते सैनिकाः ।
दिव्यदेहाँश्च तान् विस्मरामः कथं,
तान्नमामो वयं स्यादियं *भावना* ॥

(४)

सम्प्रजातश्च स्वातन्त्र्यसूर्योदयः
सर्वतः शक्तिसम्पन्नदेशोऽप्ययम् ।
कृष्णसम्बोधितो हा, विषादङ्गतो
वृद्धिमाप्ता हि दौःशासनी *भावना* ॥

(५)

पुण्यभागीरथीनिर्झरैः पाविता
श्यामला पुष्पसम्पत्समृद्धा सदा ।
देववन्द्याऽभिनन्द्या धरा पुण्यदा
शर्मदा स्याज्जनानामियं *भावना* ॥

(६)

राष्ट्रमेतत्कथं व्याकुलं वर्तते ?
स्नेहशून्या जनाः स्नेहशून्या दिशः
सङ्कटे वर्तते जन्मिनां जीवनं,
हा विलुप्ता कथं राष्ट्रिया *भावना?*॥

(७)

भूरियं वीरभोग्या प्रतापस्य वै
वर्तते पावनी-मीरयाऽलङ्कृता ।
विश्रुता पद्मिनी जौहरज्वालया
हृत्सु सर्वेषु व्याप्ता भवेद् *भावना* ॥

(८)

विश्वबन्धुत्व संदेशसंवाहकं
विश्वमञ्चेऽधुना सत्प्रतिष्ठाङ्गतम् ।
भारतञ्चार्तसंरक्षणायोद्यतं
विश्वमञ्चे प्रतिष्ठाङ्गता *भावना* ॥

(९)

राष्ट्रमेतत्समृद्ध्युन्मुखं दृश्यते
वर्तते नात्रदुःशासनं शासनम् ।
सत्कला संस्कृतीनाञ्च संरक्षका
शासका नः सदा सन्त्वियं *भावना* ॥

(१०)

विश्वरूपं भवेन्नैव संहारकं
घातकाण्वास्त्रशस्त्रादिभिर्वर्जितम् ।
शेषणं निर्धनानान्न स्यादीश्वरै
राष्ट्रसङ्घेऽपि व्याप्ता भवेद् *भावना*॥



# भावना

–डॉ० रामाशीषपाण्डेयः
आचार्योऽध्यक्षश्च–संस्कृतविभागस्य मारवाड़ी महाविद्यालयः, राँची

( १ )

या माता द्रुतमेव हन्ति दुरितं या भूतले संश्रिता
या भूतान् परिरक्षतीति विदिता मायान्विता मायया ।
यस्या विश्वमिदं जगद्धनयुतं रत्नस्वरूपात्मकं
तां देवीं प्रणमामि भक्तिसहितो मे राजते *भावना*॥

( २ )

यं ब्रह्मेति वदन्ति वेदनिरता वेदान्तिनो वैष्णवा
विष्णुं रुद्रमुपासते प्रतिदिनं शैवा महायोगिनम् ।
अल्लेत्युच्चरवेण मुस्लिमगणा प्रोच्चासने संस्थिता
ये वाञ्छन्ति तमीश्वरं त्रिभुवने तेषामियं *भावना* ॥

( ३ )

धर्मो यत्र समानभावसहितोऽहिंसां विना विश्रुतो
बौद्धा जैनमतान्वितास्त्रिभुवने लोकान् दिशन्त्यादरात् ।
निष्कार्म प्रथितञ्चं कर्मनितरां कृष्णस्य लोकोदये
देशोऽयं गुरुरस्ति यस्य सकला सम्पूज्यते *भावना* ॥

( ४ )

ईशुं यं गिरिजागृहे प्रतिदिनं ख्रीस्ताः सदोपासते
सिक्खाश्चापि परात्परं सुभवने गत्वा गुरोर्द्वारके ।
अल्लां मस्जिदशृङ्गतो मुसलिमा देवं पुनः मन्दिरे
तं पूज्यं ननु हिन्दवः श्रुतिमुखैः संराजते *भावना* ॥

( ५ )

एकत्वस्य विधायिका त्रिभुवने या संस्कृता भारती
वैषम्यस्य विवृद्धपादपचयानुन्मूलने संरता ।
सर्वे सन्ति कुटम्बिनो गृहमिदं नूनं समेषां जगत् ।
ब्रूते या सततं विभाति सकला तस्याः सृता *भावना* ॥

( ६ )

या मातेव ददाति पुत्रनिवहेभ्यः पातुमच्छं पयः
निर्दोषं गुणकारकं रसभरं ज्ञानामृतं शोभनम् ।
पीत्वा येन नरत्वभाववलिता पुत्राश्चरित्रान्विता
जायन्ते सुरभारती विजयते तस्याः सृता *भावना* ॥

( ७ )

भूयाद् विश्वमिदं समग्रजनताभावस्य संरक्षकं
शिक्षा चार्थसमन्विता बहुविधा न्यायेन युक्ता भवेत् ।
अज्ञानं नहि भूतलस्य नितरां तिष्ठेन्नृणां मानसे
पीयूषं सततं ददातु मुदिता विद्येति मे *भावना* ॥

(८)

नग्ना नैव भवन्तु मानवगणा वस्त्रं विना भूतले
खाद्यान्नं सुलभं भवेदिह सदा नो मृत्युरन्नं विना ।
आवासे निवसन्तु केऽपि नितरां पश्यन्तु नो तारकं
भ्रातृत्वेन युता वदन्तु मधुरां वाणीञ्च मे *भावना* ॥

(९)

उग्रा यत्र भवन्ति मानवगणा धैर्यं विना भूतले
कार्यं नैव कदापि शान्तमनसा कुर्वन्ति देशोदये ।
लोके ध्वंसकवृत्तयः प्रतिदिनं वृद्धिङ्गता तामसै-
र्निर्गच्छन्तु विभातु तत्र सकला सत्वाश्रिता *भावना*.॥

(१०)

काले वर्षतु वारिदो नवनवैरन्नैर्युतेयं धरा
सूर्यः सौख्ययुतैरनन्तकिरणैर्भूयाद् बलोद्वर्धकः ।
अस्त्रं लोकविनाशकं नहि भवेद् यस्माद्विभीता नरा
लोके तिष्ठति मानवस्य सततं सत्याश्रिता *भावना* ॥



# भावना

–शालिहासः सिरसा
धानाकटली स्ट्रीट-घण्टाघरः, सिरसा, हरियाणा-१२५०५५

(१)

भारतीयास्पदाः शक्तिमन्तो वयम्
उन्नतीप्सावतामग्रपद्गामिनाम् ॥
कर्गले दर्शितं यद् बलं वीर्यजम् ।
हन्त ! सा व्याप्नुयाद् राष्ट्रिया-*भावना*॥

(२)

ज्ञान-विज्ञान-विस्तारणे वा रणे
जाड्य-विद्रावणेऽथो क्षुधा-वारणे ॥
जायतां, जीयताम् शत्रु-मर्द-क्षणे
भारतीये जने चैकता-*भावना* ॥

(३)

शक्तिशौर्यान्विता वै बलिप्रेरिका
भारते, भातु, भी-हारिणी भव्यदा ॥
गर्वविध्वंसिनी गौरवोद्घाटिनी
कर्गलोद्-भाविनी देशजा-*भावना* ॥

(४)

जागृयाद् भारते भा-रते, तज्जने
विश्वकल्याणभावैर्भृता भावुका ॥
दुष्ट-शत्रु-प्रणाश-प्रकृष्टोत्कटा
द्वेषविच्छेदनोन्नोदिनी *भावना*॥

(५)

जन्मभूर्भूयसी स्वर्गतः सम्मता
स्वप्रसूः पूजनीया गरीयस्यसौ ॥
तत्कृते चेन्मृतिः सा शुभा भारते
प्रेयसी जायताच्छ्रेयसी-*भावना* ॥

(६)

कोऽपि पश्येद् भुवं भारतीं-मातरम्
आसुरैः दृश्यतेऽनार्यकैः मा मृतिः ।
मूर्तिमेकां जनश्चेक्षते तादृशीम्-
यादृशी स्याद्यदीयेक्षणा-*भावना* ॥

(७)

औषधाऽऽहारणे वेश्वराऽऽराधने ।
भाग्यनिष्ठाविधौ, मन्त्र-संसाधने ॥
ज्यौतिषाऽऽमर्शने गुर्वभिः व्राजने
सिद्धिदा सर्वदा प्रत्यया *भावना*॥

( ८ )

आत्मजाभिस्त्वमा, चेद्रमण्या सह
मातृणां सन्निधौ, स्वसृणां-सङ्गमे
तद्विविविक्तेक्षणे त्रायते मानुषम्
स्त्रीत्वमुत्सृज्य सद्भेदिका-*भावना* ॥

( ९ )

यः करोतीह दुष्कर्म पापाऽनुगः
याति विष्टिं तथा प्राप्नुते दुर्गतिम् ॥
सत्कृतिर्मानभाग् भुञ्जते वैभवम्
तादृशं वैफलं यादृशी-*भावना* ॥

( १० )

जागृतिः, स्वापनं, चारणं-त्रासनम्
सर्वमेतत्समं, सन्नृणां, पाशवैः ॥
यद्धि वैशिष्ट्यमत्रेक्ष्यते मानुषे
सा विवेकान्विता धार्मिकी-*भावना* ॥



# भावना

—वागीशो 'दिनकरः'
सुप्रवाल सर्वोदयनगरं पिलखुवा-२४५३०४ (गाज़ियाबादः) उ.प्र.

(१)

न कामयेऽहं हविषा हुताशनं
यजन् लभेय त्रिदिवेशशासनम् ।
विजित्य विश्वं नरदेववाञ्छितेऽ-
थवा सुराज्ये नहि मेऽस्ति *भावना*॥

(२)

परं विभुं सन्ततमेव भावयन्
अहं महेशानमिदं निवेदये ।
द्रढीयसी स्यान्मम विश्वनिष्ठता
सदा प्रवर्धेत च राष्ट्र*भावना* ॥

(३)

धनानि भूमौ पशवश्च गोष्ठके
निवत्स्यतीहैव समं वपुःक्षये ।
ध्रुवं यशो राष्ट्रभरं भविष्यति
सदा प्रगीयेत च राष्ट्र*भावना*॥

(४)

विहाय सर्वं परिवारबन्धनं
विमुच्य रागं रमणीरमाश्रितम् ।
प्रयान्ति यद् वीरवरा रणाङ्गणं
चकास्ति तत्रापि नु राष्ट्र*भावना* ॥

(५)

प्रिया प्रियं स्वं पितरौ निजं सुतं
प्रचोदयन्ते शिशवः स्वपोषकम् ।
यदर्थमाजौ सविवेकमाग्रहाद्
असौ समाशिलष्यति राष्ट्र*भावना* ॥

(६)

हतः शरैः स्वैरपि येन रावणो
जिताऽपि लङ्का ननु हेममण्डिता ।
तथाप्ययोध्या रघुनन्दनेप्सिता
ध्रुवं तदा खेलति राष्ट्र*भावना* ॥

(७)

प्रियः प्रियाणामपि चन्द्रशेखरः
विशेषभक्तो नरसिंहलक्षणः ।
जहावसून् स्वानशफाकबिस्मिल-
स्तदापि हेतुः खलु राष्ट्र*भावना* ॥

(८)

सतां मता या सततं महात्मनां
महाकवीनामपि याऽस्ति कीर्तिदा ।
कलाकृतां या कमनीयसत्कथा
विराजते सा शुभराष्ट्र*भावना* ॥

(९)

न शोभते भूर्विरलैकपण्डिता
न राजतेक्ष्मा महिमैकमण्डिता ।
मही तदा दीप्तिमती विराजते
यदा भवेत् तन्नृषु राष्ट्र*भावना* ॥

(१०)

न देहपुष्टिर्न कुटुम्बतोषणं
न वर्गवादो न समार्जविश्रुतिः ।
नरस्य कल्याणकरं सतां मतं
सुधीशमान्या खलु राष्ट्र*भावना*॥



# भावना

–डॉ० नागेन्द्रकुमारः भगो
व्याख्याता (संस्कृत)
समस्तीपुर-महाविद्यालयः समस्तीपुरम्, बिहारप्रदेशः-८४८१०१

(१)

इयमनेकप्रतीकप्रवर्तिता,
परमनल्पप्रबोधनतत्परा ।
यदपि कामप्रभृत्यरिसङ्गता,
तदपि नोपरता हृदि *भावना* ॥

(२)

सपदि काव्यप्रवर्तनतत्परः
मम मनः कवयत्यतिसंशये ।
परमयोगतकर्षणवत्क्रियां,
प्रतिनियोजयतीह च *भावना* ॥

(३)

सुकृषिकर्मपराः कृषका इह,
भवतु रक्षणकर्मपरो भटः ।
निपुणराजक्रियानिरताः नृपाः,
भवतु वृद्धिपरा शुभ*भावना* ॥

(४)

प्रभातसामान्यरुचिः प्रसिद्धा,
न केवलं राजगृहेषु संस्थिता ।
स्वर्णाकृतिः राजगृहेषु तिष्ठति
सतां महच्चेतसि सा तु *भावना*॥

(५)

इयं मनोभावगता प्रतीयते,
न केवलम्वाग्व्यवहारतोऽपि वा ।
न शीतलश्चन्दनपादपस्थितः,
विलेपनेनैव, तथैव *भावना*॥

(६)

यथा महावृक्षगता फलस्थितिः,
न भुज्यते नैव जनाय दीयते ।
विनाशमाप्नोति समन्ततस्तथा,
विना प्रयोगेण हितस्य *भावना* ॥

(७)

भारते भारती भावितेयं सदा,
काव्यकारुण्यकामः कविः कल्पताम्।
मन्मथेनोद्धताः मानभङ्गाहताः,
मानमाप्नोतु सेयं दृढा *भावना* ॥

( ८ )

किङ्कृतिः किङ्कराणां क्रियाकल्पित-
स्तोयसम्मार्जनाभिः पुनः शोधिता ।
कर्मकालुष्यसंलिप्तकृष्णाकृतिः,
किम्परेणापि संशुध्यते *भावना?*॥

( ९ )

प्रायशः प्राङ्मुखीभिर्निमेषात्मके,
सङ्गतिर्नैव सम्पादिता सत्वरम् ।
प्राच्य-पाश्चात्यमिथ्याविवादे न वा?
जायताम्, जायताम् भारती *भावना*॥

( १० )

मीमांसानुगता नवेयमधिका वाक्यार्थसम्पादिका,
वेदान्ते पदशास्त्रनीतिनिचये न्यायेऽपि संशोधिता ।
किञ्चेयम्प्रतिकामभावनिवहा सत्कार्यसम्पादिता,
सत्सम्प्रेषणज्ञानमात्रनिरता सा मानसी *भावना*॥



# भावना

–डॉ० शिवसागरत्रिपाठी
संस्कृतविभागाध्यक्षः
राजस्थानविश्वविद्यालयः, जयपुरम्-३०२००४

(१)

वन्दनीयाऽमृता देववाणी स्मृता
निन्द्यते साम्प्रतं सा मृता कथ्यते ।
जन्मतो मृत्युपर्यन्तकं पोषिणी
या मता, तत्कृते कीदृशी *भावना*॥

(२)

संस्कृता पूर्वजानां गिरा मन्यते
देवभाषा तथा संस्कृतेः शेमुषी ।
मन्त्रभाषा प्रिया तन्त्रभाषाऽपि या
लोकभाषा भवित्री, ध्रुवा *भावना* ॥

(३)

संस्कृतं वन्द्यते संस्कृतं प्रार्थ्यते
संस्कृतं पठ्यते संस्कृतं लिख्यते ।
संस्कृतं रस्यते पूज्यते रक्ष्यते
संस्कृते हायने हर्षदा *भावना*॥

( ४ )

आर्थिकी भावना शाब्दिकी भावना
वर्णिते पूर्वमीमांसके दर्शने ।
काव्यशास्त्रे तथा शब्दशास्त्रे पुनः
ह्यर्थशब्दात्मिकी दृश्यते *भावना* ॥

( ५ )

क्वापि मे भावना, क्वापि ते भावना,
क्वाप्यहो विद्यते नौ द्वयोर्भवना।
भावना-संयुते राष्ट्रके जीयते
शस्त्रशास्त्रादिगा शक्तिदा *भावना* ॥

( ६ )

इयं स्वमातृभूः प्रिया वयञ्च तत्सुपुत्रकाः,
विकासने च रक्षणे समर्पणे समुत्सुकाः।
स्वधर्मपालने रताः विधर्मिणां च नाशकाः,
वयं सदा भवेम, नो विजेजयी तु *भावना* ॥

( ७ )

स्वदेशहृदि वर्धने स्वराष्ट्रशक्तिसञ्चये,
स्वराज्यवैभवोन्नतौ स्वनीवृतो विकासने ।
स्वगेह-बाह्यशत्रुतः स्वजन्मभूमिरक्षणे,
प्रकाशिता भवन्तु नो यशोऽवदात्त*भावना* ॥

(८)

स्वकीयकूटनीतिता बलं निधाय बुद्धितः
बलात्प्रविश्य सीम्नि नः शठप्रवृत्तिवञ्चकाः।
दुरागताः विनाशिताः स्वकैः शतघ्नगोलकै-
रियं स्वदेशवीरजा मता प्रशस्त*भावना* ॥

(९)

कृणद् दुराक्रमोद्यतं तथोग्रमाततायिनम्,
महत्प्रवञ्चनाचणं च 'पाक' देशनोदितम् ।
रणाङ्गणे बलिं विधाय राष्ट्रवीरसैनिकाः,
सदायुधा उदायुधा अरातिकानदुद्रुवन् ॥

(१०)

प्रवर्धतां धृति-क्षमा-परोपकार-भावना,
समेधतां पुनः पुनः स्वकीयकर्मभावना ।
विराजतां मनीषिणां सिते प्रसन्नमानसे,
मनः पवित्रकारिणी स्वकीयधर्म *भावना* ॥



# अहो ! कियच्छक्तिमती तु भावना

–रामेश्वरदत्तशर्मा
विकासनगरं, भिवानी हरियाणा

(१)

विचित्रमेतत् स्वजनस्य चिन्तनम्,
महद्धि दुःखं सुखरूपमीयते ।
तदा न माता मनुते स्ववेदनम्,
मृदूयति द्राग् हृदयं तु *भावना* ॥

(२)

पिता प्रसन्नो जननी च नन्दिता,
पितामहो वा भगिनी च हर्षिता ।
सुताः सुतास्ते परितुष्टिमागता,
युनक्ति भावैर्बहु ताँस्तु *भावना* ॥

(३)

जुहोति देहं समराङ्गणे मुदा
स्वराष्ट्ररक्षार्थमहोऽस्य जीवनम् ।
सुयोधशूरो, बलिदानकर्मणे,
विभावयन्ती प्रतिभाति *भावना* ॥

(४)

बिभर्ति वत्सं भजते कुटुम्बिनी,
न काङ्क्षते सा प्रतिदानमेव च ।
समर्पणत्यागरसार्द्रभावितं,
दधाति मातुर्हृदयन्तु *भावना* ॥

(५)

किमपि पात्रमहो ! विलपद् भृशं,
ह्यभिनये सुनिरीक्ष्य च कातरम् ।
अयि सखे ! हृदयं द्रवती हहा !
भवति सा करुणारस-*भावना* ॥

(६)

द्रवति दार्षदमानसमप्यहो !
विधवया रुदितेन हृदिस्पृशा ।
असमयं मरणं स्वजनस्यत-
न्न सहते विपदं मृदु*भावना* ॥

(७)

विजयमेव लषन्ति तु मानवाः
सुगुरवः पितरौ च पराजयम् ।
स्वसुतशिष्यजनात्खलु सर्वदा
प्रकृतिभङ्गकरी मृदु *भावना* ॥

(८)

प्रभुरतिं गुरुभक्तिमथाशये
सखि सखी प्रियतां पतितोषणम् ।
अखिलजीवजरागनिबन्धनं
प्रबलभावमुपैति तु *भावना* ॥

(९)

निखिल-विश्वमिदं जड-जङ्गमं,
सबलभाव-विभाव-विजृम्भितम् ।
दृषदिवाथ भवेदपिलं जडम्,
यदि भवेन्नति तत्र तु *भावना* ॥

(१०)

स्निग्ध-प्रेम-निबन्धनेन मिलितौ सार्धं मिथो दम्पती,
वात्सल्यं प्रियसन्ततौ प्रविततं चाह्लादमालम्बते ।
श्रद्धा-भक्ति-रति-प्रवाह-भरितं प्रेम्णोऽथ निष्यन्दनम्
यत्किञ्चिज्जगति प्रभाति रुचिरं सर्वं हि सा *भावना* ॥



# भावना

–डॉ० अशोककुमारडबरालः शास्त्री
वरिष्ठप्रवक्ता/उपप्रधानाचार्यः
जयहिन्दकालेज, चरथावल, मुजफ्फरनगरम्, उत्तरप्रदेशः

(१)

दमितमानसदोहललक्षणा,
विषयवीचिविवर्तविचारणा ।
हुलहुली शतधा हृदि हर्षणा,
हलहला ननु काऽपि च *भावना* ॥

(२)

पथिकचेतसि याऽस्ति विराजिता
स्वजनदर्शनलाभसुलालसा ।
मधुमयी पथि वा गृहवासना,
त्वमसि सा मसृणा ननु *भावना* ॥

(३)

हृदयमन्दिरमध्यनिवासिनी,
सकलसुन्दरता वरदायिनी ।
विविधभावमयी च विलासिनी,
वसतु मे हृदये चल-*भावना* ॥

(४)

विपदि या न कदापि विसीदति,
श‍ृणुत संपदि या न च हर्षति ।
सुहृदि वैरिणि या च समाहृता
भवति वा हृदि सा हरि *भावना* ॥

(५)

विविधभावमयी विविधेक्षणा,
सकलशास्त्रमयी च विलक्षणा ।
सकलवेदपुराणविचारणा,
त्वमसि काऽपि विलक्षण *भावना* ॥

(६)

इदमिदं मम मामकमेव भोः !
तव तदस्ति तदस्ति विवेचनम् ।
इति करोति यथाऽविदुषां मति-
र्मतिमतां न तथास्ति च *भावना* ॥

(७)

त्वमसि कामभवा रतिकामना,
त्वमसि कामविभुक्त-विचारणा ।
त्वमसि मानसजा प्रिययोजना,
त्वमसि चेतसि भाविक *भावना* ॥

(८)

जगति कापिलदु:खविडम्बना,
मनसि वाऽखिलकारणकारणा ।
अपि च यापि न मार्मिक-मार्गणा,
त्वमसि सा किल सा ललभावना ॥

(९)

ननु गता मम शैशवहर्षणा,
क्वचिदयाद् मम यौवनवासना ॥
जरित-शीर्ण-कुरूप-कलेवरे,
दहति हा विषमा ज्वरभावना ॥

(१०)

त्वमसि देहगताऽपि बहि:स्थिता,
सुविजितापि सदास्त्वपराजिता ॥
त्वमचलापि चराचरचञ्चला,
त्वमसि काप्यवशा चलभावना ॥



# भावना

–रहसविहारीद्विवेदी
आचार्योऽध्यक्षश्च, संस्कृतविभागे,
रानी-दुर्गावती-विश्वविद्यालयः जबलपुरम् ४८२००१ (म.प्र.)

(१)

एकमेवाद्वितीयं परं ब्रह्म तन्
नेह नानास्ति किञ्चिद् यतो ज्ञायते ।
सा तु सर्वोत्तमा वेदशास्त्रोदिता
योगिनां सैव ब्रह्मात्मिका *भावना* ॥

(२)

कर्म कुर्वन् ततो मर्त्यलोकं तरन्
कर्मणि क्वापि नो लीयते गाहते ।
यस्य पूर्णायुषो जीवनेच्छा शुभा
तस्य कर्मात्मिका कथ्यते *भावना* ॥

(३)

सज्जनं द्रुह्यतो दुर्जनं मुह्यतो
हार्दिकं स्वं च भावे सदा पश्यतः ।
यादृशं मानसं तादृशं दर्शनं
यादृशी कल्पना तादृशी *भावना* ॥

(४)

मन्यते विश्वमेकं कुटुम्बं स्वकं
स्निह्यति प्राणिमात्रं च कल्याणकृत् ।
यस्य दीने दया भ्राजतेऽहर्निशं
वस्तुतस्तस्य भद्रङ्करी *भावना* ॥

(५)

भारताध्यात्ममवैशिष्ट्यमेवं श्रुत-
मीश्वरः सर्वगो विद्यते व्यापकः ।
तेन चाध्यात्मनिष्ठः समं प्रीयते,
विद्यते सर्वथा तत्परा *भावना* ॥

(६)

राष्ट्रमातुः शिरो देवतात्मा गिरिः
सन्ति तस्या धमन्यो हि गङ्गादयः ।
केशराशिस्तदुद्भिद्य जाताङ्घ्रिपाः
तीर्थहृद्-राष्ट्रभक्तेरियं *भावना* ॥

(७)

नात्मनः प्रातिकूल्यं परेषाञ्चरेत्
सर्वधर्मेषु सिद्धान्त एवंविधः ।
तेन सद्धार्मिकः प्रीयते सर्वतः
सर्वभद्रङ्करी धार्मिकी *भावना* ॥

(८)

यस्य देवे न भक्तिर्न राष्ट्रे रति-
वृद्धसेवामतिर्नोपकारे गतिः ।
स्वार्थसिद्धिप्रियो विद्यते नित्यशः
तस्य चान्तर्गता राक्षसी *भावना* ॥

(९)

मानवान्तःप्रवृत्तिर्यया प्रेरितं
कायिकं वाचिकं कर्म सम्पद्यते ।
सा भवेद्दिव्यरूपा कदाचित्तदा
सैव मान्या वदान्या परा भावना ॥

(१०)

राजसी भावना रागसंवर्द्धिनी
तामसी चान्धतामेव नेनीयते ।
सात्विकैः सत्प्रवृत्तिः सदा शस्यते
भारते राजतां सात्त्विकी *भावना* ॥



# भावना

–डॉ० सुभाषवेदालंकारः
संस्कृतविभागः राजस्थान-विश्वविद्यालयः, जयपुरम् ॥

(१)

देशे विश्वशिरोमणौ सुविदिते देवैस्सदा वन्दिते
पूतं लोकमिमं विधातुममला गङ्गा नदी विद्यते ।
यस्याः पुण्यजलेन पावनजनैर्हृद्भिर्मुदा धार्यते
ईशध्यानरतैस्सुभक्तिमुदितैर्धर्मस्य सद्*भावना* ॥

(२)

राष्ट्रं भारतवर्षमस्तु सततं लोकोपकारे रतम्
शुभ्रामत्र तनोतु कीर्तिमतुलां संसारतापं हरत् ।
विद्यायाञ्च भवेत् समस्तजगतो मान्यो वदान्यो गुरुः
सर्वेषान्नु भवेदिहास्य प्रगतौ पुण्या सदा *भावना* ॥

(३)

वेदानां वचनं प्रचारमनिशं प्राप्नोतु देशे मम
भूयादत्र सरस्वती प्रमुदिता संवीक्ष्य सत्कोविदान् ।
देवानां मधुरां च वाग् भुवि भवेत् क्रीडारता सर्वदा
लोकानामियमेव स्याच्च सततं हृद्या मुदा *भावना* ॥

(४)

पाकस्था रिपवः प्रयान्तु समरे गर्तं सकष्टं सदा
अन्तःस्था अरयोऽपि यान्तु विपदो नाशं तथा सर्वदा ।
ये धर्मे परिवर्तने ननु रता ह्रासं विनाशञ्च ते
देशद्रोहरताः पतन्तु मरणे भूयादियं *भावना* ॥

(५)

ये क्रूरा इह सर्वनाशनिरता आतङ्कमुत्पाद्य हा
भूयोभूय इवात्र पापकरणे सक्तास्सदा भारते ।
मूलोच्छेदनतत्परास्सफलतां तेषाञ्च ये यान्तु ते
देशस्थास्सबलाश्च सैनिकवराः पुष्यादियं *भावना* ॥

(६)

वीणावादिनि शारदे ! कुरु कृपां त्रायस्व नो भारतम्
लोकान् प्रेरय सर्वकर्मनिरतान् सुरभाषया संस्कृतान् ।
सन्नद्धा इह सन्तु ते समुदिता देशस्य संरक्षणे
विद्येत प्रचुरा च तेषु सततं देशोन्नते*र्भावना* ॥

(७)

धैर्यं शौचमथापि सत्यमतुलं विद्या पवित्रा तथा
अस्तेयञ्च दमो मुदेन्द्रियजयः पुण्या क्षमा मानसे ।
अक्रोधश्च सुधीरिति दशविधो धर्मो य उक्तस्स्मृतौ
तस्मान्नैव भवेम दूरिमिति नो भूयात् सदा *भावना* ॥

( ८ )

पठ्यन्तां सदने सदा सहृदयैर्वेदाश्च शास्त्राणि च
श्रूयन्ताञ्च दिवानिशं सुपुरुषैर्मन्त्रा मुदा मोददाः ।
गीयन्तां दिवि सर्वदैव यशसो गीतानि नो निर्जरैः
लेख्या सर्वजनैस्स्वचित्तपटले पुण्यस्य सद्*भावना* ॥

( ९ )

शान्तिं यच्छतु द्यौरियञ्च पृथिवी लोकाय पुण्यप्रदा
आपस्सर्वविधा वनस्पतिजगत् रम्यान्तरिक्षं तथा
देवाः पापनिवारणे धृतधियश्शान्तिप्रदास्सन्तु च
दिव्यैस्तैश्च सुबोधितेषु भवतात् शन्तिस्सदा *भावना* ॥

( १० )

सरस्वती पावनदिव्यरूपताम्
निधाय दद्यात् मुदिता वरं नः ।
भवेत् समस्तेषु जनेषु सर्वदा
स्वराष्ट्र-रक्षा-करणस्य *भावना* ॥



# भावना

–डॉ० हरेकृष्णमेहेरः
प्रवाचकोऽध्यक्षश्च, संस्कृतविभागः,
सर्वकारीयमहाविश्वविद्यालयः, भवानीपाटना कालाहाण्डिः, उत्कलप्रदेशः-७६६००१

(१)

प्रयामि यस्मिन् जगती-महोदरे
त्वमेव तस्मिन् विपुले चराचरे ।
अभिन्न-मूर्ति-र्वितता शुभानना
प्रिये ! मम त्वं मनसोऽसि *भावना* ॥

(२)

प्रालेय-शैलाद् रमते कुमारिका
यदीय-संज्ञान-रसाब्धि-बोधिका ।
सद्वैजयन्ती सुयशो-विवर्धना
सा भारतीया सुभगाऽस्ति *भावना* ॥

(३)

या वैदिकैरार्यवरैर्महस्वती
मनीषिभिः सत्प्रतिभां वितन्वती ।
प्रकीर्तिता विश्वजनीन-दर्शना
मान्यैव सा मानवतेति *भावना* ॥

(४)

उदात्त-कण्ठै-र्भुवि विश्व-बन्धुता
विधीयते या नितरां जनैर्नुता ।
महानुभावा महनीय-चेतना
सनातनी सैव विभाति *भावना* ॥

(५)

ऊर्जस्वला सिंहबला समुज्ज्वला
सूर्य-प्रकाशामित-शौर्य-मण्डला ।
अजेय-सेना दलितारि-वासना
जातीयता सा जयतीह *भावना* ॥

(६)

कश्मीर-रश्मि-प्रकरै-र्विभास्वरा
विराजते वर्जित-सर्व-मत्सरा ।
प्रेम-स्वरूपा जन-शक्ति-बोधना
स्वमातृभक्ति-र्मधुराऽस्ति *भावना* ॥

(७)

किं चेष्टकै-र्बहुधनैरुपलैः श्रिया वा
नात्मीयता यदि गृहे परिवार-भावा ?
किं देश-नागरिकता कुरुते धृतासना
नेष्टा यदि स्वहृदि राष्ट्रियताऽपि *भावना* ?।

(८)

न यत्र पर्यावरण-प्रदूषिका
न वै वधू-प्राणहरा विभीषिका ।
न यत्र हिंसा शठता प्रवञ्चना
दिव्या चिरं सैव चकास्ति *भावना* ॥

(९)

सङ्कल्प-सात्त्विक-रुचा रुचिरा विचारणा
कायेन यत्र वचसा मनसा च कर्मणा ।
श्रद्धा-प्रशान्ति-ममता-समता-निबन्धना
ध्येया सुधा-मधुमती जगतीह *भावना* ॥

(१०)

प्रवर्त्तिता विश्वजनस्य संविदा
परोपकाराभ्युदया विभूतिदा ।
परम्परा-सेवित-पुण्य-साधना
भूयात् सदा सर्व-शुभाय *भावना* ॥



# भावना

–आचार्यः अयोध्याप्रसादशास्त्री
आचार्य-कुटीर-सत्यनगरं, रायबरेली-२२९००१

(१)

जगति भ्रमतार्थसाधने, धृतिमास्थाय विविच्य कारिणा।
सकलं सुलभं सुमेधसा, हृदये चेद् रुचिरास्ति *भावना* ॥

(२)

हरिपूजनमर्चनं गुरोः, सततं तीर्थनिषेवणं तथा।
विफलं खलु तस्य जायते, हृदये यस्य न सत्य*भावना* ॥

(३)

क्रतु-यज्ञ-फलं श्रुति-स्मृति-प्रवणेनापि मखं वितन्वता।
सुफलं समभीप्सितं हृदा, दुरवापं यदि नास्ति *भावना* ॥

(४)

स्वार्थभावमनपेक्ष्य वर्तिनस्तन्वतः पर-हितार्थ-साधनम्।
सज्जनस्य हृदयाद् व्यपैति नो सीदतोऽपि परमार्थ-*भावना* ॥

(५)

लोकसङ्ग्रहमभीप्सुना सदा, कार्यमार्यचरितेन काङ्क्षितम्।
मानसादपसरेद् धृतात्मनो, जातु नोपकृतिभव्य-*भावना* ॥

(६)

जगति काङ्क्षतमर्थमभीप्सुना, धृतिमता वहितेन प्रयत्यताम् ।
अनिशमाशु जनने विधीयतां, मनसि विश्वजनीन-वि*भावना* ॥

(७)

सुयश उन्नतिमत्र शमिच्छता, सविनयं चरता कृतिमात्मनः ।
सततमेव मनस्यवधार्यतां, गुरुजनेषु समादर*भावना* ॥

(८)

समाचारन्तोऽर्थयुगे निजेच्छया, जनाः प्रबोध्यन्त ऋतार्थवेदिभिः ।
समीहितार्थेषु बुधैः समीरिता, सुमङ्गला सत्पुरुषार्थ-*भावना* ॥

(९)

समाहता शास्त्रपथोपदेशकैर्हरौ गुरौ यद्यपि पूज्य *भावना* ।
बुधैस्तथाप्यत्र प्रशस्यतेतरां समस्तभूतेषु समत्व-भावना ॥

(१०)

शास्त्राब्धिप्लवनप्रकामरभसप्रोद्भूतखेदालसा,
संविग्ना क्वचिदप्यनाप्तशरणा सुप्तेव या मानसे ।
साद्य प्राप्तसमादरप्रमुदिता सुप्तोत्थिता साम्प्रतं,
वाग्देवी चरणाम्बुजे विलसता श्रद्धान्विता *भावना* ॥



# भावना

—आचार्यः श्रीधरबलूनी
गी १२/२५९, भजनपुरा, दिल्ली-५३

(१)

मनसि यस्य यथा परिवर्तनं
भवति तत्र तथैव च कल्पना ।
सुगमदुर्गममार्गमार्गविचारकैः,
प्रकटितास्ति चिरन्तन-*भावना* ॥

(२)

गिरि-नदी-तटवास-भृतां नृणां,
पठन-पाठन-यज्ञ-तपोरताम् ।
भवति सां प्रकृतिः करुणामयी,
सकलजन्तुषु दीव्यति *भावना* ॥

(३)

जगदिदं रजसा, तमसावृतं,
बहुविधाः पतनोन्मुखसाधनाः ।
यदि च सत्वगुणं परिवर्धते
परमधाम्नि तु पश्यति *भावना* ॥

(४)

भवति चैकनरेण कृता क्रिया,
फलवती विविधा क्रतुकारणैः ।
विवृणुते स्वमनोरथसाधकः,
सदनुकूलफलप्रद*भावना* ॥

(५)

यदि निहन्ति मनोरथसिद्धये
कमपि कोऽपि नरः स तु दण्डभाक् ॥
नरपतिः कुरुते रिपुसंक्षयं,
जयति लोकसुरक्षण-*भावना* ॥

(६)

प्रभुकृपां लभते मनुते क्वचित्
क्वचिदयं भृशमुद्विजितोभयाम् ।
उभयमेव तदेककृतं पुनः,
सुखदुःखात्मकता ननु *भावना* ॥

(७)

परकृतौ प्रवणं हृदयं सदा,
निजकृते विषयात्मकवासना
सुखमयी सरणिस्तु जितेन्द्रियैः,
गतिमतिप्रसृता लघु*भावना* ॥

(८)

भवति कर्म यदा जनमङ्गलं
लसति जीवकला द्रुतचेतना ।
सपदि कारयते निखिलं विभुः,
हृदि विभाति विरोहति *भावना* ॥

(९)

विषमयं भुवनं न सुधामयं,
सृजति रागविरागमयं मनः ।
मनसि तुष्टिगते सकलं मधु ,
भवति मोदमयी हृदि *भावना* ॥

(१०)

सफलतत्वविदां परमार्थिना,
तपसि पुष्यति संयमसाधना ।
चरत संयमशीलव्रतं यथा,
सफलतां वृणुते ननु *भावना* ॥



# भावाञ्जलिः

–आचार्यो जयप्रकाशशर्मा
प्रवक्ता
केन्द्रीयविद्यालयः रिफाइनरी नगरं, मथुरा-२८११००६, उ०प्र०

(१)

माता धन्यः पिता धन्यो धन्यं तस्यैव जीवनम् ।
यस्य स्वदेशरक्षायै जागर्ति राष्ट्रभावना ॥

(२)

भारतं प्रतिभायुक्तं विश्वस्यापि गुरुस्तथा ।
गुरुत्वं रक्षणीयं स्यादेषा जागर्तु भावना ॥

(३)

सत्पुत्रैः भारतीयैश्च कारगिलस्य सैनिकैः ।
सीमैव रक्षिता नैव रक्षिता स्वात्मभावना ॥

(४)

पाकिस्तानस्य ये चौराः दुष्टाऽवैधप्रवेशकाः ।
हताः दूरीकृताः वीरैरियं भारतभावना ॥

(५)

क्रूरकृत्येन पाकेन स्वात्मघातं प्रदर्शितम् ।
विश्वासोऽपि हतस्तेन तस्यैषाधमभावना ॥

( ६ )

धैर्यञ्च साहसं वीक्ष्य मृत्युरपि विकम्पितः ।
यस्य शत्रुघ्नवीरस्य सैवोक्ता राष्ट्रभावना ॥

( ७ )

कश्मीरस्य दिवा स्वपनं रे ! रे ! पाक ! न पश्य त्वम् ।
अन्यथा पूर्ववत्तेऽद्य नंक्ष्यति गृद्धभावना ॥

( ८ )

ये जनाः लुब्धकाः सन्ति तेषां जन्म निरर्थकम् ।
विना परोपकोरण मृत्युं प्राप्नोति भावना ॥

( ९ )

मातृभूमेः सुरक्षायै प्राणपुष्पं समर्पितम् ।
ते वीराः पूजनीयाः स्युः रक्षिता यैः स्वभावना ॥

( १० )

भावाञ्जलिं प्रदानाय दशश्लोकाः विनिर्मिताः ।
संस्कृताकादमीदिल्ल्यै प्रेषितेयञ्च भावना ॥



# दिल्ली-संस्कृत-अकादम्याः समाचाराः

[ जूनमासतः सितम्बर ( २००० ) पर्यन्तम् ]

-डॉ० जीतरामभट्टः

## ४. संस्कृत-छात्रवृत्ति वितरण समारोहः

नवदिल्ल्याम् । जूनमासस्य षष्ठे दिनाङ्के मण्डी-हाउसस्थ-लिटिल-थिएटर-ग्रुप-सभागारे दिल्ली-संस्कृत-अकादमी संस्कृत-छात्रवृत्ति-वितरण-समारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य शिक्षामन्त्रिणः श्रीमन्तः डॉ० नरेन्द्रनाथमहोदयाः प्रावोचन् यत् **'दिल्ली सर्वकारः शिक्षायाः प्रसाराय कटिबद्धोऽस्ति । संस्कृतस्य ग्रन्थाः संस्काराणां शिक्षायै उपयोगिनः सन्ति अतः छात्रेभ्यः संस्कृतस्य पुस्तकानां ज्ञानमावश्यकम् ।'** अवसरेऽस्मिन् अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदया उक्तवन्तः यत् **संस्कृतभाषां प्रति रुच्युत्पादनाय दिल्ली संस्कृत-अकादमी विभिन्नानां कार्यक्रमाणामायोजनं करोति।** अकादम्याः उपाध्यक्षाः दिल्ली सर्वकारस्य शिक्षायाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रोक्तवन्तः यत् **'संस्कृतभाषा सर्वेषां शब्दानां सर्वासां भाषाणाञ्च जननी विद्यते । भाषायामस्यां सर्वविधं ज्ञानं वर्तते ।'** दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामि महोदया अवोचन् यत् **'भारतस्य सम्यग्विकासाय संस्कृतस्य प्रसारः आवश्यकोऽस्ति ।'** अवसरेऽस्मिन् स्वातन्त्र्यसेनान्यः श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः अतिरिक्तशिक्षानिदेशका- श्रीमन्तः शब्बीर अहमदमहोदयाः, प्रसिद्धाः पत्रकाराः श्रीमन्तः विजयशंकरचतुर्वेदिमहोदयाश्च तत्रोपस्थिताः आसन् ।

## ५. 'प्रियदर्शिनीयम्' इत्यस्य काव्यार्पणम्

नवदिल्ल्याम् । १४.६.२००० दिनाङ्के दिल्ली–संस्कृत–अकादम्या प्रकाशितं प्रियदर्शिनीयम् इत्यस्य काव्यस्यार्पण–समारोहः नवदिल्लीस्थे १० जनपथाख्ये स्थले आयोजितः । अकादम्याः सचिवर्यैः श्रीमद्भिः श्रीकृष्णसेमवालमहोदयैः विरचितं काव्यमिदं दिल्ली–सर्वकारस्य शिक्षामन्त्रिवर्याणां श्रीमतां नरेन्द्रनाथमहोदयानां विकासखाद्यापूर्तिमन्त्रिवर्याणां श्रीमतां योगानन्दशास्त्रिमहोदयानां दिल्लीविधानसभासदस्यानां श्रीमतां रमाकान्तगोस्वामिमहोदयानां दिल्ली–सर्वकारस्य पूर्वकार्यकारिपार्षदानां श्रीमतां कुलानन्दभारतीयमहोदयानाञ्च सान्निध्ये अकादमी अखिलभारतीयकांग्रेसपार्टी इत्यस्य दलस्याध्यक्षाभ्यः श्रीमतीभ्यः सोनियागाँधी– महोदयाभ्यः सपर्पितवती । काव्यार्पणस्यावसरेऽस्मिन् श्रीमत्यः गाँधीमहोदयाः श्रीमद्भिः डॉ० रमाकान्तशुक्लमहोदयैः गीयमानानां श्लोकानां रसास्वादनमपि अकुर्वन् । डॉ० वाचस्पतिरुपाध्यायमहोदयाः, पूर्वरक्षासचिवाः श्रीमन्तः डॉ० के०पी०ए० मेननमहोदयाः, डॉ० वी०आर० पञ्चमुखिमहोदयाः, डॉ० आर०के०शर्ममहोदयाः, डॉ० श्रीधरवशिष्ठमहोदयाः, डॉ० सुभाषविद्यालंकारमहोदयाः, डॉ० सत्यव्रतशास्त्रिमहोदयाः, श्रीमन्तः एन०एस० टोलियामहोदयाः, डॉ० प्रवेशसक्सेनामहोदयाः, डॉ० धर्मा, डॉ० पुष्पेद्रकुमारमहोदयाः, श्रीमन्तः विजयशंकर चतुर्वेदिमहोदयाः, श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः, आचार्याः नरेन्द्रपाण्डेयमहोदयाः, डॉ० मोहनचन्द्रमहोदयाः, डॉ० के०के० मिश्रमहोदयाः अन्ये विद्वांसः विदुष्यश्च तत्रोपस्थिताः आसन् ।

## ६. त्रिदिवसीयम् अखिलभारतीयसंस्कृतसम्मेलनम्

दिल्ल्याम् । ७.७.२००० दिनाङ्कतः ९.७.२००० पर्यन्तं दिल्ली–संस्कृत–अकादमी त्रिदिवसीयम् अखिलभारतीय संस्कृत सम्मेलनमायोजितवती । सम्मेलनस्यास्योद्घाटनं

मण्डीहाउसस्थे तानसेनमार्गस्थे फिक्कीसभागारे ७.७.२००० दिनाङ्केऽभवत् । अवसरेऽस्मिन् दिल्लीसर्वकारस्य शिक्षामन्त्रिणः श्रीमंन्तः डॉ० नरेन्द्रनाथमहोदयाः प्रावोचन् यत् **'सर्वेषां विषयाणां शोधस्य कृते मार्गदशनं सस्कृतवाङ्मयात् प्राप्यते । शोधकर्तारः विद्वांसः यदि संस्कृतग्रन्थानामध्ययनं कुर्युः तर्हि तेषां कृते सौविध्य भविष्यति ।'** दिल्लीसर्वकारस्य खाद्यापूर्तिविकासमन्त्रिणः श्रीमन्तः डॉ० योगानन्दशास्त्रिमहोदयाः अवोचन् यत **'सर्वेषां समस्यानां समाधानं संस्कृतविदुषां सहयोगेन भवितुं शक्नोति, यतः भारतस्य नागरिकाणां मौकिमभिप्रेयं संस्कृतग्रन्थेषु** अस्ति।' अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवदन् यत् **'संस्कृत भाषायाः अध्यापनं विना शिक्षायाः सार्थकता नास्ति । शिक्षानीतौ संस्कृतस्य समावेशः करणीयः ।'** समारोहेऽस्मिन् अकादम्या प्रकाशितस्य संस्कृत मञ्जर्याः संस्कृतशिक्षणपाठ्यक्रमविशेषाङ्कस्यापि लोकार्पणमभवत् । दिल्लीविधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः, दिल्लीसर्वकारस्य प्रधानगृहसचिवाः श्रीमन्तः सेवारामशर्ममहोदयाः, राष्ट्रियसंस्कृत संस्थानस्योपाध्यक्षाः श्रीमत्यः डॉ० सरोजनीमहिषीमहोदयाः अपि सम्मेलनस्य विषयेऽवोचन् । अवसरेऽस्मिन् डॉ० वी०आर० पञ्चमुखी, डॉ० सत्यव्रतशास्त्री, डॉ० राममूर्तिशर्मा, डॉ० वाचस्पतिरुपाध्यायः, डॉ० धर्मपालः, डॉ० मुनीश्वरझा, डॉ० सुभाषविद्यालंकारः, डॉ० कुटुम्बशास्त्री, डॉ० के०के०मिश्रः, डॉ० अवनीन्द्रकुमारः अन्ये चापि विद्वांसः समारोहेऽस्मिन्नुपस्थिताः आसन् । सम्मेलनस्य द्वितीये सत्रे सत्राध्यक्षाः पुरीस्थजगन्नाथसंस्कृतविश्वविद्यालयस्य पूर्वकुलपतयः डॉ० सत्यव्रतशास्त्रिमहोदयाः संयोजकाश्च दिल्लीविश्वविद्यालयस्य संस्कृतविभागस्य पूर्वाध्यक्षाः- डॉ० पुष्पेन्द्रकुमारमहोदयाः आसन्। समीक्षिका च कालिन्दीमहाविद्यालयस्य संस्कृत विभागस्य प्राध्यापिका डॉ० सरस्वती बाली आसीत् । सत्रेऽस्मिन् विद्वांसः सम्मेलने निर्धारितेषु विषयेषु व्याख्यानमयच्छन् । सम्मेलनेऽस्मिन् संस्कृत वाङ्मये चिकित्साविज्ञानं, सैन्यविज्ञानं, संगणकविज्ञानं, वाणिज्यविज्ञानं, वास्तुविज्ञानं,

जलविज्ञानं, पर्यावरणं, कृषिविज्ञानञ्च इत्येतेषु विषयेषु भारतस्य विभिन्नेभ्यः प्रान्तेभ्यः विविध`भ्यः विश्वविद्यालयेभ्यश्च समागतानां विदुषां विदुषीनाञ्च प्रस्तुतिः सञ्जाता । तृतीयसत्रात् पञ्चमसत्रपर्यन्तं कस्तूरबागाँधीमार्गस्य भारतीय- विद्याभवनस्य विभिन्नेषु कक्षेषु अकादम्या निर्धारितेषु विषयेषु विदुषां विदुषीनाञ्च परिचर्चाप्यभवत्, तत्रैवातिरिक्तेषु कालांशेषु डॉ० रमाकान्तशुक्लमहोदयानां संयोजकत्वे काव्यपाठमप्यभवत् ।

सम्मेलनस्य षष्ठं सत्रं समापनसत्रमासीत् । इदं सत्रं कश्मीरीगेटस्थस्य गुरुगोविन्दसिंह-इन्द्रप्रस्थविश्वविद्यालयस्य सभागारे तत्रत्यानां कुलपतिमहोदयानां डॉ० के०के० अग्रवालमहोदयानामाध्यक्ष्ये आयोजितम् । अवसरेऽस्मिन् मुख्यातिथियः दिल्ली सर्वकारस्य शिक्षामन्त्रिणः श्रीमन्तः नरेन्द्रनाथमहोदयाः प्रावोचन् यत् **'सम्मेलने उपस्थितैः विद्वद्भिः उपस्थितानां शोधलेखानामुपयोगिता तदैव भविष्यति यदा तानाधार्य कार्यान्वयनं भवेत् । अतः एतेषां शोधलेखानां प्रकाशनमावश्यकमस्ति ।'** दिल्लीसर्वकारस्य खाद्यापूर्तिविकामन्त्रिणः श्रीमन्तः डॉ० योगानन्दशास्त्रिमहोदयाः प्रावोचन् यत् **'संस्कृत-वाङ्मये यदपि वर्णितमस्ति तत्सर्वं लोकोपयोगाय वर्तते । सम्मेलनमेतत् लोककल्याणाय भविष्यति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् 'अकादमी विदुषां विदुषीनाञ्च शोधलेखान् सम्पाद्य पत्रिकायां प्रकाशयिष्यति ।' अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः सर्वेषां विदुषां विदुषीनाञ्च धन्यवादम् अकुर्वन् । दिल्ली-सर्वकारस्य प्रधानगृहसचिवाः श्रीमन्तः सेवारामशर्ममहोदयाः, दिल्लीसर्वकारस्य शिक्षाविभागस्य विशेष सचिवाः श्रीमन्तः- अनन्तसागरअवस्थीमहोदयाः, स्वातन्त्र्यसेनान्यः श्रीमन्तः कृष्णदत्तशास्त्रि महोदयाः अन्ये च विद्वांसः अवसरेऽस्मिन् उपस्थिताः आसन् । सम्मेलनेऽस्मिन् शतद्वयादधिकं विद्वांसो विदुष्यश्च उपस्थिताः अभवन् ।

## ७. 'स्वतन्त्रता' 'शिक्षासूक्तिमुक्तावली' इत्यनयोः ग्रन्थयोः लोकार्पणसमारोहः

दिल्ल्याम् ५-८-२००० दिनाङ्के अकादम्याः संगोष्ठीकक्षे दिल्ली-संस्कृत-अकादमी 'स्वतन्त्रता' 'शिक्षासूक्तिमुक्तावली' इत्यनयोः ग्रन्थयोः लोकार्पण-समारोहमायोजितवती । अकादम्या प्रकाशितयोः अनयोः पुस्तकयोः लोकार्पणं कुर्वन्तः दिल्ली सर्वकारस्य शिक्षायाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् **'संस्कृत भाषायामेव सर्वतः पूर्वं ग्रन्थरचना सञ्जाता, संस्कृतविदुषां विदुषीनाञ्च चिन्तनं सारपूर्णं भवति** ।' अवसरेऽस्मिन् दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः समारोहस्याध्यक्षाः आसन् । तेऽवदन् यत् **'संस्कृतवाङ्मये स्थितानामुपयोगिविषयाणां प्रकाशनमावश्यकं विद्यते ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् **'स्वतन्त्रता' इत्यस्मिन् पुस्तके भारतस्य पञ्चाशत् कवीनां कवयित्रीणाञ्च रचनाः प्रकाशिताः सन्ति** 'शिक्षासूक्तिमुक्तावली' डॉ० नोदनाथमिश्रमहोदयैः संग्रहीता विद्यते, यस्यां संस्कृतवाङ्मयात् शिक्षाप्रदाः सूक्तयः संकलिताः सन्ति ।' अवसरेऽस्मिन् स्वातन्त्र्यसेनान्यः श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः, श्रीमन्तः नरेन्द्रपाण्डेयमहोदयाः श्रीमत्यः वेदवती ढींगरा, श्रीमत्यः डॉ० शक्तिकपूरमहोदयाः, श्रीमन्तः विनोददुखियाः, डॉ० नोदनाथमिश्र महोदयाश्चोपस्थिताः आसन् ।

## ८. संस्कृतसूक्तिसमुच्चयस्य मीमांसाखण्डस्य लोकार्पणसमारोहः

दिल्ल्याम्, पुरानासचिवालयस्थे दिल्ली सर्वकारस्य विकासखाद्यापूर्तिमन्त्रिमहोदयानां कक्षे ९-८-२००० दिनाङ्के अकादम्याः **संस्कृतसूक्तिसमुच्चयस्य मीमांसाखण्डस्य** लोकार्पणसमारोहः आयोजितोऽभवत् । समारोहेऽस्मिन्नकादम्या प्रकाशितस्य

संस्कृतसूक्तिसमुच्चयस्य मीमांसाखण्डस्य लोकार्पणं कुर्वतन्तः दिल्ली-सर्वकारस्य विकासखाद्यापूर्तिमन्त्रिणः श्रीमन्तः डॉ० योगानन्दशास्त्रि महोदयाः प्रावोचन् यतः **'वर्तमान-काले शिक्षायां संस्कृतवाङ्मयाधारितस्य ज्ञानस्य शिक्षणं परमावश्यकम् । ज्ञान-विज्ञानयोः शिक्षणे तयोः सदुपयोगस्यापि निर्धारणं करणीयम्।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रोक्तवन्तः यत् **'अकादम्याः संस्कृत- सूक्ति-समुच्चयस्य सप्तविंशतिः भागाः प्रकाशिताः भविष्यन्ति, साम्प्रतं यावद् अष्टौ भागाः प्रकाशिताः जाता ।'** समारोहस्याध्यक्षाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवदन् यत् **'संस्कृतसूक्तयः मानवस्य मार्गदर्शनं कुर्वन्ति, अकादमी विभिन्नानां शास्त्राणां सूक्तीः सम्पाद्य प्रकाश्य च महत्कार्यं कुर्वन्ती अस्ति ।'** समारोऽस्मिन् मीमांसाखण्डस्य संकलयिता डॉ० धर्मानन्दशर्मा, डॉ० पुष्पेन्द्रकुमारः, डा० संघसेनसिंहः, प्रो० कृष्णलालः अन्ये चेतरे विद्वांसः उपस्थिताः आसन् ।

## ९. संस्कृतदिवसस्योपलक्ष्ये सम्मानसमारोहः

दिल्ल्याम्, मण्डीहाउसस्थ-कॉपरनिक्स मार्गस्थे-लिटिल-थिएटर-ग्रुपसभागारे १४-८-२००० दिनाङ्के दिल्ली संस्कृत अकादम्याः संस्कृतदिवसस्योपक्ष्ये सम्मानसमारोहः आयोजितः । समारोहस्योद्घाटनं कुर्वन्तः पूर्वलोकसभाध्यक्षाः श्रीमन्तः डॉ० बलरामजाखड़ महोदयाः प्रावोचन् यत् **'भौतिकविकासेन सह सांस्कृतिकविकासस्यापि आवश्यकता विद्यते, सांस्कृतिकविकासाय संस्कृतवाङ्मयाधारितयोः ज्ञान-विज्ञानयोः महत्त्वं विद्यते। अकादमी विविधैः कार्यक्रमैः संस्कृतभाषायाः प्रचारे-प्रसारे संलग्नास्ति, संस्कृतदिवसस्योपलक्ष्ये शिक्षकाणां सम्मानः करणीय एव ।'** समारोहेऽस्मिन् मुख्यवक्तारः

श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्य कुलपतयः श्रीमन्तः वाचस्पतिरुपाध्यायमहाभागा आसन् । तैः प्रतिपादितम् यद् **'विश्वेऽस्माकमभिज्ञानं संस्कृतेनैव शक्यम् । अस्माकं वेदपुराणरामायणादि साहित्यस्य पुरतः विश्वस्य मूर्धन्यलेखकाः अपि अवनतमूर्धानो वर्तन्ते ।"** कार्यक्रमस्य आध्यक्ष्यं विदधता अकादम्याः उपध्यक्षाः कुलानन्दभारतीयमहाभागः प्रोक्तवन्तः यत् **"संस्कृतस्य विकासे हि सर्वासां भाषाणां विकासः सन्निहितोऽस्ति ।"** अकादमी-सचिवैः श्रीकृष्णसेमवाल महाभागैरुक्तं यत् **"संस्कृतदिवसायोजनावसरे अकादमी न केवलं संस्कृतशिक्षकान् सम्मानयति अपितु तेषामपि अध्यापकानां सम्मानः अकादम्या विधीयते यैः विविधसंस्कृतप्रतियोगिताभ्यः संस्कृतप्रतियोगिछात्राणां मार्गदर्शनम् सम्पादितम् ।"**

सम्मानसमारोहेऽस्मिन् षट्शतशिक्षकाः संस्कृतसमाराधकसम्मानेन सम्मानिताः । दरियागंजक्षेत्रस्थाय शारदादेवीसंस्कृतविद्यापीठम् अष्टविद्यालयाश्चापि संस्थात्वेन सम्मानिताः डॉ० क्षेमचन्दः संस्कृतसेवीविद्वान्' इति सम्मानेन सभाजितः । समारोहेऽस्मिन् नरेन्द्रनाथपाण्डेयमहोदयाः, श्रीकृष्णदत्तशास्त्रिमहोदयाः, डॉ० शक्तिकपूरमहोदयाः, डॉ० कमला आनन्द महोदयाः, डॉ० सुभाषविद्यालङ्कारमहोदयाः, विनोददुखियामहोदयाः अन्ये चानेके संस्कृतानुरागिणः समुपस्थिता अवर्तन्त ।

## १०. स्वतन्त्रतादिवसस्योपलक्ष्ये अखिलभारतीयकविसम्मेलनम्

नवदिल्ल्याम्, १९-०८-२००० तमे दिनाङ्के गौतमनगरे श्रीमद्दयानन्दवेदविद्यालये अकादम्या स्वतन्त्रतादिवसमुपलक्ष्य एकम् अखिलभारतीयसंस्कृतकविसम्मेलनम् आयोजितम्। कविसम्मेलनस्यास्य आध्यक्ष्यं दिल्ली विधानसभायाः वरिष्ठसदस्यैः पी.सी. कौशिकमहोदयैः

निर्वोढम् । आगरातः डॉ० शशितिवारी, दिल्लीतः डॉ० प्रवेशसक्सेना, मसूरीतः डॉ० हरिदत्तभट्टः, शिमलातः डॉ० ओम्प्रकाशसारस्वतः, गाज़ियाबादतः डॉ० वागीशदिनकरः चेति प्रायशः विंशतिकविभिः स्वीयकाव्यपाठेन अस्य समारोहस्य साफल्ये योगदानं विहितम्। मुख्यातिथित्वेनागतैः दिल्ली सर्वकारस्य खाद्यापूर्तिमन्त्रिवर्यैः डॉ० योगानन्दशास्त्रिमहाभागैरुक्तं यत् 'संस्कृतकविभिरेव सर्वप्रथमं स्वतन्त्रतायाः शङ्खनादो विहितः । डॉ० सुभाषविद्यालङ्कारः, श्रीनरेन्द्रनाथपाण्डेयः, श्री रामरत्नप्रभाकरः शास्त्री, श्री केशवरामशर्म्मा, आचार्यः सत्यव्रतः चेत्यनेके गणमान्याः सम्मेलनेऽस्मिन्नुपस्थिता अवर्तन्त ।

## ११. डॉ० गोस्वामिगिरधारीलालजयन्त्युपलक्ष्ये व्याख्यानमाला

नवदिल्ल्याम् । मण्डीहाउसस्थ-तानसेनमार्गस्थ-फिक्की संस्थायाः कमीशनरूमाख्ये सभाकक्षे २६-८-२००० दिनाङ्के दिल्ली-संस्कृत-अकादम्या डॉ० गोस्वामिगिरधारीलाल-शास्त्रिजयन्त्युपलक्ष्ये व्याख्यानमालैकायोजिता । कार्यक्रमस्योद्घाटनं कुर्वन्तः दिल्ली-विधानसभायाः अध्यक्षाः चौ० प्रेमसिंहमहोदयाः अवोचन् यत् **'संस्कृतवाङ्मये ज्ञान-विज्ञानयोः सर्वे विषयाः सन्ति । स्वर्गीयाः डॉ० गोस्वामि-गिरधारीलाल-शास्त्रिमहोदयाः संस्कृत-भाषायाः प्रसाराय अखिलभारतीयसंस्कृतसाहित्य-सम्मेलनस्य संघटनमकुर्वन् ।'** स्वकीये स्वागतभाषणे अकादम्याः उपाध्यक्षाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवदन् यत् **'संस्कृतभाषायाः विद्वांसः न केवलं संस्कृतस्य प्रसारायापितु राष्ट्रस्य विकासायापि सन्नद्धाः भवन्ति । संस्कृतस्य प्रसाराय डॉ० गोस्वामिमहोदयानामविस्मरणीयं योगदानं विद्यते।'** पूर्वकुलपतयः डॉ० सत्यव्रतशास्त्रिमहोदयाः अवदन् यत् **'भारतीयसंस्कृतेरनुपालकाः**

**डॉ० गोस्वामिमहोदयाः मम मित्राणि आसन्, तैः सह व्यतीतानां दिवसानां संस्मरणैः मयि अभिप्रेरणा सञ्चरति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् **'डॉ० गोस्वामि महोदयाः ज्योतिषशास्त्रस्य मर्मज्ञाः आसन्'** संस्कृतवाङ्मये वैदेशिकी नीतिः-इत्यस्यां व्याख्यान-मालायां प्रवदन्तः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य साहित्यविभागस्याध्यक्षाः श्रीमन्तः डॉ० शिवजी-उपाध्याय महोदयाः संस्कृतभाषायामनेकासां कारिकाणां समुल्लेखम् अकुर्वन् । दिल्लीविधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः अवदन् यत् **' डॉ० गोस्वामिगिरधारीलालशास्त्रिवर्याणां जीवनं वैशिष्ट्य-युक्तमासीत् तेषामाशीर्वचांसि सद्यः फलितानि अभवन् ।'** अवसरेऽस्मिन् राष्ट्रियसंस्कृतसंस्थानस्य निदेशकाः डॉ० कुटुम्बशास्त्रिमहोदयाः, श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः, डॉ० मोहनचन्द्रमहोदयाः, डॉ० त्यागीमहोदयाश्चेत्यनेके विद्वांसः विदुष्यः गणमान्याः नागरिकाः समुपस्थिताः अभवन्।

## १२. संस्कृतवर्षस्योपलक्ष्ये संस्कृत काव्यालिप्रतियोगिता

दिल्ल्याम् । १-९-२००० दिनाङ्के संस्कृतवर्षस्योपलक्ष्ये संस्कृत काव्यालि-प्रतियोगितायोजिता । पहाड़गंजस्थ नूतनमराठीविद्यालयस्य रङ्गायनसभागारे प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्लीविधानसभायाः सदस्याः श्रीमत्यः दर्शनारामकुमारमहोदयाः अवोचन् यत् **'संस्कृत भाषायाः अध्ययनेन छात्राणां सर्वाङ्गीणविकासः भवितुं शक्नोति, अकादम्याः प्रयासैः छात्राः संस्कृतं पठितुं प्रेरिताः भवन्ति ।'** समारोहस्याध्यक्षाः शिक्षायाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवदन् यत् **'जगतः सर्वासु सभ्यतासु भारतीयसंस्कृतेः अंशाः सन्ति, एवमेव सर्वासु भाषास्वपि संस्कृतभाषायाः शब्दाः**

**सन्ति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यद् **'भारतसर्वकारेण निर्धारिते संस्कृतवर्षेऽस्मिन् यद्यपि सम्पूर्णे देशे कार्यक्रमा आयोजिताः तथापि राजधान्यां दिल्ल्याम् अकादम्या आयोजितानां कार्यक्रमाणां संख्या सर्वाधिकास्ति, इयं काव्यालिप्रतियोगितापि तस्यामेव कार्यक्रमशृङ्खलायामायोजितास्ति, यस्यां दिल्लीस्थानां ९२ विद्यालयानां छात्राः सम्मिलिताः सन्ति'** समारोहेऽस्मिन् श्रीलालबहादुरशास्त्रि-राष्ट्रियसंस्कृतविद्यापीठस्य पूर्वकुलपतयः प्रो० श्रीधरवसिष्ठमहोदयाः प्रतियोगितायाः परिणामं श्रावयन्तः अवदन् यत् **'प्रतियोगिताभिः छात्राः अध्ययनाय प्रेरिताः भवन्ति ।'** प्रतियोगितायामस्यां एण्ड्र्यूज़गंजस्थ राजकीयकन्यावरिष्ठविद्यालयस्य छात्राभिः प्रथमपुरस्कारः, पंजाबीबाग़स्थ हंसराजमाडल विद्यालयस्य छात्रैः द्वितीयपुरस्कारः, लांसर्स मार्गस्थसर्वोदयकन्याविद्यालयस्य छात्राभिः तृतीयपुरस्कारः, आनन्दविहारस्य विवेकानन्द व०म०विद्यालयस्य छात्रैः चतुर्थपुरस्कारः, मुण्डकास्थराजकीयकन्याविद्यालयस्य छात्राभिः पञ्चमपुरस्कारः, रूपनगरस्थ क्र० १ राजकीय- कन्याविद्यालयस्य छात्राभिः षष्ठपुरस्कारः, गीताकालोनीस्थराजकीयसर्वोदयकन्याविद्यालयस्य छात्राभिः सप्तमपुरस्कारः, ए-ब्लाक जनकपुरीस्थसर्वोदयविद्यालयस्य छात्राभिः अष्टमपुरस्कारः प्राप्तः । षोडशविद्यालयैश्च प्रोत्साहनपुरस्काराः प्राप्ताः ।

## १३. कवेः साक्षात्कारः ( डॉ० रमाकान्तशुक्लः )

दिल्ली-संस्कृत-अकादम्याः संगोष्ठी कक्षे १०-९-२००० दिनाङ्केऽकादम्याः कवेः साक्षात्कारः कार्यक्रमः आयोजितः । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली-नगर-निगमस्य पूर्वोपमहापौराः श्रीमन्तः महेशचन्द्रशर्ममहोदयाः प्रावोचन् यत् **'कवयः लेखकाः वा स्वकीयानुभूतिभिः लोकस्य मार्गदर्शनं कुर्वन्ति । राष्ट्रनिर्माणे कवीनां लेखकानाञ्च**

**महती भूमिका भवति ।'** कार्यक्रमस्य प्रस्तावनायामकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रोक्तवन्तः यत् **कवयः लेखकाः वा यदा काव्यरचनाः लेखनं वा कुर्वन्ति तदा तेषां मनसि कीदृशी भावना भवति, कस्यां पृष्ठभूमौ तेऽवगाहन्ति इत्यादीनां परिचयः लोकस्य कृते सदुपयोगी भविष्यति । अत एव अकादम्या नवीनोऽयं कार्यक्रमः आयोजितः ।'** अवसरेऽस्मिन् डॉ० रमाकान्तशुक्ल महोदयाः स्वकीयाः अनुभूतयः प्रस्तुवन्तः काव्यपाठमाकुर्वन्। तेऽवदन् यत् **मम प्रत्येकं काव्यमनुभूतिजन्यमेवास्ति। काव्यरचना बलाद् न भवति । 'भूतले भाति मेऽनारतं भारतम्' प्राच्यार्वाचीनयोः स्वरूपं विद्यते** । अवसरेऽस्मिन् स्वातन्त्र्यसेनान्यः पं० कृष्णदत्तशास्त्रिमहोदयाः, आचार्यः नरेन्द्रपाण्डेयमहोदयाः, प्रो० रमेशचन्द्रपाण्डेयमहोदयाश्च डॉ० रमाकान्तशुक्लमहोदयानां कृतित्वविषये प्रावदन्, भारतसर्वकारस्य गृहमन्त्रालयस्य पूर्वविशेषसचिवचराः श्रीमन्तः विजयशङ्करचतुर्वेदि-महोदयाश्चाप्यवसरेऽस्मिन् कवेः साक्षात्कारस्य विषये प्रोक्तवन्तः । नैके विद्वांसः विदुष्यः कवयः लेखकाश्च तत्रोपस्थिताः आसन् ।

## १४. श्लोकान्त्याक्षरी प्रतियोगिता

१२-९-२००० दिनाङ्के दिल्ली-संस्कृत-अकादम्या झण्डेवालानस्थ-अकादम्याः संगोष्ठीकक्षे श्लोकान्त्याक्षरीप्रतियोगिता आयोजिता, यस्यां दिल्लीस्थानां संस्कृतविद्यालयानां महाविद्यालयानाञ्च छात्राः सम्मिलिताः जाताः । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली-विधानसभायाः संदस्याः श्रीमत्यः दर्शनारामकुमारमहोदयाः अवदन् यत् **'संस्कृतभाषया छात्राणां सर्वाङ्गीणविकासः भवितुं शक्नोति ।'** कार्यक्रमाध्यक्षाः दिल्ली-सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रोक्तवन्तः यद् **'जीवने**

**लक्ष्यनिर्धारणाय छात्रावस्था सर्वोत्तमा अवस्था विद्यते, यस्यां मानवेषु उत्साहस्याधिक्यं भवति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् **'संस्कृतस्य छात्रा एव भारतीय संस्कृतेः उन्नायकाः सन्ति ।'** प्रतियोगितायामस्यां स्नातक-स्नातकोत्तरवर्गे श्रीमद्दयानन्दवेद-विद्यालयस्य छात्रेण श्रीदेवाशीषेण प्रथमपुरस्कारः, श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य छात्रेण श्रीकृष्णानन्देन द्वितीयपुरस्कारः, शारदादेवीसंस्कृतविद्यापीठस्य छात्रेण श्रीमनोजकुमारेण तृतीयपुरस्कारः प्राप्तः। मध्यमावर्गे शारदादेवीसंस्कृतविद्यापीठस्य छात्राभ्यां श्रीमहावीरप्रसाद-शंकरदत्तपाण्डेयाभ्यां प्रथमपुरस्कारः, नरेलास्थ आर्यगुरुकुलस्य छात्रयासीमया च तृतीयपुरस्कारः प्राप्तः । अवसरेऽस्मिन् नैके छात्राः शिक्षकाः विद्वांसश्चोपस्थिता आसन् ।

## १५. सामान्य-महाविद्यालयीय/संस्कृत-महाविद्यालयीय/संस्कृत-विद्यालयीय-संस्कृत-भाषण-प्रतियोगिता

झण्डेवालानस्थ-अकादम्याः संगोष्ठीकक्षे दिल्ली-संस्कृत-अकादम्या १६-९-२००० दिनाङ्के सामान्य-महाविद्यालयीय/संस्कृत-महाविद्यालयीय/संस्कृत-विद्यालयीय-संस्कृत-भाषण प्रतियोगिता आयोजिता । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली-विधानसभायाः सदस्याः श्रीमन्तः पी.सी. कौशिकमहोदयाः प्रावोचन् यत् **'भाषणस्य संस्काराय संस्कृतभाषायाः समुच्चारणं सर्वाधिकमुपयोगि वर्तते । संस्कृतभाषया न केवलं वाणी अपितु हृदयमपि निर्मलं भवति ।'** कार्यक्रमस्याध्यक्षाः दिल्लीसर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः आवोचन् यत् **'संस्कृतभाषायां ज्ञान-विज्ञानयोः सर्वे विषयाः सन्ति । संस्कृतसम्भाषणेन वाक्शुद्धिः भवति ।'** अकादम्याः सचिवाः श्रीमन्तः

श्रीकृष्णसेमवालमहोदयाः उक्तवन्तः यत् **'संस्कृतस्य प्रतियोगिताः छात्राणां विकासे सकारात्मिकां भूमिकां निर्वहन्ति ।'** प्रतियोगितामस्यां हंसराजमहाविद्यालयस्य श्रीवेदप्रकाशगर्गेण प्रथमपुरस्कारः, मोतीनाथसंस्कृतमहाविद्यालयस्य जयरामेण द्वितीयपुरस्कारः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य मेघदत्तेन तृतीयपुरस्कारः प्राप्तः । अवसरेऽस्मिन् नैके छात्राः विद्वांसश्चोपस्थिताः आसन् ।

## १६. प्राशासनिकसेवापरीक्षासंस्कृतशिक्षणकेन्द्रोद्घाटनसमारोहः

झण्डेवालानस्थ-अकादम्याः संगोष्ठीकक्षे २३-९-२००० दिनाङ्के दिल्ली-संस्कृत-अकादम्या प्राशासनिकसेवापरीक्षासंस्कृतशिक्षणकेन्द्रोद्घाटनसमारोहः आयोजितः । केन्द्रस्योद्घाटनं कुर्वन्तः भारतसर्वकारस्य रक्षामन्त्रालयस्य पूर्वरक्षासचिवचराः श्रीमन्तः डॉ० के०पी०ए० मेनन् महोदयाः प्रावोचन् यद् **'भारतप्रशासने संस्कृतज्ञशासकानामावश्यकता विद्यते, येन देशस्य सर्वविधं विकासः भवितुं शक्नोति । संस्कृतशास्त्रेषु वर्णितानां ज्ञान-विज्ञान- परकविषयाणामुपयोगेन भारतीयशासने कार्यक्षमतायाः वृद्धिः भविष्यति । ये छात्राः प्राशासनिक सेवापरीक्षायां संस्कृतविषयं स्वीकृत्य परीक्षायाः अभ्यासं कुर्वन्ति, परीक्षायाः अनन्तरमपि तज्ज्ञानं तेषामुपयोगाय भवति ।'** स्वकीये प्रास्ताविके अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवदन् यद् **'अकादमी प्रतिवर्षं प्राशासनिक-सेवा-परीक्षायै संस्कृतशिक्षणकेन्द्रं सञ्चालयति । वर्षेऽस्मिन् अशीतिसंख्यकाः छात्राः केन्द्रेऽस्मिन् प्रवेशायावेदनं कृतवन्तः ।'** कार्यक्रमस्याध्यक्षाः दिल्लीसर्वकारस्य शिक्षायाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः उक्तवन्तः यत् **'शासन-प्रबन्धनस्य कृते चाणक्य-विदुर-शुक्र-व्यासादीनां ग्रन्थाः सदुपयोगिनः सन्ति ।'** अवसरेऽस्मिन् दिल्ली विश्वविद्यालयस्य संस्कृतविभागस्याध्यक्षाः डॉ०

अवनीन्द्रकुमारमहोदया:, आचार्या: नरेन्द्रपाण्डेयमहोदया:, श्रीमत्य: वेदवती ढींगरा महोदया: नैके संस्कृतानुरागिण: उपस्थिता: आसन् । केन्द्रस्य प्रशिक्षका: श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य प्राध्यापका: श्रीमन्त: डॉ० सन्तोषकुमारशुक्लमहोदया: अपि तत्रोपस्थिता: आसन् ।

## १७. संस्कृतवर्षस्योपलक्ष्ये संस्कृतबालगीतप्रतियोगिता

दिल्ल्याम् । झण्डेवालानस्थ-अकादम्या: संगोष्ठीकक्षे २७-९-२००० दिनाङ्के दिल्ली-संस्कृत-अकादम्या मानवविकास-संसाधनमन्त्रालयस्य शिक्षाविभागस्य सहयोगेन संस्कृतवर्षस्योपलक्ष्ये संस्कृत-बालगीत-प्रतियोगितायाः आयोजनमभवत् । प्रतियोगितायामस्यां दिल्लीस्थानां संस्कृतविद्यालयानां/महाविद्यालयानां छात्रा: सम्मिलिता: अभवन् । प्रतियोगितायाः उद्घाटनं कुर्वन्त: दिल्लीसर्वकारस्य शिक्षाया: पूर्वकार्यकारिपार्षदा: श्रीमन्त: कुलानन्दभारतीय-महोदया: अवोचन् यत् **'संगीतशास्त्रस्य संस्कृतग्रन्थेषु समीचीनं वर्णनं विद्यते । सामवेदः संगीतस्यैव वेदोऽस्ति । बालगीतान्यपि संस्कृतग्रन्थेषु सन्ति, तेषां प्रतियोगितामायोज्य अकादमी महत्वपूर्णं कार्यमकरोत्।'** अकादम्या: सचिवा: श्रीमन्त: श्रीकृष्णसेमवालमहोदया: उक्तवन्त: यत् **'संस्कृत-बालगीत- प्रतियोगितया बालकेषु प्रच्छन्नाया: प्रतिभाया: विकास: भवितुं शक्नोति ।'** कार्यक्रमस्याध्यक्षा: राज्य-शैक्षणिक-अनुसन्धान-परिषद: पूर्व-संयुक्त-सचिवा: डॉ० शक्तिकपूरमहोदया: अवदन् यत् **'संस्कृतभाषाया: प्रसाराय संस्कृत-बालगीतानां रचना करणीया यत: बालेषु संस्कृत-शिक्षणं प्रति रुच्युत्पादनाय बालगीतमुपयोगि साधनं विद्यते ।'** कार्यक्रमेऽस्मिन् अनेके विद्वांस: विदुष्य: छात्राश्चोपस्थिता: आसन् ।

## १८. 'स्वातन्त्र्यस्वर्णसौरभम्' ग्रन्थस्य लोकार्पण-समारोहः

दिल्ल्याम् । पुराना सचिवालयस्थ-दिल्ली-विधानसभायाः कमेटीरूम-सभागारे २९-९-२००० दिनाङ्के दिल्ली-संस्कृत-अकादम्या 'स्वातन्त्र्यस्वर्णसौरभम्' ग्रन्थस्य लोकार्पण-समारोहः आयोजितः । समारोहस्योद्घाटनं कुर्वन्तः दिल्लीसर्वकारस्य मुख्यमन्त्रिणः श्रीमत्यः शीलादीक्षितमहोदयाः प्रोक्तवत्यः यत् 'संस्कृतभाषायाः प्रसाराय वैज्ञानिकसंसाधनानामुपयोगः आवश्यकः दिल्ली सर्वकारः कामयते दिल्ली-संस्कृत-अकादम्यामपि संगणकमाध्यमेनैव कार्यं भवेत् ।' **'स्वातन्त्र्यस्वर्णसौरभम्' सदृशाः ग्रन्थाः विद्वत्समाजाय मार्गदर्शकाः भवन्ति । संस्कृतग्रन्थानामपि कोषः संगणके भवेत् ।'** समारोहस्याध्यक्षाः सांसदाः डॉ० कर्णसिंहमहोदयाः अवोचन् यद् **'धर्म-अर्थ-काम-मोक्षादीनां सम्यग्ज्ञानं संस्कृतशास्त्रेषु प्राप्नोत्येवापितु विज्ञानस्यापि सर्वे विषयाः संस्कृतवाङ्मये सन्ति । संस्कृत ग्रन्थानां प्रसारेण भारतीय संस्कृतेः प्रसारः स्वतः एव भवति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् **'संस्कृतमेव सर्वासां भारतीयभाषाणां प्रतिनिधित्वं करोति, स्वातन्त्र्य-युद्धेऽपि संस्कृतभाषा क्रान्किारिणां सम्पर्क भाषा आसीत् । 'स्वातन्त्र्य-स्वर्ण-सौरभम्' ग्रन्थे स्वातन्त्र्यसेनानीनां वृत्तं संकलितं विद्यते ।'** अकादम्याः उपाध्यक्षाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीय- महोदयाः उक्तवन्तः यत् **'स्वातन्त्र्यस्वर्ण सौरभम्-ग्रन्थः स्वातन्त्र्य-सेनानिनां कृते अकादम्याः संस्कृत भाषायां साहित्यिकी श्रद्धाञ्जलिः वर्तते ।** समारोहेऽस्मिन् दिल्लीविधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः, श्रीमन्तः ओ०पी० सराफः, डॉ० रमाकान्तशुक्लः, डॉ० सरोजदीक्षा, डॉ० मोहनचन्द्रः, डॉ० कृष्णलालश्चेतरे नैके विद्वांसः उपस्थिताः आसन् ।

## १९. व्याकरणसूत्रान्त्याक्षरी प्रतियोगिता

३-९-२००० दिनाङ्के दिल्ली संस्कृत अकादम्याः झण्डेवालानस्थ-अकादम्याः संगोष्ठीकक्षे दिल्लीस्थ संस्कृतविद्यालयानां/महाविद्यालयानां छात्राणां कृते व्याकरणसूत्रान्त्याक्षरी प्रतियोगितायाः आयोजनमभवत् । प्रतियोगितायाः प्रास्ताविकेऽकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवोचन् यत् **'पाणिनीयाष्टाध्यायी व्याकरणस्याधारशिला विद्यते । यः अष्टाध्यायाः सूत्राणि स्मरति, तस्मै संस्कृत-शास्त्राणामध्ययने काठिन्यं न भवति ।** सूत्राष्टाध्यायाः महत्त्वं विज्ञायैवाकादम्या प्रतिवर्षं छात्राणां कृते व्याकरण-सूत्रान्त्याक्षरी प्रतियोगितायाः आयोजनं विधीयते ।' विशिष्टातिथिः डॉ० रमाकान्तशुक्लमहोदयाः प्रोक्तवन्तः यत् 'पाणिनीयाष्टाध्यायी वैज्ञानिकः ग्रन्थोऽस्ति, व्याकरणस्य यादृक् स्वरूपं पाणिनिना निर्धारितं तादृगन्यासां भाषाणां नास्ति, स्मरणेन विद्या संरक्षिता भवति अतः छात्राणां कृते सूत्राणां शुद्धस्मरणं शुद्धोच्चारणञ्चोपयोगी भविष्यतः ।' अवसरेऽस्मिन् राष्ट्रीय-शैक्षिक-अनुसन्धान- प्रशिक्षणपरिषदः संस्कृतविभागस्याध्यक्षाः डॉ० कमलाकान्तमिश्रमहोदयाः, शिवाजी महाविद्यालयस्य संस्कृतविभागस्योपाचार्याः डॉ० महावीर महोदयाः, लाजपतरायस्नातकोत्तर- महाविद्यालयस्य प्राचार्याः डॉ० गणेशदत्तशर्ममहोदयास्तत्रोपस्थिताः आसन् । प्रतियोगितायां पञ्चाशच्छात्राः सम्मिलिताः अभवन् । प्रथमपुरस्कारः शारदादेवी संस्कृतविद्यापीठस्य छात्रेण प्राप्तः । अवसरेऽस्मिन् नैके विद्वांसः विदुष्यः छात्राः चोपस्थिताः आसन् ।

( त्रैमासिकी )

# संस्कृत-मञ्जरी

( अक्टूबर २००० तः दिसम्बर २००० पर्यन्तम् )

वर्षम् १० अङ्कः ३

## श्रीरवीन्द्रकाव्यकुसुमाञ्जलिविशेषाङ्कः

( प्रथमो भागः )

सम्पादकः
श्रीकृष्णसेमवालः
सचिवः



दिल्ली-संस्कृत-अकादमी

(राष्ट्रियराजधानीक्षेत्रम्, दिल्ली सर्वकारः)

प्रकाशकः

सचिवः
**दिल्ली-संस्कृत-अकादमी**
(राष्ट्रिय-राजधानी-क्षेत्रम्-दिल्ली-सर्वकारः)



प्राप्तिस्थानम्-
विक्रय-विभागः
**दिल्ली-संस्कृत-अकादमी**
(राष्ट्रिय-राजधानी-क्षेत्रम्-दिल्ली-सर्वकारः)
भूखण्डसङ्ख्या ५, झण्डेवालानम् करोलबाग़ोपनगरम्, नवदिल्ली-११०००५
दूरभाषः ३५५५६७६, ७५३५५९२, ३६८१८३५

मूल्यम्-१५.०० रूप्यकाणि

मुद्रकः-
**दोना प्रिण्टर्सः**
ए-४५९, नेहरूविहारः
दिल्ली-११००५४
दूरभाषः २९४१२२५

## –उत्सर्गतः–

कस्त्वां धारयितु शक्तस्तपन ! गगनं विना ।
स्वप्नं पश्यामि ते किन्तु सेवितुं हा न शक्नुयाम् ॥

रुदत् तच्छिशिरं वक्ति बध्नीयां त्वामहं यतः ।
हे रवे मम दुर्भाग्यान् नास्ति मे तादृशं बलम् ।

त्वदृते जीवनं क्षुद्रं केवलमश्रुवारि तत् ॥
हसन् प्राह रविस्तावदागत्य शिशिरोरसि ।

विपुलकिरणेनाऽहं ज्योतिर्मयं करोमि यत् ।
समग्रभुवनं किन्तु तथापि शक्तिरस्ति मे ।

शिशिरबिन्दुसामीप्यं गन्तुं बन्धयितुं स्वयम् ॥
तस्मिन् स्निग्धुं समर्थश्च, प्रपूर्य त्वां च सर्वतः ।

क्षुद्रीभूय च तिष्ठेयम्, एवं च जीवनं तव ।
महानन्देन च क्षुद्रं निर्मास्यामि तु हासवत् ॥



## १४०० वङ्गाब्दाः
(१४०० साल)

अद्यतो वर्षशतादूर्ध्वम् उपविशन्ती का त्वम्
पठसि कौतूहलभरतो मम कविताम्
अद्यतो वर्षशतादूर्ध्वम् ।

अद्यतननवसन्त-प्रभातानन्दस्य
लेशमात्रं भागम्,
अद्यतनं किञ्चन पुष्पं
विहंगस्य किञ्चन गानं वा,
तथा अद्यतनं कमपि वा सन्तं रागम्
अनुरागेण सिक्त्वा युष्माकं करकमलेषु
प्रेरयितुं न शक्नुयाम्
अद्यतो वर्षशतादूर्ध्वम् ।

तथापि सकृदेव त्वं दक्षिणं द्वारमुद्घाट्य
वातायने समासीना पश्यन्ती सुदूरं दिगन्तं
कल्पनायामवगाह्य मनसा चिन्तयन्ती पश्य
एकदा वर्षशततः प्राक्
कस्मात् वा स्वर्गादागत्य
चञ्चलपुलकराशिर्निखिलस्य कर्म अस्पृशत् ।
सकलबन्धहीनम्, उन्मत्तम् अधीरं
नवं फाल्गुनं दिनम्,
उड्डीय पुष्परेणु-म्रक्षितौ चञ्चलौ पक्षौ
दक्षिणः समीरणश्च सत्वरं
सहसाऽगत्य धराम् अरञ्जयताम्-
युष्माकं वर्षशततः प्राक् ।
गानमग्नहृदयः कविरेको
जागरितः सन् पुष्पप्रायाः

कति कथा विकासयितुमिच्छुः
कियता वर्षशततः प्राक् ।
अद्यतो वर्षशतादूर्ध्वं
तदानीं गास्यति स को नूतनः कवि-
र्युष्माकं गृहे ।
अद्यतनस्य नववसन्तस्य
आनन्दाभिनन्दनं प्रेरयामि
उद्दिश्य तस्यं करकमलम् ।
मम वासन्तं गानं त्वदीये वासन्ते दिने
तव हृदयस्पर्शेन नवभ्रमरगुञ्जनेन
क्षणं ध्वनितं भवतु
अद्यतो वर्षशतादूर्ध्वम् ॥



## संवादकाव्यानि

# –कर्ण-कुन्ती-संवादम्–

कर्णः– पवित्र-जाह्नवीतीरे सान्ध्यसवितृवन्दने ।
रतोऽस्मि, कर्णनामा यः सूतस्याऽधिरथस्य च ॥

राधागर्भजपुत्रोऽहं मातस्त्वं काऽसि मे वद ?

कुन्ती– हे वत्स प्रथमे तस्मिन् प्रभाते जीवनस्य ते ॥

त्वया च सह विश्वेन परिचयमकारयम् ।
सैवाऽहं सकलां लज्जां त्यक्त्वाऽद्य दातु-मागता ॥

आत्मपरिचयं तुभ्यम् ।

कर्णः– नतयोस्तव नेत्रयोः ।
देवि किरण-सम्पाताच्चित्तं विगलितं मम ॥

सूर्यकरस्य घातेन द्रुतशैलतुषारवत् ।
तव कण्ठस्वरः स्निग्धः पूर्वस्मादिव जन्मनः ॥

जागरयति कर्णे मे प्रविश्याऽपूर्ववेदनाम् ।
अस्त्यपरिचिते जन्म के-न रहस्यसूत्रतः ॥

बद्धं मे वा सह त्वया ?

कुन्ती– क्षणं धैर्यावलम्बनम् ।
कुरुष्व वत्स, यातु प्रागस्तं देवो दिवाकरः ॥

सन्ध्यायास्तिमिरं तावद् भृशं घनीभविष्यति ।
अहं कुन्त्यस्मि हे वीर, तदेतत् कथयामि च ॥

कर्णः– अपि त्वमसि कुन्ती, त्वम् अर्जुनजननी किल ?

कुन्ती– अर्जुनजननी वाढं मनसा गणयंश्च तत् ।
द्वेषं मा स्म कृथा वत्स, पतत्यद्यापि मानसे ॥

हस्तिनानगरे शस्त्रपरीक्षा-दिवसे यदा ।
प्राविशस्तरुणो धीरं रङ्गस्थलं कुमारकः ।
नक्षत्राङ्कित पूर्वाशा-प्रान्तदेशे नवोदितः ॥

अरुणसन्निभस्तत्र यति नार्य उपस्थिताः ।
यवनिकान्तराले च मध्ये तासामभागिनी ॥

वाक्यहीना तु का नारी जर्जरीभूतवक्षसि ।
आसीज्जागरयन्ती या भुजङ्गीसहस्रवत् ।
क्षुधामपरितृप्तस्य स्नेहस्य, ( स्फीतचक्षुषा ) ॥

नेत्रद्वयं च कस्या वा सर्वाङ्गेष्वददात्.तव ।
स्निग्धाशीश्चुम्बनं तस्माद् अर्जुनजननी हि सा ॥

कृपाचार्यो यदाऽऽगत्य त्वां पितुर्नाम पृष्टवान् ।
'राजकुले'-हंसश्चाऽऽह, 'जन्म यस्य न वाऽभवत् ।
अर्जुनेन समं युद्धे नास्ति तस्याऽधिकारिता' ॥

वाणी न निर्गता काऽपि तवाऽऽरक्ताऽऽनताऽऽननात् ।
स्थितोऽसि दण्डवत् स्थाणुर्लज्जाभा साऽदहद् भृशम् ।
का सा अभागिनी यस्या वक्षोऽग्निमय-तेजसा ॥

साऽर्जुनजननी; धन्यः पुत्रो दुर्योधनो गुणी ।
तत्क्षणादेव वत्स त्वामङ्गराज्येऽभिषेकं शिरस्तव ॥

स बहुधन्यवादार्हः; साऽभिषेकं शिरस्तव ।
उद्दिश्य अश्रुराशिर्मे नेत्राभ्यामुच्छलो गतः ॥

कृतपथस्तदासूतो महानन्देन विह्वलः ।

प्रविष्टोऽधिरथो रङ्गं, तत्क्षणाद् राजसज्जया ।
कुतूहलि-जनारण्यमध्ये सश्रद्धमानतः ॥

अभिषेकेण सिक्तं ते लोटयंश्चरणान्तिके ।
प्राणमः सूतवृद्धं तं पितृसम्भाषपूर्वकम् ॥

तद्दृष्ट्वा क्रूरहासेन सर्वे पाण्डवबान्धवाः ।
धिक् कर्तुमारभन्त त्वां, तत्र परमगर्वतः ॥

वीररत्न, तदा या ते वीरत्वेनाऽऽशिषोऽददात् ।
अर्जुनजननी साऽहम् ॥

कर्णः– आर्ये, त्वां प्रणमाम्यहम् ॥

त्वमसि राजमाता तदिह एकाकिनी कथम् ?
कुरु सेनापतिश्चाहम्, एषा खलु रणस्थली ॥

कुन्ती– भिक्षाऽस्ति पुत्र हे मा भूत् प्रस्थानं विफलं मम ।
कर्णः भिक्षा ! सा मत्सकाशात् किम् ? आत्मनः पौरुषं विना ॥

तथा धर्मं प्रदास्ये तच्चरणयुगले तव
याम् आज्ञां कुरुषे देवि !
कुन्ती– त्वामहं नेतुमागता ॥२४॥
कुत्र वा नेष्यसि त्वं माम् ?
मध्ये तृषितवक्षसः ।
मातृक्रोडे ग्रहीष्यामि ।
कर्णः– पुत्रैर्धन्याऽसि पञ्चभिः ।
अयि भाग्यवति त्वं हि; हीनोऽहं कुलशीलतः ।
एको नरपतिः क्षुद्रः-स्थानं दास्यसि कुत्र मे ?

कुन्ती– सर्वेषामुच्चभागे यत् सर्व पुत्राग्रतो मम ।
तत्र त्वां स्थापयिष्यामि, हे मम ज्येष्ठकपुत्रक !

कर्णः– अधिकारमदात् कस्मात् तत्राऽहं प्रविशानि नु ?
सर्वे ये वञ्चिता जाताः सर्वसाम्राज्यसम्पदः ।
मातृस्नेहधने तेषां पूर्णं स्वत्वमहं कथम् ।
ब्रूहि मां खण्डयिष्यामि ? जननीहृदयं क्वचित् ।

न हि विक्रीयते द्यूतपणेन न विजीयते ।
बाहुबलेन कस्याऽपि, विधातुर्दानमेव तत् ॥

कुन्ती– विधिदत्ताधिकारं तं वहन् पुत्र, त्वमेकदा ।
आयातः क्रोडमेतं मे, तदधिकारतस्ततः ॥

आगच्छ निर्विचारेण, प्रत्यावृत्य सगौरवम् ।
सकलभ्रातृमध्ये त्वं मातुरङ्के तथा मम
आदत्स्व स्वस्य यत् स्थानम् ।

कर्णः– स्वप्नसमां शृणोम्यहम्
वाणीं ते देवि, पश्यऽत्र दिशश्च विदिशस्तथा ।
व्याप्ता घनान्धकारेण; लुप्तं पार्श्वचतुष्टयम् ॥

भागीरथी च निःशब्दा, नीत्वा मां गतवत्यसि ।
निभृतमालयं लोकं मायाच्छन्नं न कञ्चन ।
प्रत्यूषं चेतनायाश्च, सत्यं पुरातनं यथा ।
वाणी स्पृशति ते मुग्धं चित्तं मम मनस्विनि ॥

अस्फुटः शिशुकालो मे जननीगर्भतामसम् ।
वेष्टते इव मामद्य, राजमातरये यदि ।
स्वप्नो भवतु सत्यं वा, किं विचारेण तेन च ।
स्नेहमयी, इहाऽगच्छ, ललाटे चिबुके मम ।
स्थापय क्षणकालाय त्वदीयं हस्तदक्षिणम् ॥

परित्यक्तो जनन्याऽहं श्रुतवान् लोकवक्त्रतः ।
कति-वारं निशा स्वप्ने दृष्टवान् जननी मम ।

मां द्रष्टुं ( मे शिरःप्रान्ते ) धीर-धीरमुपस्थिता ॥

व्यथया कातरीभूय रुदंस्तामुक्तवानहम् ।
जननि, गुण्ठनं मुञ्च, पश्यानि वदनं तव ॥

तत्क्षणादेव तं स्वप्नं तृषार्तमुत्सुकं मम ।
छित्त्वा विलीयते मूर्तिरद्य सोऽत्र किमागतः ।
सन्ध्याकाले रणक्षेत्रे स्वप्नो भागीरथीतटे ।
अर्जुनजननीरूप-सज्जितः सन् ममाऽन्तिकम् ।
पाडव-शिविरे देवि, पश्य तत्र तटान्तरे ।
प्रज्वलन्ति प्रदीपाश्च, नाऽत्यन्तदूरकते ।
कौरवमन्दुरा-मध्यादश्वलक्षखुरध्वनिः ।
प्रखरो वादयन्नास्ते, श्वः प्रभाते महारणम् ।
आरभेत, कथं रात्र्यामर्ज्जुनमातृकण्ठतः ।
अद्याऽश्रौषं रणक्षेत्रे मातुः स्नेहस्वरं मम ॥

यथा मधुरसङ्गीतं नाम मम कथं तथा ।
वादितं मुखतस्तस्याः सहसा च प्रधावति ॥

उद्दिश्य पाण्डवान् पञ्च चित्तं मे भ्रातृबुद्धितः ॥

कुन्ती– तत आगच्छ हे वत्स, आगच्छागच्छ सत्वरम् ।

कर्णः– मातर्यास्यामि यास्यामि न हि प्रत्यामि किञ्चन ।
न कञ्चित् संशयं कुर्वन् न किञ्चिच्चिन्तयंस्तथा ।
माता त्वमसि मे देवि, त्वदीयाऽऽह्वानशब्दतः ।
जागरितोऽन्तरात्मा च वाद्येते न हि कर्णयोः ।
जय शङ्खध्वनिर्युद्धभेरी, मिथ्या च मन्यते ।
रणहिंसा तथा वीरख्यातिर्जयपराजयम् ॥
गन्तव्यं कुत्र मे मातर्नयन्ती चल तत्र माम् ॥

कुन्ती– पाण्डुर-सैकते तत्र स्कन्दावारे तटान्तरे ।
अदूरे दृश्यते यत्र ज्वलन्ती दीपमालिका ॥

कर्णः– प्राप्स्यति मातरं तत्र चिरं किं हृतमातृकः ?
ध्रुवतारा चिरं रात्रीस्तवाऽस्मिन् नयनद्वये ।
सुन्दरीदाररूपेण स्थास्यति जाग्रती न वा ।
पुनः कथय हे देवि, तव पुत्रोऽस्मि निश्चितः?

कुन्ती– पुत्रो मे त्वमयं वत्स

कर्णः– तत् त्वं त्यक्तवती कथम् ?
अन्धेऽज्ञाते च विश्वेऽस्मिन् सुदूरे मामगौरवम् ।
दत्तवती कथं भ्रातृकुलान् निर्वासनं मम ?
अज्ञातस्त्रोतसि त्वं मां कथं प्लावितवत्यसि ?
अस्थापयंश्च विच्छिद्य मामर्जुनाच्च दूरतः ।
हिंसाकारेण दुर्वाराऽकर्षणेन च नौ ततः ।
निगूढोऽदृश्यपाशो द्वकर्षति शिशुकालतः ॥
मातर्निरुत्तरा ! लज्जा स्पृशति नीरवं तव ।
अन्धकारस्तरं भित्वा सर्वेष्वङ्गेषु मां किल ।
निमीलयति नेत्रे च, भवतु तिष्ठ तत् ।
अलमलं च उक्त्वा तत् त्यक्तवती कथं च माम् ।
एतस्मिन् विश्वसंसारे दानं यत्प्रथमं विधेः ।
मातृस्नेहः कथं त्वं वा देवतायाश्च तद्धनम् ।
हृतवत्यात्मसन्तानान् मा देहि तत् कथोत्तरम् ।
प्रत्यानेतुं कथं क्रोडमागता कथयाद्य तत् ।

कुन्ती– वज्रशतसमा वत्स, शतधा भर्त्सना तव ।
विदारयतु खण्डेन कठिनं हृदयं मम ॥

अत्यजं त्वां यतो वत्स, तदभिशापतो मम ।
पुत्रहीनं दधच्चितं वक्षसा पञ्च पुत्रकम् ।
तथापि विश्वमध्ये हा बाहुर्मम कृते तव ।
धावति भ्रमणं कुर्वन् करोत्यन्वेषणं सदा ॥

कृते वञ्चितपुत्रस्य चित्तं प्रज्वाल्य स्वं दहत् ।
करोत्यारात्रिकं विश्वदेवस्य दीप्तदीपतः ॥
अद्याऽहं भाग्यवत्यस्मि प्राप्ता ते दर्शनं यतः ।
वाणी न स्फुटिता काऽपि तवैतस्मिन् मुखे यदा ।
अपराधं तदा कुर्वं कठोरं त्वयि पुत्रके ॥

किंमातरं क्षमस्वाऽद्य तव तेन मुखेन माम् ॥

वक्षसि सा क्षमावह्नि भर्त्सनाधिकतेजसा ।
प्रज्वाल्य दग्धपापां मां निर्मलीकुरुतामिति ॥

कर्णः– प्रयच्छ पादधूलिं ते पादधूलिं प्रयच्छ मे ।
अश्रु गृहाण मातर्मे ।

कुन्ती– गृह्णामि त्वां स्ववक्षसा ।
तत् सुखस्याशया वत्स, न तवद्वारमागमम् ॥

आगता स्वाधिकारे त्वां प्रतिष्ठापयितुं यतः ।
न हि सूतस्य पुत्रस्त्वं राज्ञः सन्तान एव तु ॥

दूरे निक्षिप्य हे वत्स सर्वावमाननां तव ।
आगच्छ शिर उत्तोल्य भ्रातरः पञ्च यत्र ते ॥

कर्णः– मातः सूतस्य पुत्रोऽहं राधा माता हि यन्मम ।
अधिकं गौरवं तस्मान्नास्ति मम च किञ्चन ॥

पाण्डवाः पाण्डवाः सन्तु कौरवाश्चाऽपि कौरवाः ।
ईर्ष्यां कस्मै न कुर्वे वा

कुन्ती– स्वराज्यं बाहुशक्तितः ।
उद्धृत्य वत्स आदत्स्व, भ्राता युधिष्ठिरः स्वयम् ।
धवलं व्यजनं मन्द-मन्दं ते दोलयिष्यति ।
भीमो धास्यति छत्रं च, तथा वीरो धनञ्जयः ॥

रथस्य सारथिस्ते स्याद् धौम्य ऋषिः पुरोहितः ।
गास्यति वेदमन्त्रांश्च, त्वं शत्रुविजयी मुदा ।
अखण्डेन प्रतापेन रत्नसिंहासनोपरि ।
सपत्नहीनसाम्राज्ये स्थास्यसि बान्धवैः सह ॥

कर्णः– राजसिंहासनम् ! मातृस्नेहपाशस्य बन्धनम् ।
प्रत्याख्याति स्म यस्तस्मै राज्याश्वासं प्रयच्छसि ॥

अकार्षीर्वञ्चितं मातरेकदा सम्पदो यतः ।
अद्य प्रत्यर्पणं तस्याः साध्यातीतं पुनस्तव ॥

मातरं मे मम भ्रातॄन् राजकुलं तथा मम ।
एकेनाऽपि मुहूर्तेन ममैव जननक्षणे ॥

निर्मूलमकरोः सर्वं, छलयन्नद्य यद्यपि ।
तां सूतजननीं, राजमातरमह्वयामि च ।
मातेत्याभाष्य लोभेन, कुरुराजसकाशतः ।
बद्धोऽस्मि बन्धनैर्यैश्च च्छित्त्वा धावामि तानि चेत् ।
राजसिंहासनोद्देश्ये ततो धिङ् मां पुनः पुनः ॥

कुन्ती– वीरस्त्वं पुत्र-धन्योऽसि, हा धर्मः कठिनस्तव ।
कीदृगेष महादण्डं ? काऽजानात् तद्दिने च हा ।
असहायं शिशुक्षुद्रं सद्यो जातं यमत्यजम् ।
कदा लब्ध्वा बलं वीर्यम् अन्धकारपथेन सः ।

प्रत्यावृत्याऽऽगतो हन्ति निजनिर्दयहस्ततः ।
स्वमातुः क्रोडसन्तानमागत्य सहसैकदा ॥
एष को वाऽभिशापो मे

कर्णः– मातर्मास्म भयं कृथाः ।
पाण्डवानां जयोऽवश्यम्भावीति कथयामि तत् ।
अद्य युद्धफलं घोरं रात्रेरहमपाठिषम् ।
तिमिरफलके स्पष्टं नक्षत्रज्योतिषा पुरः ॥
शान्ते स्तब्धक्षणे चाऽस्मिन्ननन्तान् नभसो मुहुः ।
रोषविश्वासहीना सा व्यर्थतायां लयं गता ।
जयहीना प्रचेष्टा या तत्सङ्गीतं मनो मम ।
प्रविशति तथैवाऽऽशाहीन-कर्मण उद्यमः ॥
परिणामं निरीक्षेऽहं शून्यं शान्तिमयं तथा ॥
निश्चितो यस्य पक्षस्य पराजयो भविष्यति ।
परिहर्तुं च तं पक्षं मातर्मां मास्म आह्वय ॥
पाण्डवा जयिनः सन्तु राजानश्च भवन्तु ते ।
निष्फलस्य हताशस्य पक्षे स्थास्यामि सर्वदा ॥
निक्षिप्य मां गताऽसि त्वं जन्मरात्रे धरातले ।
नामहीनं तथा गेहहीनम्-अद्याऽपि मां पुनः ।
दीप्तिकीर्तिविहीनस्य पराजयस्य चोपरि ।
चिराय जननि त्वं मां त्यज निर्ममहस्ततः ।
आशीर्वादमिमं मह्यं प्रदाय याहि केवलम् ।
जयलोभाद् यशोलोभाद राज्यलोभाद्थापि च ॥
अये वीरस्य सद्गत्या भ्रष्टः कदापि मा भवम् ॥



## -प्रस्थानाभिशापम्-

( विदाय अभिशाप )

कचः- देहि मे देवयान्याज्ञां देवलोकं प्रतिष्ठताम् ।
दासस्तव, समाप्तोऽद्य वासो गुरुगृहे मम ॥

आशीर्वादमिमं देवि, प्रयच्छ मे यशस्विनि ।
विद्याया शिक्षिता सा मे चिरं तिष्ठतु मानसे ॥

ज्वलन्ती प्रभयाऽत्युग्रमुज्ज्वलरत्नसन्निभा ।
अक्षयकिरणः सूर्यः सुमेरुशिखरे यथा ॥

देवयानी- पूर्णो मनोरथः; प्राप्ता आचार्यस्य सकाशतः ।
वाञ्छिता दुर्लभा विद्या, वर्षसहस्त्रकस्य ते ।
दुःसाध्या साधना सिद्धा, विद्यते न हि किं तव ।
अन्या वा कामना काचित् मनसा पश्य चिन्तया ॥

कचः- नाऽपरा कामना काचित्, सम्पूर्णो मे मनोरथः ।

देवयानी- नास्ति काऽन्या ? तथापि त्वं निरीक्षस्व सकृत् पुनः ।
वगाह्य हृदयप्रान्ते वाञ्छा का चेत् प्रलीयते ।
कुशाङ्कुर-समाना या क्षुद्रा दृष्टेरगोचरा ।
तीक्ष्णतमा तथाप्येषा ( मर्मन्तुदाऽति दुःसहा ) ॥

कचः- अद्य मे जीवनं पूर्णं कृतार्थञ्च सुलक्षणे ।
मानसे नास्ति दैन्यञ्च, नास्ति कुत्राऽपि शून्यता ।

देवयानी- त्रिभुवनस्य मध्ये त्वं सुखी ( सार्थकसाधनः ) ।
वहन्नुच्चेन शीर्षेण गौरवं दिव्यमुज्ज्वलम् ।
इन्द्रलोकं प्रतिष्ठस्व स्वकार्यसिद्धिहर्षतः ॥

आनन्द ध्वनिरुत्तिष्ठेत् स्वर्गपुरे मनोहरः ।
वाद्येत मङ्गलशङ्खस्तत्र चोपस्थिते त्वयि ॥

वर्षिष्यन्ति च पुष्पाणि शिरसि ते सुराङ्गनाः ।
नन्दनोद्यानतः सद्यश्छिन्ना मन्दारमञ्जरीः ॥

किन्नर्योऽप्सरसः स्वर्गपथ उच्चारयन्ति ते ।
कति च कलकण्ठेन मुदा हूलहुलि-ध्वनिम् ॥

बहुक्लेशेन हा विप्र दिवसा व्ययितास्त्वया ।
कठोराध्ययनेनेह विदेशे विजने वने ॥
नाऽऽसीत् काऽपि समीपे च स्मारणार्थं तथा तव ।
सुखमयस्य गेहस्य, प्रवासवेदनां तव ।
निवारयितुम्, आतिथ्यं यथाशक्ति मया कृतम् ।
दरिद्र-पर्णशालायां यदासीत् तेन वस्तुना ॥
तथाप्यत्र कुतो लभ्यं स्वर्गसौख्यं सुदुलर्भम् ।
अनिन्दितानि वक्त्राणि कुतोऽत्र सुरयोषिताम् ॥
मानसे मे तथाप्याशा सुखलोकं गमिष्यतः ।
आतिथ्यास्यापराधाश्च स्थास्यन्ति स्मरणे न ते ॥

कचः– सुकल्याणेन हासेन प्रसन्नमनसा तया ।
अद्याऽऽपृच्छस्व दासं ( स प्रयातु स्वनिकेतनम् ) ॥

देवयानी– हासः कुतः ? सखे नैषा स्वर्गपुरी सुखोज्ज्वला ।
पुष्पे कीटसमा हाऽत्र दृढमावेष्ट्य वाञ्छितम् ।
मुद्रितपद्मिनी पार्श्वे निरस्तभ्रमरो यथा ।
( मधुपानेच्छया मूढ ) उड्डीयते पुनः पुनः ॥
सुखे विलीयमानेऽत्र स्मृतिरेका तपस्विनी ।
वसन्ती भवने शून्ये दीर्घं श्वसिति ( दुःसहम् ) ॥

हासस्तु सुलभो नाऽत्र, गच्छ बन्धो यथेप्सितम् ।
उत्कण्ठिताः सुरास्तत्र कालनाशेन किं मृषा ॥

गच्छसि किं सखे सत्यं सर्वं किं शेषतां गतम् ।
वाक्यद्वयेन शुष्केण सम्भाषणादनन्तरम् ।
गते वर्ष सहस्रान्ते प्रस्थानं वा किमीदृशम् ॥

कचः— को वा ममाऽपराधोऽत्र न जाने देवयान्यहम् ।

देवयानी— यावद् वर्षसहस्रं हा तुभ्यं चारुवनस्थली ।
प्रयच्छद् वल्लभां छायां तथा पल्लवमर्मरः ।
अश्रावयद् विहङ्गानां कूजनं श्रवणप्रियम् ।
तां परित्यज्य किं गच्छेदनायासतयैतया ?
कानने तरुराजिश्च म्लानीभूतेव दृश्यते ।
गाढतरा वनच्छाया तमो-लिप्ताऽद्य शोकतः ।
क्रन्दति पवनः पश्य, पुष्पपत्राणि वृक्षतः ।
पतन्ति यास्यसि त्वं नु सहास्येनाधरेण किम् ।
निशान्तस्य सुखः स्वप्नो निद्रान्ते लीयते यथा ॥

कचः— वनभूमिमिमां मन्ये देवयानि सुशोभने ।
मातृभूमिसमाम् अत्र जन्मलाभो नवो मम ॥

अनादरोऽत्र भद्रे मे नास्ति कुत्राऽपि मानसे ।
चिरं कालं स्मरिष्यामि चिरं प्रीतिभरेण ताम् ॥

देवयानी— एतद् वटतलं तच्च यत्र त्वं प्रत्यहं भवान् ।
गोचारणार्थमागत्य मध्याह्नप्रखरातपे ।
अभवन् निद्रितः, क्लान्तकाये तव तदाऽददात् ।
छायां सुदीर्घविस्तीर्णामतिथिवत्सलस्तरुः ॥

सुखां सुषुप्तिमानीय मृदुशब्देन वीजनम् ।
कुर्वंश्च प्राददात् तुभ्यं झर्झरायितपल्लवैः ॥

गच्छ सखे, सकृद्रोषवारार्थमुपविश्य च ।
परिचिततरोर्निम्ने स्निग्धच्छाया-समादरम् ॥

प्रतिगृह्य प्रतिष्ठस्व, तेन चिरायितेन ते ।
हे बन्धो, नो क्षतिः काऽपि स्वर्गस्य च भविष्यति ॥

कचः– मन्ये प्रस्थानकालेऽस्मिनसर्वानभिनवानिव ।
चिरं परिचितानेतान् उत्सुकान् बान्धवान् मम ॥

व्यग्रस्नेहेन सर्वे तु पलायनोद्यतं प्रियम् ।
बन्धुकामा नवं जालं विस्तृण्वन्ति च सर्वतः ।
शोभाराशिमनिर्वाच्यमनुरोधं तथाऽन्तिमम् ॥

नमो वनस्पते तुभ्यमाश्रितजनबन्धवे ।
छायायामुपवेक्ष्यन्ति श्रान्तास्ते पथिकाः कति ।
कति विद्यार्थिनो वाऽत्र बहवो मादृशास्तव ।
प्रच्छन्नास्तलदेशेऽस्मिन् स्निग्धप्रच्छायशीतले ।
अनुकृत्य पतङ्गानां मधुरं मृदुगुञ्जनम् ॥

निर्जने नीरवं पाठमभ्यसन्ति तृणासने ॥

आगत्य ऋषिबालाश्च प्रातः स्नानादनन्तरम् ।
शोषयिष्यन्ति शाखासु सजलवल्कलानि ते ॥

गोपबालाश्च मध्याह्ने क्रीडिष्यन्तीह निर्भयम् ।
स्मृतौ विराजतां बन्धुस्तन्मध्येऽयं पुरातनः ॥

देवयानी– पीत-स्वर्गसुधां तां नः पुण्यां होमपयस्विनीम् ।

मा विस्मर कदाचित्तु विद्यागर्वान्धमानसः ॥

कचः– दुग्धं सुमधुरं तस्याः स्वादीयश्चामृतादपि ।
क्षीयन्ते सर्वपापानि सकृद् दर्शनमात्रतः ॥

शान्तिस्वरूपिणी माता शुभ्रकान्तिः पयस्विनी ।
श्रान्ति क्षुधां तथा तृष्णां निर्व्यपेक्ष्य सदा वने ।
एकाग्रमानसो भक्त्या तामसेवे सुधामयीम् ॥

गहने कानने घोरे श्यामशष्पे सरित्-तटे ।
पर्यटितस्तया सार्धमेकाकी बहुवासरान् ॥

विचरन्ती तटे निम्ने भुक्त्वाऽऽतृप्तेर्यदृच्छया ।
सुस्निग्धं प्रचुरं स्वादु तृण-राशिं सुकोमलं ।
रोमन्थं सकलां वेलां तरुतले तृणासने ॥

शयानाऽवर्तयद् धीरमालस्य-मन्थरा तनुः ।
म्रक्षितं स्नेहधाराभिर्विशालं नयनद्वयम् ।
मध्ये मध्ये समुन्मील्य शान्तकृतज्ञदृष्टितः ।
अलिक्षतेव देहं मे जननीव पयस्विनी ॥

स्मरिष्यामि च तां दृष्टिं स्निग्धामचञ्चलां तया ।
परिपुष्टां तनुं शुभ्रां तस्याश्चिक्कणपिच्छलाम् ॥

देवयानी– स्मरेर्वेणुमतीं चैव स्त्रोतस्विनीं कलस्वनाम् ।

कचः– न जातु विस्मरिष्यामि वेणुमतीं सरिद्वराम् ।
आनन्दकलसङ्गीतं बहुपुष्पितकुञ्जतः ॥

वहति मिष्टकण्ठेन स्निग्धा मयि शुभव्रता ।
शुश्रूषावाहिनी धन्या साध्वी ग्रामवधूरिव ॥

सदा क्षिप्रगतिः पुण्या प्रवाससङ्गिनी मम ॥

देवयानी– हा हा बन्धो प्रवासेऽस्मिन् काऽप्यन्या सहचारिणी ।
आसीच्छुभार्थिनी पार्श्वे तव यस्या दिवानिशम् ।
यत्न आसीन् मनो मध्ये विस्मारयितुमेव ते ।
प्रवासस्य महादुःखं दुराशैषा वृथैव हा ॥

कचः– ग्रथितं नाम तस्याश्च जीवितेन चिरं मम ॥

देवयानी– अप्यस्ति मानसे तत्ते यद्दिने प्रथमागतः ।
किशोरो ब्राह्मणो बालसूर्यकिरणसन्निभा ।
स्निग्धदीप्त्या विलिप्ताऽसीत् गौरवर्णा तनुस्तव ।
पुष्पमाल्यधरः कण्ठे भाले चन्दनचर्चितः ।
पट्टवासा मृदुं स्निग्धं नेत्रयोरधरे वहन् ।
प्रसन्नं सरलं हासं पुष्पोद्यान उपस्थितः ॥

कचः– सद्यःस्नाता भवन्ती च दीर्घार्द्रकेशजालिनी ।
नव-शुक्लाम्बरी हस्ते धृत्वा पुष्पकरण्डिकाम् ।
उषेव ज्योतिषा स्नाता मूर्त्ता स्निग्धोज्ज्वला शुभा ।
पूजार्थं नव पुष्पाणामेकाकिनी रता चये ॥

'श्रमं नाऽर्हसि कल्याणि' विनयेनोक्तवानहम् ।
'आदेशं देहि मे देवि पुष्पाणि चिनवानि ते' ॥

देवयानी– परिचयं तदाऽपृच्छमहं सविनयं तव ।
'पुत्रो बृहस्पतेरस्मि' विनयेनाऽवदद्भवान् ॥
'शिष्यत्वं ते पितुर्द्वारमहमादातुमागतः ।'

कचः– ब्राह्मणं स्वर्गवास्तव्यं दानवानां गुरुर्यदि ।

भद्रे मां विमुखीकुर्याच्छाङ्काऽऽसीन्मम मानसे ॥

देवयानी– तस्याऽन्तिकमहं गत्वा स्मितानना न्यवेदयम् ।
भिक्षैकाऽस्ति पितर्मे ते चरणयुगपङ्कजे ॥

उपविश्य स्वपार्श्वे मां मूर्धनि हस्तं विलिप्य च ।
मृदुस्वरेण शान्तेन स्नेहेनेदमभाषत ।
'अयि वत्से, न मे तुभ्यमदेयमस्ति किञ्चन ।'
पुत्रो बृहस्पतेः स्वर्गात् त्वदीयद्वारमागतः ॥

शिष्यीकुरुष्व तं तात समीपे प्रार्थना तव ॥'

यद्यपि दिवसात् तस्मात् बहुकालो लयं गतः ।
तथापि मन्यते प्रातस्तस्यैतस्य दिनस्य तत् ॥

कचः– क्रूरा दैत्यास्त्रिवारं मां हतवन्तो वने यदा ।
प्रत्यर्पितवती प्राणान् देवि, कृत्वा दयां मयि ।
स्थास्यति जाग्रती नित्यं हृदये सा कृतज्ञता ॥

देवयानी– न मे दुःखं ततः किञ्चिद् विस्मर त्वं कृतज्ञताम् ।
भस्मीभवतु तत्सर्वं यद्यदुपकृतं मया ॥

दानस्य प्रतिदानं च न किञ्चित् प्रतियाच्यते ।
काचित् सुखस्मृतिः किं ते मनसि न हि विद्यते ?
अन्तस्तथा बहिश्चैव आनन्दस्य स्वनस्तव ।
ध्वनितोऽभूत् दिने कस्मिन्, सायङ्काले क्वचिद्यदि ।
स्वाध्यावसरे तत्र वेणुमती नदीतटे ।
पुष्पवनोपविष्टस्य पुलकराशिरद्भुतः ।
चित्ते जागरितो जातः, पुष्पसौरभवद् यदि ।

व्याप्तवान् हृदयोच्छ्वास- सायाह्नगगनं तथा ।
प्रस्फुटत् पुष्पकुञ्जञ्च स्मरेः सुखकथाञ्च ताम् ॥

यातु कृतज्ञता दूरं, का चेद् गीतवती यदि ।
गानं तत्र सखे यत्ते चित्ते सुखं च दत्तवत् ।
पर्यधात् तादृशं वस्त्रं सखे कस्मिन् दिने यदि ।
प्रशंसावाक्यमुद्बुद्धं मनसि पश्यतस्तव ।
चेतसा च प्रसन्नेन तथा तृप्तेन चक्षुषा ।
अचिन्तयोऽद्य तवैवेयं सुन्दरी सुष्ठु दृश्यते ॥

स्वर्गधाम्नि सुखे तस्मिन्नवसरक्षणो तव ।
तद्वार्तास्मरणं कुर्याः कतिषु दिवसेष्विह ।
अरण्ये दिग्दिगन्तेषु नीलवर्णा जटा यथा ।
आषाढश्यामसुस्निग्ध-वर्षाणामपतद् भुवि ।
विरामहीनवृष्टीनां घनघटोत्सवा नवा ॥

कर्महीने दिने तस्मिन् सघनकल्पनाभरात् ।
हृदय पीडितं जातं, तथा कति-दिनेषु च ।
अकस्मात् तु वसन्तस्य उल्लासस्त्रोतसाऽऽकुलः ।
निर्बाधः कर्महीनश्च यौवनोत्साह आगतः ॥

तेनऽऽवेगप्रवाहेण सङ्गीतमुखरेण तु ।
लतासु पुष्पपत्रेषु वने वनान्तरेषु च ।
आनन्दप्लावनं व्याप्तं प्रतितरङ्गभङ्गतः ॥

स्मर बन्धो, सकृत् तावद् उषाज्योत्स्नातमांसि ते ।
पुष्पगन्धघनाश्चास्मिन्ननुभूता वने सतः ।
मिश्रिता जीवनेनैव दुःखेषु च सुखेषु च ॥

तन्मध्य ईदृशं प्रातः सन्ध्यावेला च तादृशी ।
ईदृशी मुग्धरात्रिश्च ईदृग् हृदयखेलनम् ॥

ईदृशं सुखजातञ्च तथा च मुखमीदृशम् ।
दृष्टानि मानसे यानि चिरं चित्रस्य रेखया ।
चिरं दिनं चिरं रात्रिं स्थास्यन्ति नाऽङ्कितानि किम् ?
केवल उपकारो, न शोभा प्रीतिर्न काचन ॥

कचः– सखि ! यदस्ति चाऽन्यत् तन् न प्रकाश्यं कथञ्चन ।
वहति मर्ममध्ये मे शोणितवत् सदा च यत् ।
तत् कथं बहिरानीय प्रदर्शयामि वा वद ॥

देवयानी– सखे जानामि तत्सर्वं चकितं हृदयं तव ।
अपश्यं कतिवारं च हृदयज्योतिषा यथा ॥

चक्षुः पक्ष्मनिपातेन; नार्याः स्पर्धेयमद्य तत् ।
तिष्ठ तिष्ठेह मा याहि न· यशोगौरवे सुखम् ॥

आवां द्वौ मिश्रयित्वा नौ विश्रब्धं निभृतं तथा ।
विस्मृत्य निखिलं स्निग्धं विमुग्धं हृदयद्वयम् ।
स्त्रक्ष्यावो निर्जनस्याऽस्य वनस्य च्छायया सह ।
इह ह्यभिनवं स्वर्गलोकं वेणुमतीतटे ॥

अहं जानामि हे बन्धो रहस्यं सर्वमेव ते ॥

कचः– न हि न हि कदाप्येतद् देवयानि न तन्न तत् ॥

देवयानी– न तत्; प्रवञ्चना मिथ्या ! नाऽपश्यं किमहं तव ।
मानसं, न हि जानाति प्रेमान्तर्यामि किं भवान् ॥

विकसितानि पुष्पाणि लीनानि सन्ति पल्लवैः ।

निलीयतेऽस्य गन्धः क्व ? कति दिनेषु हे प्रिय ।
मुखमुत्तोलयत्येवं दृष्टिपातं च कुर्वति ।
मम कण्ठध्वनिं चैव तथा श्रुतवति त्वयि ॥

हृदयं व्याप्य सर्वाङ्गं तवाऽकम्पत तत्क्षणात् ।
दोलिते हीरके ज्योतिः पतति विकिरद् यथा ॥

नाऽपश्यं किमहं तत्तु ? बन्धने पतितः सखे ।
समीपे मे भवान् बन्दी-छेत्तुं तद् दृढबन्धनम् ।
समर्थो न भवेदिन्द्र इन्द्रो नाऽतः परं तव ॥

कचः– एतदर्थं कृता दैत्यपुरेऽस्मिन् साधना मया ।
वत्सराणि सहस्त्रं च सत्यमेतच्छुचिस्मिते ॥

देवयानी– कथं नहि ! जगत्यस्मिन् विद्यायै केवलं नरः ।
दुःखानि सहते किन्नु ? किं वा कश्चिन्नरः क्वचित् ।
रमणीरत्नलाभार्थं कृतवान् न महातपः ॥

पत्नीं वरयमाणः किं स्वयंवरे नृपो न वा
आकाशे प्रखरे सूर्ये न्यस्तनेत्र उपोषितः ।
तपत्या आश्रयाऽकार्षीत् कठोराः साधनाः कति ।
विद्यैव दुर्लभा हाऽत्र प्रेमा किं सुलभो भृशम् ।
वर्ष सहस्त्रकं यावत् साधनां कृतवान् भवान् ।
किं तद्धनं कृते यस्य न जानाति स्वयं च तत् ॥

पार्श्वैकस्मिन् स्थिता विद्या पार्श्वान्तरे स्थिताऽस्मि ते ।
कदा मां वा कदा तां च सौत्सुक्यं त्वमयाचथाः ॥

मनस्ते संशयारूढं संगोपनेति यत्नतः ।

आराध्नोन् नौ द्वयं तावद्, अद्यैकस्मिन् दिने शुभे ॥
आवामत्राऽऽगते पश्य पतितुं बन्धने स्वयम् ॥

यां त्वं काङ्क्षसि निर्धार्य गृहाण सादरं च ताम् ।
सरलसाहसात् तस्मात् सत्यं ब्रवीषि चेदिदम् ।
विद्यायां नास्ति सौख्यं मे यशसि न सुखं तथा ॥

देवयानि त्वमेका हि सिद्धिर्मूर्तिमती मता ।
त्वामेवाऽहं वृणोम्यद्य क्षतिस्तत्र न काचन ।
लज्जा च न हि तस्मिन्, वा, सखे हे रमणीमनः ।
वत्सराणां सहस्रस्य साधनाया धनं हि तत् ॥

कचः– देवानां सन्निधानेऽहं शुभे तत्कृतवान् पणम् ।
महासञ्जीवनीं विद्यामुपार्ज्य गुरुसन्निधेः ।
देवलोकं प्रयास्यामि तदर्थमहमागतः ॥

सर्वदा जाग्रदासीत् स पणश्च मानसे मम ।
पूर्णा मम प्रतिज्ञा सा चरितार्थञ्च जीवनम् ।
एतावति गते काले स्वार्थोऽद्याऽन्यो न काम्यते ॥

देवयानी– धिङ् मिथ्याभाषिणं, विद्यां केवलं त्वमयाचथाः ।
अहरहो गुरोर्गेहे निर्जने छात्ररूपतः ।
न्यस्ताक्षः पाठ्यशास्त्रे किमासीरध्ययने रतः ?
उदासीनः किमासीश्च सर्वेष्वन्येषु वस्तुषु ?
पाठशालां परित्यज्य वनाद् वनान्तरं भ्रमन् ।
पूजार्थं ग्रथितं माल्यं स्मितविकसिताननः ।
अस्यै विद्याविहीनायै प्रादा आनीय वा कथम् ?
कठोरव्रतमेतत्किम् ? विद्यार्थिसदृशस्तथा ॥

किमेष व्यवहारस्ते ? प्रभाताध्ययने यदा ।
रतस्त्वम् अहमागम्य हसन्ती तव सन्निधौ ।
स्थिता हस्तेन धृत्वा च शून्यां पुष्पकरण्डिकाम् ।
उपेत्य पुस्तकं त्यक्त्वा समुत्थायाऽति सत्वरम् ।
प्रफुल्लैः शिशिरार्द्रैर्मां पुष्पैः पूजितवान् कथम् ॥

यदाऽपराह्णकालेऽहमकुर्वि जलसेचनम् ।
तरूणामालवालेषु, श्रान्तां दृष्ट्वा तदा च माम् ।
सदयः सन्नदा मह्यं तोलयित्वा कथं जलम् ?
परिहाय कथं पाठं प्रियं मृगशिशुं मम ।
अपालयस्तथा स्वर्गाच्छिक्षित्वा यत्त्वमागतः ।
सङ्गीतं कथमभ्यस्त आसीः श्रावयितुं च तत् ।
सन्ध्याकाले नदीतीरे तूष्णीं तमो यदाऽगमत् ।
स्निग्धच्छायं यथादीर्घं प्रेमलताक्षिपल्लवम् ॥

स्वर्गस्य चातुरीजालैर्हृतवांश्च कथं ततः ।
विद्यामादातुमागत्य विश्रब्धं हृदयं मम ॥

इदानीमवगच्छामि पितुर्मे हृदयं यतः ॥

अर्थी निवर्तते राजद्वाराल्लब्धमनोरथः ।
मुद्रा द्विचतुरा हर्षाद् द्वारिहस्ते यथा ददत् ।
यास्यसि कृतकार्यो मे दत्वा किञ्चित् कृतज्ञताम् ॥

कचः— अभिमानिनि हा नारि, किं सत्यश्रवणात् सुखम् ।
धर्म एको हि जानाति कृतवान् न प्रवञ्चनाम् ।
प्राणैरकपटैस्तावन्, नन्दितेनान्तरेण च ।
सन्तोषसाधनं कुर्वन् सेवित्वा त्वां यथाविधि ।

अकार्षं यदि दोषं तद्दण्डं विधिः प्रयच्छतु ॥

आसीन्मे मानसे नाऽहं कथयिष्यामि तद्वचः ।
ब्रूहि ज्ञानेन किं तस्य येन त्रिभुवने भवेत् ।
न हि कस्योपकारो, या मदीयैकान्तिकी कथा ॥

किमद्य तेन तर्केण रतिमानस्मि वा न वा ।
यदस्ति मम कार्यं तत् करिष्यामि सुनिश्चितम् ॥
स्वर्गवन् न हि मन्येत स्वर्गो मे मानसे यदि ।
यदि म्रियेत वा चित्तं दूरे वनतले भ्रमत् ।
विद्धं मृगसमं, सर्वकार्यमध्येषु वा यदि ।
दग्धप्राणेषु संसक्ता चिरं तृष्णा भवेच्च मे ।
प्रत्यावृत्य च गन्तव्यं सुखशून्यं तथापि च ।
स्वर्गधाम मया भद्रे नाऽन्या च गतिरस्ति मे ॥

एतां सञ्जीवनीं विद्यां देवताभ्यः प्रदाय च ।
दत्वा च नवदेवत्वं मम प्राणास्तदैव हि ।
भवेयुः सार्थका, याचे तत् पूर्वं नाऽऽत्मनः सुखम् ॥

मां क्षमस्वाऽपराधांश्च देवयानि क्षमस्व मे ॥

देवयानी– मनसि मे क्षमा कुत्र ! ब्रांह्मण कृतवान् भवान् ।
कुलिशकठोरं नारीचित्तमेतद्, गमिष्यति ।
सर्वाण शोकदुःखानि सुदूरं परिहाय च ।
हृष्टः सन् कृतकार्यत्वात् स्वर्गलोकं सगौरवम् ।
कार्यमतः परं किं वा व्रतं किं वा भवेन्मम् ।
किं तिष्ठेदवशेषो वा कस्य स्याद्गौरवं तथा ॥

ममाऽस्मिन् जीवने शून्ये प्रतिहते च निष्फले ?
वनेऽस्मिन्नुपवेक्ष्यामि नतशिरा हतप्रभा ।
एकाकिनी च निःसङ्गा लक्ष्यहीना अतः परम् ।
यस्यां दिश्यपि घूर्णन्ती चक्षुः क्षिप्स्यामि मे ततः ।
विध्येयुर्निष्ठुरा मां च सहस्त्रं स्मृतिकण्टकाः ॥

निलीना हृदये क्रूरा लज्जा दशेत् पुनः पुनः ।
निष्ठुर पान्थ हे धिग् धिग् कस्मात् स्थानात् त्वमागतः ।
उपविश्य मम प्राणवनच्छायातले त्वया ।
यावद् दण्डद्वयं कृत्वा विश्रामच्छलयापनम् ।
छित्त्वा च जीवनोद्यानात् पुष्पाणीव सुखानि मे ।
सूत्रेणैकेन मालैका ग्रथिता साऽपि मालिका ।
प्रस्थानसमये कण्ठे नाऽऽदत्ता हेलया परम् ।
सूक्ष्मं तदपि सूत्रञ्च द्विधा छित्त्वा गतं पुनः ।
भूमौ लुठति निःशेषं प्राणानां महिमा मम ॥

अभिशापो ममैवैष भवतु च तवोपरि ।
यद् विद्यायाः कृते मे त्वम् अवहेलां करोषि वा ॥

सा तु पूर्णा वशीभूता न जातु ते भविष्यति ॥

केवलं भारवाही त्वं भवेस्तस्या न शक्नुया ।
भोक्तुं तां, दास्यसे शिक्षां नाऽलं प्रयोगकर्मणे ॥

कचः– अहं ददे वरं देवि सुखिनी त्वं भविष्यसि ।
विस्मरिष्यसि सर्वांश्च ग्लानीर्विपुलगौरवात् ॥



## -गान्धार्या निवेदनम्-

(गान्धारीर निवेदन)

दुर्योधनः— प्रणतश्चरणे तात ।

धृतराष्ट्रः— पृच्छामि रे दुराशय ।
अपि सिद्धं मनोऽभीष्टम् ?

दुर्योधनः— विजयी नूनमस्म्यहम् ।

धृतराष्ट्रः— जित्वाऽखण्डमिदं राज्यं सुखं क्व तव दुर्मते ।

दुर्योधनः— सुखं न याचितं राजन् विजय एव वाञ्छितः ।
अद्याऽहं विजयी तस्मात्, क्षत्रियस्य क्षुधा पितः !
क्षुद्रेण सुखभारेण न कदापि प्रपूर्यते ।
कुरुपते, मया सद्यः पीतं जयरसामृतम् ।
ईर्ष्यासागरसञ्जातं दीप्तज्वालाग्निमिश्रितम् ॥
पितरद्य सुखी नाऽहं विजयी विजयी ह्यहम् ।
सुखेऽतिष्ठाम तावच्च पाण्डवाः कौरवा यदा ।
संहता वयमेकत्र चन्द्रोरसि कलङ्कवत् ।
गर्वेण कर्मणा दीप्त्या विहीनेन सुखेन हि ॥
सुखेनाऽऽस्म तदा तात सशङ्क शत्रवो यदा ।
श्रुत्वा गाण्डीवटङ्कारं नाऽऽस्माकं द्वारमागमन् ॥
तदा नूनं सुखेनाऽऽस्म जयदृप्तकरैर्यदा ।
भ्रातृप्रीत्या धरां दुग्ध्वा भागं नः पाण्डवा अदुः ॥
अनन्तकौतुकैः सार्धं निश्चिन्त-चेतसा तथा ।
प्रत्यहं नवभोगानां सुखेनाऽस्म तदा खलु ॥
सुखेऽतिष्ठाम तावच्च महाराज वयं तदा ।

पाण्डवानां जयध्वान आगत्य दूरदूरतः ।
प्रतिध्वनिरवैर्यावद् विद्धवान् कौरवश्रुतीः ॥
पाण्वानां यशोबिम्बप्रतिबिम्बः समेत्य च ।
कुरूणां मलिनं कक्षम् उज्ज्वलाङ्गुलिभिर्यदा ।
प्रकाशयत्, सुखेनाऽऽस्म पितस्तावद्यदा वयम् ।
निर्वाप्य सर्वतेजः स्वं पाण्डवगौरवस्य च ।
स्थिताऽधस्तान् निरुद्वेगा आकृत्या स्निग्ध-शान्तया ।
जडत्वकूपमध्ये तु भेको हैमन्तिको यथा ॥
वहन्तोऽभिभवं शीर्षैर्वनं यान्त्यद्य पाण्डवाः ।
अद्य नाऽहं सुखी तात ! अद्याऽहं विजयी महान् ॥

धृतराष्ट्रः— भ्रातृभ्यस्तव धिग् द्रोहः, पाण्डवानां पितामहः ।
कौरवानाञ्च युष्माकमेकः किं विस्मृतस्त्वया ?

दुर्योधनः— विस्मर्तुं न हि शक्ये तदेक एव पितामहः ।
तेजसाऽर्थेन मानेन न तथापि समा वयम् ॥
अभविष्यन् न चेत् क्षोभः परे ते दूरवर्तिनः ।
रात्रेश्चन्द्रो न हि द्वेष्टि मध्याह्नतपनं क्वचित् ।
पूर्वोदयगिरेः शृङ्गे प्रभाते युगपत् तथा ।
न जातु भवति स्थानं सूर्यलोकद्वयस्य तु ॥
दूरमस्तं गतो द्वन्द्वो यतोऽद्याऽहं जयी पितः ।
अद्याऽहमेक एवाऽस्मि

धृतराष्ट्रः— विषमयी भुजङ्गमी ।
ईर्ष्या क्षुद्रा;

दुर्योधनः— न हि क्षुद्रा; ईर्ष्या सुमहती खलु ॥
ईर्ष्या हि बृहतां धर्मो, वनस्पति-द्वयं वने ।

तिष्ठति व्यवधानेन, किन्तु लक्षं तृणानि च ।
लीनानि प्रान्तरे सन्ति तिष्ठन्त्येकत्र वक्षसि ॥
नक्षत्राणि सहस्त्रं तु सौभ्रात्रबन्धनेन च ।
तिष्ठन्ति गगने, सूर्य एक एव तथा शशी ॥
दूरे वनान्तरालेऽद्य पाण्डुचन्द्रलेखा कृशा ॥
मलिनाऽस्तङ्गता, चैकः कुरुसूर्यो विराजते ॥
अहमद्य जयी तात !

धृतराष्ट्रः— अद्य धर्मः पराजितः ॥

दुर्योधनः— धर्मो राज्ञां च लोकानां न पितरेक एव हि ।
लोकसमाजमध्ये तु समकक्षजनः सदा ।
सहायो बन्धुरूपेण विश्वासबन्धनं महत् ॥
नृप एकेश्वरः किन्तु तस्य यः समभाजनम् ।
महाशत्रुश्चिरं विघ्नो दुश्चिन्तास्थानमेव सः ।
सम्मुखस्यान्तरालं च पश्चादवस्थितं भयम् ।
अहर्निशं यशः शक्ति-गौरवाणां क्षयो हि सः ॥
ऐश्वर्यांशहरः; क्षुद्राः सबला बान्धवैः सह ।
बलं विभज्य तिष्ठन्ति, राजदण्डे पुनस्तथा ।
अंशा भवन्ति यावन्तस्तावद् दौर्बल्यमेधते ॥
तावांस्तस्य क्षयो नूनं, राजा न स्थापयेद्यदि ।
सर्वेषामूर्ध्वभागे तु शिरः स्वं, बहवो जनाः ।
द्रष्टुं नित्यं न शक्ताश्चेच्छिरो दूरात् समुद्धतम् ।
अव्याहतं स्थिरं तर्हि कथं बहुजनोपरि ।
तस्य शासनदृष्टिः सा बहु दूरे चलिष्यति ।
नास्ति नरपतेर्धर्मे स्थानं धर्मस्य किञ्चन ।

भ्रातुर्बन्धोश्च हे तात, जयधर्मोऽस्ति केवलः ॥
अतएव महाराज, प्राप्तोऽद्य चरितार्थताम् ।
अद्याऽहं विजयी तात, व्यवधानं पुरः स्थितम् ।
पाण्डवगौरवाद्रिः स पञ्चचूडामयो महान् ।
अद्यावनमितो भूम्यां सफलो मे मनोरथः ॥

धृतराष्ट्रः– विजित्य कपटैर्द्यूतैस्त्वं ब्रवीषि कथं जयम् ।
रे गर्वोद्धत ! दुःशील ! निर्लज्ज ! कुलपांशुल !॥

दुर्योधनः– आयुधं तस्य तच्चैव यद् यस्य बलकारणम् ।
युद्धस्य सम्बलं चैकं, नखैर्दन्तैर्न वा समः ।
व्याघ्रेण सह यद्धेव नरः कश्चिन्न लज्जते ।
धनुः शरेण हत्वा च घोर-व्याघ्रस्य जीवनम् ॥
युद्धं न मूढवन् मृत्यौ झम्पेनात्मसमर्पणम् ।
लक्ष्यं हि जयलाभोऽस्य एकमेव सुनिश्चितम् ॥
अद्याऽहं विजयी तात, अहङ्कारस्ततो मम ॥

धृतराष्ट्रः– अद्य त्वं विजयी तस्मात् पश्य निन्दाध्वनिस्तव ।
अम्बरं धरणीं चैव उच्चैर्धिक्कारझङ्कृतैः ।
पूरयति;

दुर्योधनः– न निन्दाया भीतोऽस्म्यहं कथञ्चन ॥
निन्दाध्वंसं करिष्यामि कण्ठरोधेन केवलम् ।
निस्तब्धां च तथा कुर्यां मुखरां नगरीमिमाम् ॥
स्पर्धितां रसनां तस्या धृत्वा दृढबलेन च ।
पादपीठतलेनैतां दलयिष्यामि निश्चितम् ॥
पापी दुर्योधनः क्रूरो हीनो दुर्योधनस्तथा ।
एतावत् समयं तात निरुत्तरं श्रुतं मया ॥

राजदण्डमिमं स्पृष्ट्वा महाराज ! ब्रवीमि ते ।
आपामरं जनं सत्यम्, अद्य तु वाचयाम्यहम् ।
राजा दुर्योधनो नूनं कदापि सहते स नो ।
राजनिन्दां, स्वहस्ताभ्यां स्वनामवाहको हि सः ॥

धृतराष्ट्रः— अये वत्साऽवधत्स्व त्वं रसनाया यदि त्वया ।
बलान्निर्वास्यते निन्दा, गत्वा निम्नमुखं ततः ।
गभीरं जटिलं सा च सुदूरे विस्तरिष्यति ।
गूढे तमसि चित्तस्य तदा तु मूलजालकम् ॥
नित्यं चित्ततलं सा च विषतिक्ती-करिष्यति ।
रसनायाञ्च नृत्यन्ती निन्दा चपलचञ्चला ।
श्रान्ता नूनं भवेद् वत्स चित्तदुर्गे तु गोपने ।
मा वर्धयतु शक्तिं स्वां निःशब्दं सा कथञ्चन ॥
प्रीतिमन्त्रबलान्निन्दा-सर्पान् शृङ्खलितान् कुरु ।
वंशीरावेण शाम्येवं सहासवदनेन ताम् ॥

दुर्योधनः— अव्यक्तनिन्दया राज्ञो मर्यादायां न जायते ।
काऽपि क्षतिर्महाराज भ्रूक्षेपो नास्ति मे ततः ॥
खेदश्च नास्ति तस्मिन् मे प्रीतिर्यदि न लभ्यते ।
महाराज ब्रवीम्येतत् स्पर्धा न याच्यते मया ॥
स्वेच्छया दीयते प्रीतिर्दीनादीनतमा जनाः ।
प्रीतिभिक्षां ददत्येवं, सा प्रीतिस्तैर्वितीर्यताम् ॥
मार्जारे, पालिते द्वारशुनि, भ्रातरि पाण्डवे ॥
तया प्रयोजनं मे न, केवलं कामये जयम् ॥
राजप्राप्यं मदीयं तच्छृणु पितर्निवेदनम् ।
एतावत् समयं व्याप्य तात सिंहासनं तव ।

निन्दकाः परिवृत्याऽऽसन् यथा कण्टकवृक्षकाः ॥
भवन्तमन्तरा मां च विरच्य व्यवधानताम् ।
प्राचीरं निष्ठुरं कृत्वा-सर्वमेवाऽसहे च तत् ॥
पाण्डवानां गुणान् नित्यं श्रावयन्ति च केवलम् ।
अस्माकं नित्यनिन्दाश्च, इत्थं नरपते ! वयम् ।
सर्वे च जनकस्नेहाज्जाता निर्वासिताश्चिरम् ॥
अतः शैशवकालाच्च बलहीना वयं पितः ।
पितृस्नेहतरङ्गोत्से पाषाणप्रतिबन्धकैः ।
संरुद्धगतयः क्षीणा यथा शीर्णनदा वयम् ।
निश्चलाश्च हतप्राणाः प्रतिहताः पदे पदे ।
अबाधगतयोऽखण्डा वृद्धिं गच्छन्ति पाण्डवाः ॥
अद्य प्रभृति तान् सर्वान् निन्दकान् यदि नः शृणु ।
न दूरीकुरुषे तात, सञ्जयं विदुरं तथा ।
वृद्धं पितामहं भीष्मं सिंहासनस्य पार्श्वतः ॥
यदि ते विज्ञवेषेण नित्यं धर्मकथां पुनः ।
धिक्कारैर्निन्दया तर्कैः प्रतिनिमिषमेव मे ।
छिन्दन्ति खण्डशो राजकर्मरज्जुं च सर्वदा ॥
आनयन्ति द्विधा राजशक्तौ प्रतिपदं मम ।
लज्जया चाऽपमानेन मलिनीकुर्वते यदि ।
मुकुटं मे पितस्तर्हि क्षमस्व न प्रयोजनम् ।
कण्टकरूपया नूनं तत् सिंहासनशय्यया ॥
विनियम्य वने वासं राज्येन पाण्डवैः सह ।
निर्वासनं गमिष्यामो महाराज ततो वयम् ॥

धृतराष्ट्रः— हा वत्स, अभिमानिन् हा ह्रासश्चेत् तु कियानपि ।

अभविष्यत्, पितृस्नेहो हितैषि-सुहृदां मम ।
श्रृणवतोऽति कठोराणि निन्दावाक्यानि तेन हि ।
अभविष्यच्च कल्याणमधर्मेण समं मया ।
योगो दत्तस्तथाऽशेषज्ञानञ्च हारितं चिरम् ॥
एतावांश्च मम स्नेहः कालाग्निं जालयामि च ।
कुरुवंशमहारण्यतले घोरं पुरातने ।
दुष्यसि मां तथाप्येवं स्नेहो नास्ति च मे त्वयि ॥
कालसर्पो मणेर्लोभात् त्वया यदाऽभिवाञ्छितः ।
मूढोऽहं तं स्वहस्तेन फटां विधृत्य तेऽददाम् ।
अन्धोऽस्म्यन्तर्बहिश्चाऽहं चिरं वत्स त्वया सह ।
प्रलयतिमिरे घोरे चलामि, बान्धवा मम ।
हाहाकाररवैः सर्वे निषिध्यन्ति पुनः पुनः ॥
गृध्राः निशाचरा उच्चैः कुर्वन्त्यमङ्गलं रवम् ।
सङ्कीर्णो जायते पन्थाः पश्यतश्च पदे पदे ।
प्रत्यासन्न-विपद्भिश्च कण्टकितं कलेवरम् ॥
तथापि दृढहस्ताभ्यां वायुशक्त्याऽन्धवेगतः ।
बद्ध्वा स्नेहेन वत्स त्वां भयङ्करेण वक्षसा ।
मूढमत्तोऽट्टहासेन धावन् खलु चलाम्यहम् ।
विनाशग्रासमुद्दिश्य उल्काज्योतिःपुरःसरः ॥
केवलं त्वमहञ्चैव सहगामी तथाऽऽवयोः ।
वज्रहस्तः प्रदीप्तोऽसावन्तर्यामी न चापरः ॥
नास्ति नौ पुरतो दृष्टिर्नास्ति पश्चान्निवारणम् ।
अध आकर्षणं घोरं निपातस्याऽस्ति केवलम् ॥
चकितं चेतना नूनं भवेच्च सहसैकदा ।

धातुर्गदा यदा मूर्धनि मुहूर्तेण पतिष्यति ॥
आगमिष्यति कालः स, पितृस्नेहे च संशयम् ।
मा कार्षीर्वत्स हे तावद्, आश्लेषं मा श्लथीकुरु ॥
सर्वं स्वार्थधनं शक्त्या कराभ्यां द्रुतमाहर ।
भव ह्येकेश्वरो राजा जयी भव सुखी भव ॥
जयवाद्यम् अरे यूयं वादयत, जयध्वजाम् ।
उत्तोलयत शून्ये च, अद्य जयमहोत्सवे ॥
न्यायो धर्मश्च बन्धुश्च भ्राता च नास्ति कश्चन ।
विदुरः स्यान्न भीष्मश्च न तत्र सञ्जयस्तथा ।
न भवेल्लोकनिन्दा च लोकलज्जा भयं न च ।
राज्यश्रीः कुरुवंशस्य भविष्यति न तत्र वा ।
अन्धः पिताऽन्धपुत्रश्च कालान्तको यमस्तथा ॥
केवलो जनकस्नेहो विधातुः शाप एव च ।
स्थास्यति नाऽपरः कश्चिदद्य घोरमहोत्सवे ॥

चरः (प्रविश्य)– अग्निहोत्रं महाराज देवतोपासनां तथा ।
सन्ध्यार्चनां परित्यज्य विप्राश्चतुःपथं गताः ।
तिष्ठन्ति व्याकुलीभूय पाण्डवानां प्रतीक्षणे ॥
पौराश्च न गृहे सन्ति, रुद्धं पण्यगृहं प्रभो ।
सायं समागतं तावद् भैरवमन्दिरेऽधुना ।
शङ्खो घण्टा च सन्ध्याया भेरी च न हि वादिताः ॥
न ज्वलन्ति प्रदीपाश्च चिरमस्तङ्गते रवौ ।
शोकार्ताः साश्रुनेत्राश्च पङ्क्तिबद्धाश्चलन्ति च ।
दीनवेषा नरा नार्यो नगर्याः सिंहतोरणम् ॥

दुर्योधनः– दुर्योधनो न जानन्ति सद्यो जागरितोत्थितः।

मूढा दुर्भाग्यतो वोऽद्य आसन्नमतिदुर्दिनम् ।
परिचयोऽद्य नूनं स्यात् प्रजाभिः सह भूपतेः ।
घनिष्ठः कठिनस्तिष्ठेत् कियद्वा दिवसावधिः ।
प्रजानां महती स्पर्धा, सर्पस्य निर्विषस्य च ।
फटायाः स्फालनं व्यर्थं हुहुङ्कारस्तथैव च ।

प्रतिहारी (प्रविश्य)— गान्धारी महिषी सती ।
दर्शनं ते महाराज पादपद्मस्य याचते ॥

धृतराष्ट्रः— प्रतीक्षे तदपेक्षोऽहम् ( अधुना तां प्रवेशय ) ।

दुर्योधनः— अहं तर्हि चलिष्यामि, देहि मेऽनुमतिं पितः ।

(प्रस्थानम्)

धृतराष्ट्रः— कुरु पलायनं वत्स, कथं सहिष्यसे ननु ।
पवित्रता जनन्याश्च उद्यतवज्रभीषणाम् ।
दृष्टिं न पुण्यभीरो ते लज्जामत्तोऽस्ति काचन ॥

गान्धारी (प्रविश्य)— रक्ष मेऽनुनयं नाथ, चरणेऽस्ति निवेदनम् ॥

धृतराष्ट्रः— अपूर्णा न कदापि स्यात् प्रियायाः प्रार्थना मम ।

गान्धारी— परित्यजाऽधुना तं तत्

धृतराष्ट्रः— राज्ञि, त्यक्ष्यामि कं वद ?

गान्धारी— यस्य पापस्य संघर्षाद् भीषणां तीक्ष्णतां गतः ।
घर्मासिर्मूढमेवं तम्

धृतराष्ट्रः— स जनः कः क्व तिष्ठति ।
केवलं ब्रूहि मे नाम ।

गान्धारी— पुत्रो दुर्योधनो हि सः ।

धृतराष्ट्रः— अपि त्यक्ष्यामि पुत्रं तम् ?

गान्धारी— तव पादे निवेदनम् ॥

धृतराष्ट्रः– दारुणा प्रार्थनैषा ते गान्धारि राजमातृके ॥

गान्धारी– कौरव ! केवला किं च मदीया प्रार्थना हि सा ।
पिता पितामहाः सर्वे कुरुवंशस्य पूर्वजाः ।
कुर्वन्त्यहोरहः स्वर्गाद् व्याकुलां प्रार्थनामिमाम् ॥
त्यज त्यज तमेवाऽद्य यस्याऽऽत्याचारपीडिता ।
कल्याणश्रीः कुरूणाञ्च नक्तन्दिवं प्रतीक्षते ।
प्रस्थानस्य क्षणं देवी ( साश्रुनेत्रातिदुःखिता ) ॥

धृतराष्ट्रः– धर्मो येन व्यतिक्रान्तस्तस्मै दण्डं प्रदास्यति ।
धर्म एव, पिता चाऽहम् ।

गान्धारी– माता स्यां किमहं न हि ?
गर्भभारेण किं तस्य नाऽहं जर्जरिताऽभवम् ?
जाग्रता चित्तपिण्डेन किमहं नाऽवहं च तम् ॥
दृष्ट्वा शिशुमुखं तस्य निष्कलङ्कञ्च कोमलम् ।
स्नेह-विगलितं चित्तं शुभ्रया दुग्धधारया ।
मम स्तनयुगं भित्वा तदा नोच्छलितं किमु ?
हासान् मे हासमानीय वाणीं वाण्याः समाहरन् ।
प्राणान् प्राणेभ्य आहृत्य शाखाबन्धे फलं यथा ॥
क्षुद्राभ्यां बाहुवृन्ताभ्यां मामाकर्षन् स्थितो नु किम्
बहुवर्षाणि व्याप्यासौ तथापि कथयामि ते ।
हे महाराज ! पुत्रं तमद्य दुर्योधनं त्यज ॥

धृतराष्ट्रः– किं रक्षिष्यामि तं त्यक्त्वा ?

गान्धारी– धर्मं तव सनातनम् ।

धृतराष्ट्रः– किं प्रदास्यति ते धर्मः ?

गान्धारी– दद्याद् दुःखं नवं नवम् ।

अधर्मस्य पणेनाऽहं जित्वा पुत्रमुखं प्रभो ।
तथा राज्यसुखञ्चैव हे महाराज वक्षसा ।
कण्टकद्वयमाश्लिष्य कथं स्थास्याम्यहं चिरम् ।

धृतराष्ट्रः— हृतं राज्यधनं धर्मात् प्रत्ययच्छं सकृत् प्रिये ।
दयया द्यूतबद्धेभ्यः पाण्डवेभ्यो ह्यहं यदा ।
परक्षणं पितृस्नेहः शतशः कर्णयोर्मम ।
गुञ्जनं कर्तुमारब्धं-किमेतत् रे कृतं त्वया ।
धर्माऽधर्मतरण्योऽस्तु युगपच्चरणौ दधत् ।
न कोऽपि जीवितुं शक्तः; कुरुपुत्रगणो यदि ।
सकृतदेवाऽतरत् पापस्त्रोतसि-तर्हि किं मृषा ।
धर्मेण सन्धि-कार्येण तेन किं वा फलं भवेत् ॥
पापस्य द्वारि पापञ्च याचते तत्सहायताम् ।
पतितो दुर्बले द्वैधीभावे किं मूढमानसा ।
रे वृद्ध ! हतभाग्य ! त्वं हतबुद्धेऽकृथा नु किम् ?
अपमानक्षतं तत्तु राज्यप्रत्यर्पणेन च ।
नोपशमं कदा गच्छेत् पाण्डवमानसाग्नये ।
दीयते नूतनं काष्ठं ज्वलनाय च केवलम् ।
अपमानित-हस्ते चेच्छक्तेरस्त्रं प्रदीयते ।
तेन मरणमेव स्याद्, दत्त्वाल्पपीडनं न हि ।
सबलं वैरिणं मुञ्चेः, सम्पूर्णं दलयेच्च तम् ॥
कदापि विफलां क्रीडां पापेन सह मा कृथाः ।
वृणुष्व तच्चिरं तर्हि आहूयाऽऽनीयते यदि ॥
पितृस्नेहस्वरूपेण पापबुद्धिरुपांशु मे ।
व्यद्धुमित्थं समारब्धं कर्णयोरन्तिके मम ।

तीक्ष्णसूचीसमा बह्वीः कथाश्च, पाण्डवानिह ।
द्यूतक्रीडाछलं कृत्वा प्रत्यानयं पुनश्च तान् ।
दीर्घाय वनवासाय राज्यात् प्राव्राजयं ततः ॥
हा प्रवृत्तिगतिं धर्मं को जगन्मर्म बुध्यते ॥

गान्धारी– धर्मो न सम्पदां हेतुर्महाराज सुखस्य च ।
क्षुद्रसेतुर्नवा, धर्मे धर्म एवाऽवशिष्यते ॥
अहमेकाऽबला मूढा त्वां धर्मं बोधयामि किम् ?
जानासि सर्वमेव त्वं वनं यास्यन्ति पाण्डवाः ।
ततस्तेन निवर्त्स्यन्ति ( अनुरुद्धाश्च यद्यपि ) ॥
पणबद्धा यतस्ते च, महीपते वचः शृणु ।
इदानीदं महाराज्यं तवैव केवलं प्रभो ।
पुत्रं त्यजाऽधुना, पूर्णं मा भुङ्क्ष्व च स्वयं सुखम् ॥
निष्पापाय ददद्दुःखं न्यायं मा विमुखीकुरु ।
प्रासादात् कौरवाणाञ्च, दुःखं सुदुःसहं महत् ॥
उत्तोल्यं शिरसा धेहि अद्य प्रभृति धर्मराट् ।
ममापि मस्तके तच्च तथोत्तोल्य निधापय ॥

धृतराष्ट्रः– हा हा सत्यं महाराज्ञि[1] उपदेशवचस्तव ।
सुतीव्राश्च तथा वाण्यः ।

---

१. महती राज्ञी कर्मधा महाराज्ञी, सम्बुद्धौ प्रथमैकवचनम्

गृह्णन् विषमयं फलम् ।

गान्धारी– अधर्ममधुसंलिप्तं पुत्रो हर्षेण नृत्यति ।
स्नेहलोभेन मुग्धः सन् तं न तद् भोजयेर्नृप ।
बलाद् गृहाण तत् तस्मान् निक्षिप, तं च रोदय ॥
पापस्फीतं छलाल्लब्धं राज्यं सुखं धनं च सः ।
त्यक्त्वा निर्वासनं यातु वञ्चितैः पाण्डवैः सह ॥
तद्दुःखस्य समं भारं वहतु शिरसा च सः ।

धृतराष्ट्रः– धर्म-विधिर्विधातुर्हि प्रबुद्धः स च सर्वदा ।
धर्मदण्डस्तथा तस्य तिष्ठति नित्यमुद्यतः ।
करिष्यति स्वराज्ये स स्वस्य कार्यं मनस्विनि ।
पिता चाऽहम् ।

गान्धारी– भवान् राजा, राजाधिराज एव च ।
विधातुर्वामहस्तश्च, तुभ्यमेव समर्पिता ।
रक्षा धर्मस्य; पृच्छामि प्रतिविधानमस्य किम् ।
यदि कश्चित् प्रजानाथ प्रजापतिगृहात् तव ।
बलाद् धृत्वाऽबलां साध्वीं निर्दोषामवमानयेत् ?

धृतराष्ट्रः– निर्वासनम्,

गान्धारी– ततो राजन् पादपद्मतले तव ।
सर्वनारी समाजस्य भूत्वा प्रतिनिधिः स्वयम् ।
विचारं प्रार्थये तत्त्वः ( साश्रुनेत्रा कृताञ्जलिः ) ॥
पुत्रो दुर्योधनो नूनम् अपराधी महान् प्रभो ।
स्वयमेव महाराज प्रमाणं तस्य विद्यसे ॥
स्वार्थमुद्दिश्य हे राजन् पुरुषाणां परस्परम् ।
अहरहो भवेद् द्वन्द्वो, न च बुध्यामहे वयम् ।

श्रेयस्त्वमुत मन्दत्वं तस्य द्वन्द्वस्य किञ्चन ॥
दण्डभेदादिनीतिश्च कूटनीतिशतं कति ।
पुरुषाणां तु रीतिः सा पुरुषैरेव बुध्यते ॥
प्रबलानां विरोधाद्धि कतिच्छलोद्गमो भवेत् ।
प्रायशः कौशलं सद्यः कौशलेनैव विध्यते ॥
वयमेतन्न जानीमो दूरे वर्तामहे यतः ।
शुद्धान्तःपुरमध्ये नो व्यापृता गृहकर्मसु ॥
विद्वेषानलमाकृष्य तत्राऽऽनयति यो जनः ।
बहिर्द्वन्द्वान् नरं त्यक्त्वा प्रविश्याऽन्तःपुरं पुनः ॥
गृहधर्मचरन्तीनामुपायरहितश्रियाम् ।
देहालयेषु पुण्येषु हस्तक्षेपं करोति चेत् ।
कलुषपरुषस्पर्शैरसम्माननया सह ॥
पत्या विरोधमारभ्य पत्नीमाहत्य यो जनः ।
गृह्णाति प्रतिशोधं च, नूनं कापुरुषो हि सः ।
केवलं न हि पाषण्डे महापापोऽतिदुर्जनः ॥
महाराज विधानं किं प्रार्थयेऽहं तदुत्तरम् ॥
अकलुषे पुरोर्वंशे पापञ्च यदि जायते ।
तदपि सहनीयं स्यान्मातृगर्वादहं प्रभो ।
वीरपुत्राः समुत्पन्ना अमन्ये गर्भतो मम ॥
हा नाथ दिवसे तस्मिन् पाञ्चाल्या नाथहीनवत् ।
आर्तकण्ठस्वरेणैषा प्रासादशैलभित्तिका ।
जुगुप्सा-करुणा-लज्जा-तापाद् द्रवत्वमागता ॥
धावित्वाऽहं द्रुतं तस्माद् दृष्टवती गवाक्षतः ।
वस्त्रं तस्याः समाकृष्य सभामध्ये पिशाचवत् ।

गान्धार्यास्तनया अट्टहासं हर्षेण कुर्वते ॥
धर्मो जानाति तद्दिनादारभ्य जीवनावधि ।
गर्वशेषो जनन्या मे सपद्येव विचूर्णितः ॥
हे कौरवनृपास्त्यक्त्वा भारतं पौरुषं कुतः ।
गतवत् तत्र सर्वे तु मुखं दृष्ट्वा परस्परम् ।
यूयं महारथा हा भो निषण्णा जडमूर्तिवत् ॥
कश्चित् वा हसितः; कश्चित् कर्णाकर्णि सकौतुकम् ।
अजल्पत्, कोषमध्ये वः कृपाणो निश्चलः स्थितः ।
लुप्तवज्रावशेषा च निद्रागता तडिद् यथा ॥
महाराज महाराज शृणु मे प्रार्थनामिमाम् ।
दूरीकुरुष्व मातुर्मे लज्जाम्, उद्धर हे प्रभो ।
वीरधर्म, पुनः शाम्य पादाहतस्य रोदनम् ।
तथा सतीत्वधर्मस्य न्यायस्यावनतस्य च ।
कुरु सम्माननं, पुत्रं दुर्योधनं परित्यज ॥

धृतराष्ट्रः— परितापप्रदाहेन जर्जरीकृतवक्षसि ।
महिषि कुरुषे किन्तु आघातमेव केवलम् ।

गान्धारी— विध्यति मां न किं नाथ शतवृत्त्या तु सा व्यथा ।
रोदिति दण्डदाता चेद् दण्डितेन समं प्रभो ।
समाघातेन स श्रेष्ठो विचारोऽभिमतो भवेत् ॥
यस्य कृते व्यथां काञ्चिल्लभते हृदयं न च ।
तस्मै चेद्दीयते दण्डः प्रबलस्य जनस्य सः ।
अत्याचारः, स्वपुत्राय प्रयोक्तुं यो न शक्यते ।
अपरस्मै न कस्मै स दण्डो जातु प्रदीयताम् ।
यो न ते तनयो राजंस्तस्याऽपि विद्यते पिता ।

तस्मिन् महापराधस्त्वं न्यायाधीशो भविष्यसि ॥
विश्वस्याऽस्य विधातुर्हि सर्वे वै तनया वयम् ।
पुत्राणामपराधस्य विचारं कुरुते सदा ।
नारायणः स्वहस्तेन नाथैतच्छ्रुतवत्यहम् ॥
व्यथां ददत् स्वयं चाऽपि व्यथते सममेव सः ।
नो चेत्तस्य विचारे कोऽप्यधिकारो न विद्यते ॥
मूढा नारी मनोमध्यात् प्राप्ता शास्त्रमिदं प्रभो ।
निर्विचारेण पुत्रं ते पापिनं क्षमसे यदि ।
यावद् दोषिजनेभ्यस्त्वं यावद्-दण्डान् प्रदत्तवान् ।
यावद् समयं व्याप्य ( स्वकर्तव्य प्रणोदितः ) ।
धर्माधिपतयाते च प्रत्यावर्त्स्यन्ति वै नृपम् ।
दण्डदातारमागत्य निश्चितमिति हे प्रभो ॥
धृत्वा निर्ममतारूपं विचारो न्यायतस्तव ।
पापीभूय तवाऽङ्गेषु स्वं चिह्नमङ्कयिष्यति ॥
तद् वच्मि पापिनं पुत्रं दुर्योधनं परित्यज ॥

धृतराष्ट्रः— वाणीं सोढुं न शक्नोमि संहर संहर प्रिये ।
मोहरज्जुं न शक्नोमि छेत्तुं, धर्मकथा तव ।
केवलं व्यथते व्यर्थं मर्मणि कठिने मम ॥
पापी पुत्रो विधात्रैव त्याज्योऽतः शक्यते न हि ।
त्यक्तुं मयाऽपि, तस्याऽहमेक एवाऽस्मि सम्बलम् ॥
उन्मत्तस्य तरङ्गस्य मध्ये येनाऽङ्गमर्पितम् ।
कथं त्यक्ष्यामि पुत्रं तं मम प्राणेषु सत्सु वा ।
उद्धारे च निराशः सन् प्राणपणेन वक्षसा ।
आलिङ्ग्य तं समं तेन झम्पं दत्वा पताम्यहम् ॥

एकस्मिन्नेव पापे च, निमज्याऽधो म्रिये तथा ।
एकस्यैव विनाशस्य तथाऽकातरतामृते ।
अविचलो ग्रहीष्यामि अंशं च तस्य दुर्गतेः ॥
फलमर्धं च भोक्ष्येऽहं तथा च तस्य दुर्मतेः ।
मदीया सान्त्वना सैव अधुना विद्यते न हि ।
विचारसमयो, नास्ति प्रतीकारश्च कश्चन् ॥
विद्यते न हि पन्था, यद् घट्येत घटितं च तत् ।
यदस्ति फलनीयं वा तदवश्यं फलिष्यति ॥

(प्रस्थानम्)

गान्धारी— स्थिरीभव ममाऽशान्त हृदय नत-शीर्षतः ।
धैर्यं धृत्वा प्रतीक्षस्व विधातुश्च विधेः कृते ॥
यदा सुदीर्घकालान्ते कालः सद्यः प्रबुध्य तत् ।
स्वस्य संशोधनं कुर्याद् दिनं दुःखस्य दारुणम् ।
दुःसहोत्तापतो वायुर्गतिहीनः स्थिरो यथा ॥
निद्रामग्नस्ततस्तावद् अकस्माच्च प्रबुध्यते ।
झञ्झारूपेण स्वं जाड्यम् आक्रमंश्च पुनः पुनः ।
अन्ध-वृश्चिकवद् भीमपुच्छेन स्वस्य मस्तके ।
विध्यति शूलवज्रं च दीप्तं कालस्तथा यदा ।
जागर्ति सभयं सर्वे तमंकालं वदन्ति वै ॥
अवनामय मूर्धानं महाकालं नमस्कुरु ।
रमणि तम्, असौ तस्य श्रूयते रुद्रलोकतः ।
रथचक्रध्वनिर्दूराद् यथा वज्रस्य घर्घरः ॥
पातय तत्पदे चित्तम् आर्तं जर्जरितं तव ।
छिन्नेव सिक्तहृत्पिण्ड-रक्तशतदलेन ते ।

रचयन्त्यञ्जलिं तिष्ठ प्रबुद्धा नीरवा सती ॥
अपेक्षस्व च पश्यन्ती निमेषरहिता तथा॥
धूलिजालं यदाऽऽकाश उत्पतिष्यति सर्वतः ।
कम्पिष्यते धरा शून्ये, सहसा क्रन्दनध्वनिः ।
उत्थास्यति, ततो हा हा रमणीमनाथां तथा ।
हा हा वीरवधूं, हा हा हा हा हा वीरमातरम् ।
हा हा रवाश्चतुर्दिक्षु सुधीरं नतमस्तका ।
लुठन्ती पतिता धूल्यां निमील्य नयनद्वयम् ॥
ततो नमो नमस्तेऽस्तु निश्चितपरिणाम हे ।
दारुणे करुणे शान्ते निर्वाक्ये निर्दये नमः ॥
कठोर-कान्त-कल्याण, क्षमे स्निग्धतमे नमः ।
नमो नमो नमस्तेऽस्तु नमस्तेऽस्तु नमो नमः ।
नमो नमोऽस्तु विद्वेषभीषणे निर्वृते नमः ।
श्मशानभस्मना लिप्त-परमे निष्कृते नमः ।

(ततः प्रविशति दासीगणसहिता दुर्योधनमहिषी भानुमती)

**भानुमती**–(दासीगणं प्रति)

हञ्जे परभृते माल्यम्, इन्दुमुखि च भूषणम् ।
रत्नानि शिरसा धेहि ।

**गान्धारी**– एहि वत्से शनैः शनैः ।
कोऽयं महोत्सवो वाऽद्य कौरवभवने सति ?
क्व गच्छसि वधु त्वं मे ?

**भानुमती**– शत्रुपराभवक्षणः ।
शुभोऽस्माकं समायातः ।

**गान्धारी**– स्वजना यस्य शत्रवः ।

आत्मा तस्य सदा शत्रुर्धर्मोऽपि शत्रुरेव च ।
अजय्याः शत्रवस्तस्य; अलङ्कारा नवाः कुतः ।
हे कल्याणि ?

भानुमती– पुरा प्रादुर्यद् रत्नमणिभूषणम् ।
पाञ्चाल्यै पञ्चभर्तारो बलाज्जित्वा वसुन्धराम् ॥
द्रौपद्या मण्डितायास्तैरङ्गेभ्यो व्यकिरद् तदा ।
राजसूयदिने भाग्यदम्भो माणिक्य-वक्त्रतः ।
सूचीशतेन, अव्यात्सीत् कुरुस्त्रीणां च वक्षसि ।
तै रत्नभूषणैर्मां सा सज्जीकृत्य वनं गता ॥

गान्धारी– हा हा मूढे कथं नाऽभूच्छिक्षोदयस्तथापि ते ।
दधत्या तानि रत्नानि इयान् गर्वः कथं तव ?
भयङ्करी किमेषा ते कान्तिः ? प्रलयसज्जितम् ।
न दहेन् मणिमञ्जिरं युगान्तोल्कावदद्य किम् ?
भाग्यवज्रा-नवज्वाला तव रत्नललाटिका ॥
पश्यन्त्याः सर्वदेहे त्वां त्रासस्य स्पन्दनं मम ।
सञ्चरति, तथा चित्त उत्तिष्ठति च क्रन्दनम् ॥
आनयति च कर्णे मे शङ्किते भूषणानि ते ।
उन्मादिन्याश्च शङ्कर्या घोर ताण्डवझङ्कृतिम् ॥

भानुमती– क्षत्रनार्यो वयं मात-र्दुर्भाग्यान्नो भयं न हि ।
कदा जयः कदा वाऽपि पराजयो भवेच्च नः ।
मध्याह्नगगने क्वाऽपि कणेऽपि वाऽस्तगिरौ पुनः ।
क्षत्रमहिमसूर्यः स उदेति ह्यस्तमेति च ॥
क्षत्रवीराङ्गना मातः स्मृत्वा तन्न कदापि वा ।
सशङ्कमानसा देवि बिभीमः सङ्कटात्क्षणम् ॥

आगच्छेद् दुर्दिनं चेन्नो दुर्योगो वा भवेद् यदि ।
उपहासेन विध्येम तद्भाग्यं विमुखं च नः ॥
जीवेम वा कथं मातः सेवित्वा चरणौ तव ।
सा शिक्षाऽपि मया लब्धा ।

गान्धारी– वत्से, नाऽमङ्गलं तव ।
एकाकिन्या, यदा तत्तु सदलं शक्तिभिः सह ।
क्षुधोपशमनं कुर्याद् हा हा ध्वनिस्तदोत्थितः ॥
बहूनां वीरयोद्धृणां स्रोतसि शोणितस्य च ।
पतेदश्रु कतीनाञ्च विधवानां निरन्तरम् ॥
रत्नालङ्कृतयः सद्यस्त्रुट्यन्ति शतधा तदा ।
वधूहस्तप्रकोष्ठेभ्यो मञ्जर्य इव झञ्झया ॥
चूतकुञ्जवने भग्नं मा कुरु सेतुबन्धनम् ।
उत्तोलय गृहे क्रीडाछलैर्मा विप्लवध्वजाम् ॥
आनन्दस्य दिनं नाऽद्य-सर्वाङ्गेषु सुसज्जिता ।
मातः स्वजनसौभाग्याद् गर्वं कदापि मा कृथाः ।
सुसंयता सती तावच्छुद्धचित्ता समाचर ।
उपवासव्रतं वेणीमुन्मुच्य भक्तितत्परा ॥
कुरु देवार्चनं वत्से, शान्तेन मनसा तथा ॥
अस्मिन् पापस्य सौभाग्य दिवसे त्वं प्रतिक्षणम् ।
विधात्रे देहि मा लज्जां साहङ्कारा स्नुषे मम ॥
मुञ्च मुञ्च अलङ्कारान् नवं रक्ताम्बरं तव ।
उत्सववाद्यजातानि सपदि नीरवीकुरु ।
राजाडम्बरशोभनां सद्यः समाप्तिमानय ।
गच्छ चाऽग्निगृहं पुत्रि, पुरोहितं समाह्वय ।

विशुद्धसत्त्वचित्तेन कुरु कालप्रतीक्षणम् ॥

(भानुमत्याः प्रस्थानम्)

(द्रौपद्या सह पञ्चपाण्डवानां प्रवेशः)

युधिष्ठिरः– आशिषं याचमानास्त्वां प्रस्थानसमये वयम् ।
जननि आगताः सर्वे ।

गान्धारी– युष्मत् सौभाग्यभास्करः ।
दुःखरात्रे व्यतीते स हे वत्स द्विगुणोज्ज्वलः ।
उदेष्यति पुनर्नूनं, लभध्वं पवनाद् बलम् ।
सूर्यात्तेजो लभध्वं च, पृथिव्याश्च धृतिं क्षमाम् ।
हे दुःखव्रतमत्पुत्राः, दैन्ये गूढा रमा सती ॥
स्थिता नीरवभावेन, दुःखादक्षयसम्पदः ।
सच्चिनोतु च युष्मभ्यम्, नित्यं भवतु निर्भयः ।
निर्वासनोऽस्य वासोऽयं, चित्ते च संयुनक्तु वः ॥
दुःखभोगो विना पापं महातेजः समुज्ज्वलम् ।
अनलज्वालया दग्ध-सुप्रदीप्त सुवर्णवत् ॥
तदेव वो महादुःखं सहायः सुमहान् भवेत् ।
ऋणी स्यात्तेन दुःखेन धर्मराजो विधिः स्वयम् ॥
यदा स स्वेन हस्तेन स्वमृणं शोधयिष्यति ।
पन्थानं वो जगत्यां को नरो देवोऽवरुध्य वा ।
उत्थास्यति तदा, वत्स हे पुत्राधिक पुत्रक ॥
मम पुत्रेण युष्मासु अपराधाः कृताश्च ये ।
खण्डयन्तु च तान् सर्वान् मदीया मङ्गलाशिषः ॥
कल्याणाब्धिं सुगम्भीरं मथ्नात्यन्यायपीडनम् ॥

(द्रौपदीमालिङ्ग्य)

अये भूलुण्ठिते स्वर्णलते मम, शिरस्तव ।
उत्तोल्य सकृद् वत्से, हे राहुग्रस्तचन्द्रिके ॥
वत्से ममाऽवधतस्व त्वां योऽवधोरितवानिह ।
जगत्यां च भवेन्नित्यं तदीयमवमाननम् ।
कलङ्कोऽप्यक्षयस्तस्य चिरस्थायी भविष्यति ॥
तवाऽपमानराशिः स विश्वजगति साध्वि हे ।
कापुरुषहस्तेन सतीनामवमाननम् ।
सर्वाः कुलाङ्गनास्तस्य गताः समांशभाजनम् ।
पतिभिः सह वत्से त्वममलिनमुखा सती ।
स्वर्गीकुरु महारण्यं दुःखं सुखीकुरुष्व च ।
दधत्या वक्षसा वत्से सुदःसहां पतिव्यथाम् ।
सार्थकतां सतीत्वस्य लभस्व वधु हे मम ॥
आसीद्राजगृहे तावदहोरात्रञ्च सर्वदा ।
आयोजनं सहस्त्रस्य सुखानां कानने ननु ।
एकाकिनी भवेस्त्वं तत् सर्वसुखास्पदं सति ।
सर्वसङ्गस्वरूपा च सर्वैष्वर्यमयी तथा ।
सर्वेषामाश्रयीभूता एका त्वं सर्वसान्त्वना ॥
क्लान्तौ खेदहरा शान्तिः शुश्रूषा व्याधितस्य च ।
दुर्दिनस्य शुभा लक्ष्मीस्तामस्या भूषणं तथा ।
उषा मूर्तिमती साध्वि ! त्वमेका च भविष्यसि ॥
सर्वा प्रीतिश्च, सेवा च जननी गेहिनी तथा ।
सतीत्वस्य सितं पद्मं पूर्ण-प्रस्फुटितं तव ।
शतं दलानि विस्तीर्य जागरिष्यति गौरवात् ॥



# आवेदनम्

(आवेदन)

भृत्यः– जयोऽस्तु ते महाराज्ञि जय राज्ञामधीश्वरि ।
कुरु भृत्ये दयां दीने ।

राज्ञी– सभावसानतोऽधुना ।
गताः सर्वे यथायोग्यं कर्मसु सेवका मम ।
सर्वस्मिन् विश्वराज्ये मे, गृहीत्वा स्व-स्वमस्तके ।
मदीयाज्ञां तथा मानं जयशङ्खञ्च सर्वतः ।
वादयन्तः, सभामध्ये निशान्तस्य शशी यथा ।
किङ्करो मे त्वमायातोः मत्तः का प्रार्थना तव ?

भृत्यः– सर्वशेषे मम स्थानम्, अहं तव महोत्तमे ।
सर्वेषामधमो दासः, एकैकश्च गृहं यदा ।
प्रत्यागच्छति तृप्तः सन् सानन्दं तत्क्षणे ह्यहम् ।
उपस्थितस्तदैतस्यां निर्जनराजपर्षदि ॥
एकाकिनी समासीना भवतीत्वासनेऽधुना ॥
निषण्णश्चरणोपान्ते भिक्षामेकाञ्च प्रार्थये ।
वस्तु सर्वावशेषं यत् ।

राज्ञी– अरे अज्ञानभिक्षुक !
अस्मिन्नसमये लभ्यं किं वा तव भविष्यति ?

भृत्यः– दृष्ट्वाऽहं प्रतिगच्छामि सहासमाननं तव ।
अस्ति देवि पदं शून्यमन्यत् तव वराङ्गणे ।
नानाकर्मसु नाना च गृहीतानि पदानि ते ।
नानाजनैर्नकेनापि कर्मैकं न च याचितम् ॥
भृत्यजने दयां कृत्वा मह्यं कर्म प्रयच्छ तत् ॥
पुष्पोद्याने भविष्यामि देवि मालाकरस्तव ॥

राज्ञी– मालाकारः ?

भृत्यः– अये राज्ञि क्षुद्रो मालाकरो ननु ।
सर्वस्मात् कर्मणो देवि, नेष्याम्यवसरो मुदा ॥
युद्धास्त्राणि धनुर्वाणं प्रातितानि महीतले ।
उष्णीषं राजसज्जा च स्थापिते चरणे तव ॥
गुरु-कर्माणि यावन्ति देवि ! प्रतिगृहाण मत् ।
वरित्वा दूतकार्ये मां देशाद्देशान्तरे तव ।
वाहयितुं तरीं स्वर्णमयीं प्रेरय मा किल ॥
जयध्वजां वहन्तं मां प्रचारार्थं दिगन्तरे ।
मा प्रेषय महादेवि नवदिग्विजयाय ते ॥
साम्राज्यं परपारे ते कर्म-यशोधनैर्जनैः ।
असीमं विस्तृतं पूर्णं नगर्यो नगराणि च ।
कति लोकालयास्तत्र, .पोताश्रये तथा कति ।
तरण्यश्च; विपण्यां हि कति पण्यानि सन्ति च ॥
मठस्य शिखरं पश्य हर्म्यचूडास्तथा कति ।
उच्चैर्दूरे दिगन्तानि दशन्ति च, विनिश्वसन् ।

उत्तिष्ठति कलोच्छ्वासः, शून्ये ग्रसितुमुद्यतः ।
नक्षत्राणां चिरं तूष्णीम्भावं, भृत्यो बहुस्तव ।
अस्ति तत्र च सैन्यं च त्वदीयं बहु विद्यते ॥
प्रतिहारीजना नित्यं जाग्रति तव वा कति ॥
ऊर्ध्वे निर्जनतीरेऽस्मिन् सौधप्रासाद एककः ।
अभ्रंलिहगिरेः कूटे तुषारशुभ्रसुन्दरः ।
रञ्जितो मेघपुञ्जैः सन्न निन्द्योऽतीव निर्मलः ॥
निर्मितश्चन्द्रकान्ताख्यमणिभिस्तव शोभने ॥
वातायनतले तत्र दक्षिणस्यां दिशि स्थिते ।
अतिक्राम्यति कालस्ते नीरवे निर्जने रहः ॥
कपोतकलसङ्गीते घनच्छायेऽथ शीतले ।
विताने शोभते यत्र मञ्जरितेन्दुमल्लिका ॥
स्फटिकप्राङ्गणे देवि सौधसन्निहिते तव ।
जलयन्त्रोत्सधारैका कल्लोलक्रन्दनेन च ।
उच्छ्सती दिनं दीर्घमुच्छलिता भविष्यति ॥
मध्याह्नं करुणादीर्णं व्यथया कातरं तथा ।
करिष्यति तथाऽलिन्दे दूरे विस्तृतपुच्छकः ॥
कुर्याद् ग्रहशिखी नृत्यं स्फीतगर्वभरेण च ॥
राजहंसगणस्तत्र कुर्वन् कलकलध्वनिम् ।
वक्रीकृत्य सितां ग्रीवा शैवलकानने मुदा ।
विहरिष्यति-कृष्णाभच्छायायां पाण्डुरा मृगी ।
प्रत्यावर्तिष्यते तत्र, एकाकिनि सुशोभने ।

मालाकारो भविष्यामि पुष्पोद्यानस्य-वासना ॥

राज्ञी- अप्यरे कर्मभीरुस्त्वम् अलसकिङ्करो मम ।
अलं त्वं कर्मणे कस्मै ?

भृत्यः- यावंदकार्यकर्मणे ।

आलस्यानां सहस्त्रस्य सञ्चयश्च शतं शतम् ।
आनन्दायोजनं चैव, यस्मिन् वनपथे सति ।
विहरसि वसन्ते त्वं शरत्काले च सुस्मिते ।
पवनस्त्रोतसि स्निग्ध उषायामारुणोदये ।
दूरीकृत्य श्लथाङ्गेभ्यः सुषुप्तिं जडताञ्च ते ।
अरण्यवीथिकां तां च करिष्येऽभिनवामहम् ॥
तव पादस्तुतिर्देवि लिखिता कुसुमाक्षरैः ।
तृणापुष्पतले स्पर्शतृष्णया पुलकान्विते ।
विकसिष्यति, सायाह्नकाले यां पुष्पमालिकाम् ।
सुचारुं धास्यसे भाले संवेष्ट्य कवरीं तव ।
रचयित्वा विचित्रां तां मालिकां स्वकरेण मे ।
सान्ध्ययूथीस्तरेणाऽहं स्वर्णपात्रे सुसज्जिताम् ।
निशब्दो नतवक्त्रः सन् नेष्यामि सम्मुखं तव ॥
यत्र निभृतकक्षे त्वम् आलुलायितकुन्तला ।
तरङ्गकुटिलान् केशांस्तमोनिर्झरसन्निभान् ।
उन्मुक्तोच्छ्वसितान् पृष्ठे विस्तीर्य स्वर्णदर्पणम् ।
अङ्के संस्थाप्य शुभ्रेण करपद्मेन शोभने ।
रचयिष्यसि वेणीं ते; कुमुदसरसीतटे ।

सप्तपर्णतरोर्मूले मालतीदोलने यदा ।
उपवेक्ष्यसि हर्षेण गन्धामोदित-दिङ्मुखे ॥
पत्रालिकावकाशे ते नेत्रे भाले तथोरसि ।
वाससि च तथा वेषे सहस्त्रं चुम्बनानि च ।
कौतूहलि-शशाङ्कस्य पतिष्यन्ति नभस्तलात् ॥
उत्थास्यति च संवेष्ट्य सानन्दतनुवल्लरीम् ।
वासना-विह्वलोऽरण्यगन्धो निःश्वाससन्निभः ।
मृदुना छन्दसा दोलां मृदुमन्दसमीरवत् ।
प्रदास्यामि वारारोहे पार्श्वे तिष्ठंस्तदा तव ॥
शयनस्य शिरोदेशे सकलां सुप्तशर्वरीम् ।
अनिमेषं प्रदीपो यो ज्वलति ते वराङ्गणे ।
सुराणाञ्च नराणाञ्च स्वप्रातीते सुनिद्रिते ।
श्रीमदङ्गे स्थिरोऽकम्पमुन्मील्याऽनिद्रलोचनम् ।
आनीय गन्धतैलं तं प्रदीपं ज्वालयाम्यहम् ॥
शुष्कशेफालिकावृन्तै राज्ञि वासन्तचूर्णतः ।
वसनं, रञ्जयिष्यामि, पादपीठं च तत् सति ।
नवभावेन रूपेण शुभेनाऽऽलिम्पनेन च ।
प्रत्यहं स्थापयिष्यामि शुभ्रेण चन्दनेन तु ।
कुङ्कुमेनाऽङ्कयित्वा च कल्पनालेखनैः सहः ॥
अनुचरो निकुञ्जस्य उद्यानोपवनस्य ते ।
मालाकारो भविष्यामि ।

राज्ञी- ग्रहीष्ये किमुपायनम् ?

भृत्यः- प्रतिदिनं प्रभातेऽहं निर्माय पुष्पकङ्कणम् ।
कमलस्य दलैर्देवि आनेष्यामि च ते यदा ।
शुचिस्मिते तदैवाहं पद्मस्य कलिकासमाम् ।
त्वदीयां क्षुद्रमुष्टिं तां विधृत्य स्वकरेण मे ।
तत्परिधापयिष्यामि उपायनमिदं मम ॥
प्रतिसायं तथाऽशोकाऽलक्तकेन च ते शुभे ।
पादगयुग्मतलं चित्रीकृत्य चरणयोस्तव ॥
अङ्गुलप्रान्तदेशे यो रेणुलेशोऽपि विद्यते ।
चुम्बनेन च ते शुभ्रे मार्जयिष्याम्यहं तथा ।
उपायनं ममाऽस्त्वेतद्

राज्ञी- भृत्य आवेदनं तव ।
आददे, बहवः सन्ति मन्त्रिणो मे तथाऽस्ति च ।
बहुसैन्यं तथा सेनापतयो यन्त्रिणस्तथा ॥
कर्मयन्त्रे रताः सर्वे, तिष्ठ त्वं चिरकालतः ।
दासश्च कर्मणा हीनः स्वेच्छाबन्धित्वमागतः ।
तथा ख्यातिविहीनः सन्, गृहं तव भविष्यति ।
राजसभाबहिः प्रान्ते यथाभिलषितं तव ।
पुष्पोद्यानस्य मे त्वं हि मालाकारो भविष्यसि ॥



# क्षुद्र-काव्यानि

( १ )

॥ कर्तव्यम् ग्रहणम् ॥

को ग्रहीष्यति मे कार्यं वक्ति सायन्तनो रविः ।
आस्ते निरुतरं श्रुत्वा चित्रवन्निखिलं जगत् ।
आसीत्तु मृण्मयो दीपः 'स्वामिन् भोः' सोऽवदच्छृणु ।
'यत् किञ्चन मया साध्यं स्वल्पं तत् करवाण्यहम् ॥'

( २ )

॥ मोहः (मोह) ॥

एष नद्यास्तटो वक्ति निश्वासं संपरित्यजन् ।
तटे तत्र सुखं सर्वं मम विश्वास ईदृशः ॥
आसीनोऽसौ तटस्तत्र दीर्घं श्वासं विमुञ्चति ।
ब्रुवन् यावत् सुखं तच्च सर्वमस्ति तटान्तरे ॥

( ३ )

॥ प्रत्यक्षं प्रमाणम् (प्रत्यक्ष प्रमाण) ॥

वज्रो वदति तिष्ठामि यावद् दूरे ( विहायसि ) ।
मदीयं गर्जनं तावदुच्यते मेघगर्जनम् ।
विद्युद् दीप्तिरिति ख्याती रट्यते रोचिषो मम ।
उच्यते खल्वयं वज्रः शिरसि पतिते मयि ।

( ४ )

॥ क्षुद्रस्य अहङ्कारः (क्षुदेर दम्भ) ॥

उच्चैः 'कृत्वा शिरो वक्ति शैवलं दीर्घिकां ददे ।
शिशिरस्येकबिन्दुं ते लिखित्वा रक्षणं कुरु' ॥

( ५ )

॥ अकृतज्ञः (अकृतज्ञ) ॥

उपहसति सोच्चारं ध्वनिं प्रतिध्वनिः सदा ।
ऋणी ध्वनिसमीपे स व्यक्तं तच्चेद्भविष्यति ॥

( ६ )

॥ मध्यमस्य आशङ्का ॥

सहाधमेन निश्चिन्तं विचरत्युत्तमो जनः ।
स एव मध्यमो यस्तु पश्चात्तिष्ठति सर्वदा ॥

( ७ )

॥ शत्रुतागौरवम् ॥

उलूको घोषयत्येतद् येन केन छलेन च ।
जानीषे न मया सार्धमस्ति सूर्यस्य शत्रुता ॥

( ८ )

॥ घटीयन्त्रम् ॥

विश्वजगदिदं सर्वं-कालो ब्रूते सृजाम्यहम् ।
स्रष्ट्री तेऽस्मि ततः प्राह समयमानयन्त्रिका ॥

(९)

॥ एक एव पन्थाः ॥

अर्गलीक्रियते द्वारं भ्रम-रोधाय यद्यपि ।
सत्यं वक्ति ततः केन पथाऽहं प्रविशमि नु ?।

(१०)

॥ नतिस्वीकृतिः ॥

उदिते तपने नूनं जायेत महिमक्षयः ।
प्रातश्चन्द्रस्तथाप्येवं शान्तमुखेन भाषते ॥
अस्तसिन्धुतटे तावत् कुर्वन्नस्मि प्रतीक्षणम् ॥
प्रणम्य रविमुद्यन्तं गमिष्याम्यस्तपर्वतम् ॥

(११)

॥ भक्तिभाजनम् ॥

रथयात्रा जनारण्यं भवति च महोत्सवः ।
भक्ताश्च पथि साष्टाङ्गं लुठन्तः प्रणमन्ति च ॥
देवोऽहमिति पन्थाश्च भावयति रथश्च तत् ।
भावयति च मूर्तिस्तद् अन्तर्यामी हसत्यतः ॥

(१२)

॥ अपरिहरणीयम् (अपरिहरणीय) ॥

मृत्युः पुत्रं धनं चौरो हरिष्यामीति भाषते ।
सर्वस्वं तद् ग्रहीष्यामि भाग्यं ब्रूते यदस्ति ते ॥
हरिष्यामि यशोभारं तवाऽहं वक्ति निन्दकः ।
कविर्ब्रूते स को वा य आनन्दं मे हरिष्यति ?।

( १३ )

॥ स्पर्धा (स्पर्धा) ॥

ख-धूपो वक्ति तद् भ्रातः कीदृशं साहसं मम ।
आयामि भस्म निक्षिप्य तारकाणां मुखोपरि ॥
कविर्वक्ति मुखे तासां न हि लगति किञ्चन ।
प्रत्यागच्छति तद् भस्म पश्चात् पश्चात् तवैव च ।

( १४ )

॥ मोहस्य आशङ्का (मोहरे आशङ्का ॥

अद्राक्षीच्चक्षुरुन्मील्य शिशुपुष्पं धरामिमाम् ।
श्यामलां सुन्दरीं स्निग्धां गीतगन्धमयीं तथा॥
विश्वजगत् समाहूय अवादीच्छृणु हे प्रिय ।
यावदहं च तिष्ठामि तिष्ठ त्वं तावदेव तु ॥

( १५ )

॥ विरामः (विराम) ॥

विरामः कर्मणामङ्गं ग्रथितं तेन विद्यते ।
नयनावरकं पत्रं यथांशो नयनस्य हि ॥

( १६ )

॥ जीवनम् (जीवन) ॥

मिलित्वा जन्ममृत्युश्च जीवनक्रीडनद्वयम् ।
चलनस्य यथा ह्यङ्गं पादोत्तलनपातनम् ॥

(१७)

॥ तिरस्कारवैचित्री (गालिर भङ्गी) ॥

दण्डोऽपभाषते यष्टे त्वमेका क्षुद्रकाष्ठिका ।
यष्टिः कुत्सयते दण्डम्-उक्त्वा त्वं स्थूल एव च ॥

(१८)

॥ कलङ्कितो वणिक् (कलङ्क व्यवसायी) ॥

कलङ्कितां करोषि त्वं धूले सर्वस्य शुभ्रताम् ।
किमेतन्न भवत्येव कलङ्कवचनं तव ॥

(१९)

॥ परिचयः (परिचय) ॥

दया पृच्छति का त्वं भो मुखे कथा न विद्यते ।
कृतज्ञताऽहमित्याऽह अश्रुपूर्णं दृगव्ययम् ॥

(२०)

॥ निरापन्नीचता (निरापद् नीचता) ॥

निम्ने पङ्के पतित्वा त्वं पङ्कं क्षिपसि सर्वतः ।
तस्य चैव विपत्-पातो योजन उपरि स्थितः ॥

(२१)

॥ स्वस्य साधारणस्य च (निजेर ओ साधारणेर) ॥

चन्द्रो वदति विश्वेऽहं सर्वं ज्योतिर्विकीर्णवान् ।
कलङ्कं तु यदेवाऽस्ति गात्रे मे तच्च विद्यते ॥

( २२ )

॥ परकर्मविचारः (परेर कर्मविचार) ॥

नासिका भाषते कर्णो न जिघ्रति कदाचन ।
कुण्डलपरिधानाय केवलं वर्तते वृथा ॥
कर्णो ब्रूते वचः कस्य न हि शृणोति नासिका ।
करोति शब्दझङ्कारं निद्राकाले ( श्रुतिज्वरम् ) ॥

( २३ )

॥ आकाङ्क्षा (आकाङ्क्षा) ॥

वाञ्छा तवाऽम्र जिज्ञासे किं त्वं भवितुमिच्छसि ।
इक्षुः सरलमिष्टोऽहं बुभूषामि ब्रवीति तत् ॥
मानसीच्छा तवेक्षो का ? तत्क्षंणात् कथयत्यसौ ।
आम्रं सुमिष्टं सुस्वादु भवेयमिति मे स्पृहा ॥

( २४ )

॥ कृतिनः प्रमादः (कृतीर प्रमाद) ॥

शिखा मस्तकमारुह्य अग्रमान्दोल्य भाषते ।
हस्तपादं भृशं भ्रान्तिं करोति सर्वकर्मसु ॥
हस्तपादं विहस्याऽह अभ्रान्त केश हे शृणु ।
भ्रान्तिस्तु क्रियतेऽस्माभिः कर्म कुर्मो यतो वयम् ॥

( २५ )

॥ अयोग्यस्य उपहासः (अयोग्येर उपहास) ॥

नक्षत्रं पतितं पश्यन् दीपो हसति हर्षतः ।
ज्योतिष उत्सवस्याऽस्य परिणाम क ईदृशः ॥
हस तावन्निशा प्राह- 'सुखेन भाषणं कुरु ।

निःशेषो न भवेद्यावत्तैलस्य क्षुद्रसञ्चयः' ॥

( २६ )

॥ पुष्पफले (फुल ओ फल) ॥

फूत्कृत्य वक्ति पुष्पं 'रे फल फल वचः शृणु ।
तिष्ठसि त्वं कियद् दूरे वार्तां तां वद मे तव' ॥
फलं प्राह-'कथं भ्रातर्मामाह्वयसि तत्कृते ।
तवैवाभ्यन्तरे किन्तु तिष्ठाम्यहं निरन्तरम्' ॥

( २७ )

॥ अल्पं तथाऽधिकं ज्ञानम् (अल्पजाना ओ वेशिजाना) ॥

तृष्णार्तो गर्दभो गत्वा जलार्थी सरसस्तीरम् ।
वदन् धिग् धिग् जलं कृष्णं तत्क्षणात् प्रत्यवर्तत ॥
जलं प्राह जलं कृष्णं जानन्ति सर्वगर्दभाः ।
ब्रवीति स जलं शुभ्रम् अधिकं वेत्ति यो जनः ॥

( २८ )

॥ प्रवीणनवीनौ ॥

'इयन्तमधिकं मानं मत्तः पक्वकेशो गतः' ।
तद् दुःखात् कृष्णकेशस्तु 'हा हा वदंश्च शोचति' ॥
दृष्ट्वाऽऽह पक्वकेशस्तं 'सर्वं मानं गृहाण मे ।
कृष्णीकुरुष्व मां वत्स केवलमिति कामये' ॥

( २९ )

॥ बलतो बलीयान् (बलेर अपेक्षा बली) ॥

आरभ्य घोरसङ्ग्रामं प्रधावति प्रभञ्जनः ।
परिणामे जयी को वा मृदुः समीरणो हि सः ॥

( ३० )

॥ उदारचरितानाम्.॥

नामगोत्रविहीनं तु कुसुमं क्षुद्रमेककम् ।
दीनं प्रस्फुटितं छिद्रे प्राचीरस्य च कस्यचित् ।
धिक् कुर्वन्ति च तत् सर्वे काननस्य निवासिनः ।
'कच्चित् ते कुशलं भ्रातः'-सूर्य उदित्य भाषते ॥

( ३१ )

॥ असाध्या चेष्टा (असाध्य चेष्टा) ॥

शक्तिर्न विद्यते यस्य महत्वोपार्जने स्वयम् ।
अवनामयितुं तेन शक्यते किं महाऽजनः ॥

( ३२ )

प्रश्नातीतम् (प्रश्नेर अतीत) ॥

'पृच्छामि हे समुद्र त्वां का ते भाषा चिरन्तनी' ।
मदीयाऽनन्तजिज्ञासा प्रभाषते महोदधिः ॥
जिज्ञासे हे गिरिश्रेष्ठ एषा का स्तब्धता तव ।
हिमाद्रिः कथयत्येतच्चिरं मम निरुत्तरम् ॥

( ३३ )

॥ स्तुतिनिन्दे (स्तुति ओ निन्दा) ॥

स्तुतिनिन्दे समागत्य ब्रूतो 'गुणमहोदय ।
आवयोस्तव का मित्रं ?' श्रुत्वा गुणः प्रभाषते ॥
'मित्रद्वयं युवामेव शत्रुद्वयं तथा च मे ।
मयेदं चिन्तितं तेन किं मे मित्रेण शत्रुणा' ॥

( ३४ )

॥ आरम्भः शेषश्च (आरम्भ ओ शेष) ॥

एकदा भाषते शेषः 'सर्वं यास्यति शेषताम् ।
आरम्भ हे वृथा तस्माद् अहङ्कारस्तवैव हि' ॥
आरम्भो भाषते 'भ्रातः शेषतां यत्र गच्छति ।
आरम्भोदय एव स्यात् पुनस्तत्र सुनिश्चितः' ॥

( ३५ )

॥ महतो दुःखम् (महतेर दुःख) ॥

श्रुत्वा निन्दां स्वकीयां तां सूर्यो वदति दुःखतः ।
'किं कुर्वन् वा भविष्यामि सर्वेषां प्रीतिभाजनम्' ॥
विधिः प्राह ततस्त्याज्यः सौर समाज एष ते ।
क्षुद्रं कर्म कुरुष्व त्वं द्विनेत्रानादाय मानवान् ॥

( ३६ )

॥ आदिरहस्यम् (आदिरहस्य) ॥

वंशी वदति 'नास्त्यत्र गौरवं मम किञ्चन ।
फूत्कारस्य बलेनैव ध्वनिरुत्पद्यते मम' ॥
फूत्कारो वक्ति 'शून्योऽहं वायुरेवाऽस्मि केवलः ।
न वेद कतरः किञ्चित् तस्य वादयते हि यः' ॥

( ३७ )

॥ प्रभेदः (प्रभेद) ॥

कुरुतेऽनुग्रहो दुःखं न हि लप्स्ये ददाम्यहम् ।
ददामि न हि याचेऽहं करुणा भाषते ततः ॥

( ३८ )

॥ कुटुम्बिता ॥

मृत्तैलस्य शिखा ब्रूते मृत्प्रदीपशिखां प्रति ।
'भ्रातेत्युक्त्वाऽऽह्वये मां चेद् गलं ते मर्दयाम्यहम्' ॥
तदैव गगन-प्रान्ते चन्द्र उदयमागतः ।
मृत्तैलस्य शिखा प्राह 'आगच्छ भो ममाग्रज' ॥

( ३९ )

॥ मूलम् ॥

अग्रं वदति हे मूल नीचं त्वमतिनिश्चितम् ।
मूलं वदति हे भ्रातर्भवतु श्रेय एव ते ॥
तिष्ठसि उच्चदेशे त्वं पूर्णं गर्वेण भूयसा ।
गर्वमिदं ममैव च त्वामुच्चं कृतवत् त्वहम् ॥

( ४० )

॥ प्रयोजनस्य आत्मीयता (गरजेर आत्मीयता) ॥

धनस्य मञ्जुषां वक्ति भिक्षया वस्त्रबन्धनी ।
आवां भवाव आत्मीये तत् किं वा विस्मृतं त्वया ।
'त्वं चाऽपि' मञ्जुषा ब्रूते 'विस्मरेश्च कुटुम्बिताम् ।
मम यदस्ति सर्वं तद् गच्छेत् ते बन्धनीं यदि' ॥

( ४१ )

॥ ज्ञानस्य दृष्टिः प्रेम्णश्च सम्भोगः
(ज्ञानेर दृष्टि ओ प्रेमेर सम्भोग) ॥

कृष्णाऽसि त्वमिति श्रुत्वा जम्बूः कर्णेऽवदत् ततः ।
यो मां पश्यति कृष्णां मां वक्ति नूनं स एव च ॥

ज्ञात्वा तत् स्वल्पमात्रं च कथं वत्स निवर्तसे ।
यश्च खादति मां स्वादुं स तज्जानाति निश्चितम् ॥

( ४२ )

॥ स्वदेशद्वेषी (स्वदेश द्वेषी) ॥

वक्ति किञ्चिलिका नीचा मृत्तिकाकृष्णवर्णिका ।
कुपितः सन् कविर्वक्ति विरम विरमेति च ।
त्वमसि मृत्तिकाकीटस्तस्या रसं च खादसि ।
मृत्तिकानिन्दया किं ते यशोवृद्धिर्भविष्यति ॥

( ४३ )

॥ भक्तिरतिभक्तिश्च (भक्ति ओ अतिभक्ति) ॥

प्रसन्नवदनाऽऽयाति भक्तिश्च रिक्तहस्ततः ।
अतिभक्तिर्वदत्येतत् किं धनं प्राप्तवत्यसि ॥
दर्शय, मनसाऽऽप्नोमि नाऽहं दर्शयितुं क्षमा ।
अतिभक्ति –'रहं' वक्ति प्राप्नोमि हस्तहस्ततः ॥

( ४४ )

॥ असम्भवं श्रेयः (असम्भव भालो) ॥

श्रेयो ब्रूते यथासाध्यं श्रेयोऽधिकतरं शृणु ।
कां वा स्वर्गपुरीं त्वं हि कुर्वदालोकितां स्थितम् ॥
श्रेयोऽधिकतरं प्राह रुदत्तिष्ठामि तत्र हा ।
दम्भिकस्याऽक्षमेर्ष्यायां तथा चैव ह्यकर्मणः ॥

( ४५ )

॥ नदीं प्रति पल्वलम् (नदीर प्रति पल्वल) ॥

मत्कृते–पल्वलं वक्ति–नद्यश्च नतमस्तकाः ।

वहन्त्य आगताः सर्वाः स्वयमेव मदन्तिकम् ॥
पल्वल त्वं महाराज वक्ति पारिषदस्ततः ।
जलसंयोजनायैव सन्ति तेऽत्र नदीनदाः ॥

( ४६ )

॥ गद्यं पद्यं च ॥

लघुरहं-शरो ब्रूते-गदे त्वमति गुर्व्यसि ।
स्फीतवक्षास्ततस्त्वं हि ऋजुस्तिष्ठसि सर्वदा ॥
कुरुष्व मामकं कर्म तर्को गच्छन्तु दूरतः ।
शिरोभङ्ग परित्यज्य गत्वा विध्य उरस्थलम् ॥

( ४७ )

॥ सन्देहस्य कारणम् (सन्देहेर कारण) ॥

अत्यन्तं बहुमूल्योऽस्मि वदति कृत्रिमो मणिः ।
सन्देहो जायते तेन त्वं हि विशुद्ध एव न ॥

( ४८ )

॥ श्रेयो मन्दञ्च (भालो ओ मन्द) ॥

जालो वक्ति न कुर्वेऽहं पङ्कोद्धारमतः परम् ।
जालिको वक्ति यद्येतन् मत्स्याः स्युरति दुर्लभाः ॥

( ४९ )

॥ काकः काकः पिकः पिकः ॥

घूर्णयसि यथा देहं यत्रैव तत्र एव हि ।
वामे स्याद् वामहस्तश्च दक्षिणस्यां च दक्षिणः ॥

( ५० )

॥ नूतनं सनातनं च (नूतन ओ सनातन) ॥

नवैर्नवैर्विधानैश्च विचिन्त्य भाषते नृपः ।
करोमि न्यायसृष्टिं तु, न्यायधर्मो वदत्यतः ॥
अहं पुरातनो मह्यं को वा जन्म प्रदास्यति ।
सैव ते नूतना सृष्टिरन्यायः स हि केवलः ॥

( ५१ )

॥ दीनस्य दानम् ॥

अधमाय मरुर्ब्रूते-'ददासि त्वमियज्जलम्' ।
तुभ्यं किं प्रतिदास्यामि नास्ति मे तादृशं बलम् ॥
मेघो वक्ति-'न किञ्चित् त्वां याचेऽहं भो मरुस्थलि !
दानसुखं तु मह्यं त्वं देहीति प्रार्थना मम' ॥

( ५२ )

॥ कुज्झटिकाया आक्षेपः ॥

ब्रूते कुज्झटिका हेला यतोऽहं निकटे स्थिता ।
मेघः सहोदरो दूरे स्थितोऽतिगर्वभावतः ॥
कुज्झटिकां कविर्वक्ति-केवलं किं तदेव हि ।
मेघो ददाति वृष्ट्यम्बु त्वं तु ददासि फक्किकाम् ॥

( ५३ )

॥ ग्रहणे दाने च ॥

कृताञ्जलिः करो ब्रूते-शृणु निन्दक मे वचः ।
विनयः केवलो नैव ग्रहणकालतो मम ॥

आदानकाल आदास्ये कृताञ्जलिकरी भवन् ।
दानकाले च दास्यमि अञ्जलिं परिपूरयन् ॥

( ५४ )

॥ तन्नष्टं यन्न दीयते ॥

गन्धो गच्छति हाऽऽबद्धो प्रकटा सा हि तिष्ठति ।
पुष्पं तं शिर आन्दोल्य आह्वयति पुनः पुनः ॥
वायुर्वक्ति-गतो यश्च त्वदीयो गन्ध एव सः ।
स्वल्पं यन्न हि दीयेत गन्धः स उच्यते न हि ॥

( ५५ )

॥ अनावश्यकस्य आवश्यकता ॥

कथं त्वं वर्तसे सिन्धो हीनः सन् तृणशस्यतः ।
जगदर्धं परिव्याप्य दिवारात्रं च नृत्यसि ॥
सिन्धुर्वक्ति अकर्माऽऽहमभविष्यन्न यद्यपि ।
धरण्याः स्तनदेशात्तु केनाऽवाकृष्यते नदी ॥

( ५६ )

॥ परस्परम् ॥

वाणी ब्रूते यदाऽहं त्वां कर्म पश्यामि वै तदा ।
स्वकीयां शून्यतां दृष्ट्वा महालज्जां गताऽस्मि तु ॥
श्रुत्वा तद् भाषते कर्म-पूर्णे वाणि अये शृणु ।
दीनमहं तु मन्ये मां स्वयं तव समीपतः ॥

( ५७ )

॥ ध्रुवाणि तस्य नश्यन्ति ॥

रात्रौ चेदश्रुधारा च वहति सूर्यशोकतः ।
न हि निवर्तते सूर्यस्तारा व्यर्था भविष्यति ॥

( ५८ )

॥ अस्फुटं परिस्फुटं च ॥

ब्रूते घटजलं तावन् महासमुद्र हे शृणु ।
समुज्ज्वलमहं स्वच्छं त्वं हि तमोमयः सदा ॥
भाषते क्षुद्रसत्य च मम वाक्यं परिस्फुटम् ।
महासत्यं त्वदीया तु महानीरवता सदा ॥

( ५९ )

॥ स्वतन्त्रता (स्वाधीनता) ॥

चिन्तयति शरस्तावद् धावन्नहं चलामि वै ।
स्वतन्त्रोऽहं धनुः किन्तु बद्धमेकत्र तिष्ठति ॥
चिरं कालं; धनुर्वक्ति हसित्वा 'शर हे शृणु ।
न जानीषे ममाधीना त्वदीया सा स्वतन्त्रता' ॥

( ६० )

॥ विफला निन्दा ॥

निन्दन्ति गुणहीनं त्वां पुष्प सर्वेऽतिमात्रतः ।
हसन्ती नीरवं श्रुत्वा शाल्मली प्रत्युवाच तत् ॥
स्थिता तूष्णीमहं तावद् यावन्निन्दन्ति मां च ते ।
स्वकीयेन च पूर्णेन रूपेण प्रस्फुटाम्यहम् ॥

( ६१ )

॥ पर आत्मीयश्च ॥

भस्म वक्ति शिखा मे स्यात् स्वकीया तु सहोदरा ।
धूमो ब्रूते-ह्यहं किन्तु तस्या यमः सहोदरः ॥
खद्योतो वक्ति-'ताभ्यां मे नास्ति काचित् कुटुम्बिता ।
युष्मत्तोऽपि अहं तस्या आत्मीयतर सोदरः' ॥

( ६२ )

॥ अमूल्यं कारणम् ॥

प्रपूर्य पल्लवान् शाखा रजनिर्गोपने वने ।
प्रस्फोट्य कोरकाण्येव स्वयं गच्छति दूरतः ॥
पुष्पं जागरितं ब्रूते प्रभातप्रसवो ह्यहम् ।
प्रभातं मुखरं वक्ति भ्रान्तिस्तस्मिंश्च काऽपि न ॥

( ६३ )

॥ सत्यस्य संयमः ॥

स्वप्नो वक्ति-अहं मुक्तो नियमं नाऽनुयाम्य च ।
सत्यं वदति तस्मात् त्वं ( मिथ्या नास्त्यत्र संशयः ) ॥
स्वप्नो वदति बद्धं त्वमनन्तशृङ्खलैः सदा ।
सत्यं प्राह-तदर्थं हि सर्वे सत्यं वदन्ति माम् ॥

( ६४ )

॥ सौन्दर्यस्य संयमः ॥

नरो ब्रूते 'वयं वीरा यथेच्छं करवाम तत्' ।
कर्तित्वाऽऽकर्ण्य जिह्वां च नार्याह लज्जया म्रिये ॥

नरस्तां भाषते ( पश्य ) बाधा तव पदे पदे ।
कविर्वक्ति ततो जाता नारीस्वभावसुन्दरी ॥

( ६५ )

॥ अनुरागवैराग्यम् (अनुराग ओ वैराग्य) ॥

प्रेमा वदति वैराग्य धर्मस्तव मृषैव हि ।
त्वं प्रेमाऽसि महामोहो-वैराग्यं तं प्रभाषते ॥
अहं वच्मि त्यज स्वार्थं पश्य मुक्तिपथं तथा ।
यास्याव एकभावत्वं-प्रेमाऽह त्वमहं च तत् ॥

( ६६ )

॥ अपरिवर्तनीयम् ॥

एकमन्यं भवेद् वा चेत् किं तदा तेन वा भवेत्।
अधुना च भवेद् यद्धि तदाऽपि तद् भविष्यति ॥
भ्रातः सर्वाणिः दुःखानि दूरितानि तदा यदि ।
अधुना यत् सुखं तच्च नूनं दुःखी भविष्यति ॥

( ६७ )

॥ सुखदुःखम् ॥

आहन्ति यूथिकां स्थूलो बिन्दुः श्रावणमासजः ।
'प्रियेऽहम्' अवदत् 'कस्य शरेण' यूथिकाऽऽहता ॥
'शुभाऽहं' भाषते वृष्टि 'र्नताऽस्मि मर्त्यधामनि ।
तेन दुःखं भवेत् कस्य सुखं च कस्य वा भवेत् ॥

( ६८ )

॥ चालकः ॥

अदृष्टमहमपृच्छम् मां नैष्ठुर्यादमोघतः ।
बलेन च चिरं कालं को वाऽऽकर्षति पृष्ठतः ॥
तदाह पृष्ठतः पश्य, तदा च दृष्टवानहम् ।
आकर्षामि च साम्मुख्यादहं पश्चादवस्थितः ॥

( ६९ )

॥ सत्यस्य आविष्कारः ॥

अवदन् मां विना कञ्चिद् दिवालोके वसुन्धरा ।
दृष्टौ न पतितं रात्रौ लुप्ता यदा भवेच्च सा ॥
अनन्त-जगतोऽस्यैषा शूल्य-दृष्टि पथेऽपतत् ।
लेखा ज्योतिर्मयी ( शुभ्रा तमसि च चिरन्तनी ) ॥

( ७० )

॥ छलना ॥

संसारो मोहिनी नारी-इति मां सोऽवदत् तथा ।
भवावस्त्वमहं नित्यमारब्धौ प्रेमरज्जुतः ।
आदानं च प्रदानं च शेषत्वं यास्यतो यदा ।
'उत्थातव्यं पुनः किं न' अवदत् 'तन्न चिन्तितम्' ॥

( ७१ )

॥ सञ्ज्ञानम् आत्मविसर्जनम् ॥

वीरो वदति 'संसार मत्तः पृथिवि हे तथा ।
भ्रामयित्वा न मां किञ्चिदादातुं सक्षमा भवेत् ।

अहं दास्यामि यद् वै तद् ददामि ज्ञानपूर्वकम् ।
तत्तु शतगुणं तस्य लभ्यं फक्किकया च यत्' ॥

( ७२ )

॥ स्पष्टसत्यम् ॥

संसारः कथयत्येतन्नास्ति कपटता मम ।
जन्ममृत्युः सुखं दुःखं सुस्पष्टं सर्वमेव च ॥
वाणीं नित्यमहं भाषे यथासत्यं चिरन्तनीम् ।
त्वं तु गृह्णासि मिथ्यार्थं नित्यं तस्य च केवलम् ॥

( ७३ )

॥ वस्त्रहरणम् ॥

दुर्दान्तमरणं ब्रूते-संसारं व्यजये ह्यहम् ।
हरित जीवनं तस्य वसनं तु निरन्तरम् ॥
आकर्षति च यावत्तद् वस्त्रं तु वरतो विधेः ।
व्याप्य कालं चिरं तावद् वस्त्रं तद् वर्धतेतराम् ॥

( ७४ )

॥ चिरनवीनता ॥

रात्रिर्वदति धीरेण दिनान्तमुखचुम्बनम् ।
कृत्वाऽहं मरणं माता तव मन्नास्ति ते भयम् ।
नवनवानि जन्मानि हे पुरातन वासर ।
दत्वा ते प्रत्यहं कुर्वे नूतनं नूतनं चिरम् ॥

( ७५ )

॥ मृत्युः ॥

अभविष्यो यदि त्वं हि मृत्यो शून्यमयस्ततः ।
मुहूर्तेन जगद् विश्वम् अगमिष्यद् विलीनताम् ॥
परिपूर्णस्वरूपस्त्वं तव वक्षसि कक्षतः ।
शिशुवज्जगदेतत्तु ( हसद् ) दोदुल्यते सदा ॥

( ७६ )

॥ ध्रुवसत्यम् ॥

बिन्दुमात्रमहं ज्योतिस्तथापि मन्यते मया ।
अन्यन्न किञ्चिदस्त्यत्र अहमस्मि च केवलम् ॥
पक्ष्मनिपातमात्रेण वीक्षे ममाऽन्तरालतः ।
अनादेहे त्वमेवाऽसि चिरेण आदितामस ॥

( ७७ )

॥ शक्तेः शक्तिः ॥

दिवसे चक्षुषो दम्भो ह्यधिकृत्य दृशो बलम् ।
आगतायां तु रात्रौ च अश्रु वहति नेत्रतः ॥
आलोकमाह-अद्याऽहमबोधि बाधितं यदा ।
द्रष्टुं शक्नोम्यहं यत्त्वां तवैव हि प्रसादतः ॥

( ७८ )

॥ एकः परिणामः ॥

शेफालिकाऽवदत् 'तारे विच्युता पतिता ह्यहम्' ।
'मदीयं' भाषते तारा 'कर्म च शेषतां गतम्' ॥

पूर्णमकुरुतां रात्रेः प्रस्थानकालडल्लकम् ।
आकाशस्य च तारा सा शेफालिका वनस्य च ॥

( ७९ )

॥ शक्तेः सीमा ॥

ब्रूते कांस्यघटः ( खेदात् ) खनखनायितकण्ठतः ।
'पितृव्य कूप-सिन्धुस्त्वं कथं वा नाऽभवस्ततः ॥
असङ्कोचेन भावेन अवगाह्य यदृच्छया ।
आपूर्य उदरं मे तत् पिबेयं प्रचुरं जलम्' ॥
प्राह कूपश्च-'सत्यं तत् क्षुद्रः कूपोऽस्मि निश्चितः ।
तद्दुःखेन चिरं कालमस्मि निःशब्दतः स्थितः ॥
किन्तु वत्स कृते तस्य चिन्तयसि कथं च वा ।
अवनम जले तावद् यतिधा वा त्वमिच्छसि ॥
ग्रहीतुं शक्नुयार्यावत्तावद् गृह्णासि वा यदि ।
स्थास्यम्यहं तथाप्येवं जलं दत्त्वा च मामकम्' ॥

( ८० )

॥ यथार्थत आत्मीयः ॥

कूष्माण्डमानसस्याऽयमभिमानो महत्तरः ।
वंशनिर्मितमञ्चोऽयं विमानं पुष्पकं मम ॥
दृष्टिं क्षिपति भूम्यां न तद् भ्रान्तिवशतः कदा ।
नभश्चरोऽहमित्येष विश्वासस्तस्य मानसे ॥
चन्द्रं सूर्यं च ताराश्च भ्रातेत्युक्त्वा च भाषते ।
दृष्टिं निक्षिप्य शून्ये तद्दीर्घं श्वासं विमुञ्चति ॥

स्थूलमेतद्धि वृत्तं तु-चिन्तयति स केवलम् ।
धरण्या सह बध्नाति कुटुम्बबन्धेन माम् ॥
वृन्तं चेच्छिद्यते तेन ततो निमिषमात्रतः ।
उड्डीय च गमिष्यामि ज्योतिर्मयीं भुवं मम ॥
अच्छिद्यत यदा वृत्तं बोधस्तस्य तदाऽभवत् ।
सूर्यस्तस्य न वा कोऽपि मृत्तिकैव यथार्थतः ॥

( ८१ )

॥ नवीना पद्धतिः (नूतन चाल) ॥

एकदा गर्जनं कृत्वा विक्षुब्धो महिषोऽवत्- ।
'अश्वस्येव मामप्येकः स्थास्यति पालको जनः ॥
सम्पूर्णा च परित्याज्या माहिषी पद्धतिर्मया ।
प्रातः सायं द्विवारं मे कार्यं गात्रविमर्दनम्' ॥
इत्थं स प्रत्यहं प्रातर्लम्फझम्पमकुर्वत ।
गोशालायां, प्रभुर्वक्ति 'कर्तव्यमेतदेव किम् ?
श्रेय एतत्तदेवाऽस्तु', नियुक्ताश्च ततः परम् ।
जना दश तदर्थं च, न गतेऽपि दिनद्वये ।
महिषोऽभाषत क्रन्दन्-'नाऽधिकेन प्रयोजनम् ।
सन्तुष्टोऽस्मि प्रभो हे मे तत् चेष्टातो विरम्यताम् ।
दलनमर्दणस्यैवम् आतिशय्यमभून् मम' ॥

( ८२ )

॥ निष्कर्मणो विपत्पातः (निष्कर्मार विभ्राट) ॥

अत्युच्चकण्ठतः क्रन्दल्लाङ्गलं भाषते शृणु- ।
'त्वं वा हे कुत आयातो भ्रातः फलक यद्दिने ॥

कृषको कृतवान् योगं तवैवं च मया सह ।
तत्परमेवमारब्धं शिरसा खननं मम' ॥
'भवतु'-फलको ब्रूते-'भवेयं विच्युतस्ततः ।
उपविष्टं गृह तिष्ठेः पश्य केन सुखेन वा' ॥
फलको विच्युतो जातो हलं तु च ततः परम् ।
अतिष्ठत् कर्मणा हीनम् उपविश्याऽतिहर्षतः ॥
'कृषको वक्ति 'गेहे किमनया वाऽपदा भवेत् ।
अनेनैवेन्धनी-कृत्य चुल्लिं मे ज्वालयाम्यहम्' ॥
हलं वदति-'आयाहि भ्रातः फलक सत्वरम् ।
सत्यं ज्वलनतः श्रेयानतीव स परिश्रमः' ॥

( ८३ )

॥ जयपराजयम् ॥

मधुकरेण सार्धं तदभवत् कलहो महान् ।
भीषणशूलपुच्छस्य द्वयोर्मध्ये ह्यजायत ॥
महांस्तर्कस्तयोः शक्तिरधिका कस्य वा भवेत् ॥
'अस्ति प्रमाणसहस्त्रं' भीमशूलो वदत्यथ ।
'न हि वेधस्य ते शक्तिर्मम तुल्या कदाचन' ॥
सहाश्रुपूर्णनेत्राभ्यां मधुकरो निरुतरः ।
कर्णमूले तमाहूय वनदेवीत्यभाषत- ॥
'कथं नतशिरा वत्स, एतत् किन्तु सुनिश्चितम् ।
पराजितो विषेण त्वं मधुना जितवानसि' ॥

( ८४ )

॥ कीटस्य विचारः ॥

महाभारतमध्ये तु प्रविश्य कीट एककः ।
पृष्ठद्वयं च कर्तित्वा छिद्रशतं चकार ह ॥
पण्डितो ग्रन्थमुद्घाट्य शिरः आहत्य शोकतः ।
'अरे कीट किमेतद् वै महानिष्टं कृतं त्वया ॥
तीक्ष्णीभूतैश्च दन्तैस्ते करोत्युदरपूरणम् ।
खाद्यं प्राज्यं त्वदीयं तु धूल्यामुपरि तिष्ठति ॥
अस्य मध्ये किमासन् वा कृष्णचिह्नानि केवलम् ।
'यदहं नाऽवबुध्ये च जानामि तुच्छमेव तत् ।
अग्रतो मूलपर्यन्तं कर्तित्वा नाशयामि च' ॥

( ८५ )

॥ यथा कर्त्तव्यम् ॥

छत्रं वदति 'धिग् धिक्त्वां हे मस्तक महाशय ।
एषोऽन्यायो विचारस्तु सहनीयो न मे तव ॥
हट्टं वाटं च यासि त्वं सदा भवन्नकातरः ।
आतपो वर्षणं सर्वं पतति च ममोपरि ॥
अभविष्यो यदिच्छत्रम्, अभविष्यः किमग्रज' ।
शिरो ब्रूते 'ह्यभोत्स्येऽहं मर्यादां मस्तकस्य ताम् ।
अभोत्से गुणतस्तस्य परिपूर्णा वसुन्धरा ।
सर्वथा रक्षणं तस्य मम गुणस्तु केवलः' ॥

( ८६ )

॥ असम्पूर्णा वार्ता (असम्पूर्ण संवाद) ॥

फूत्कृत्य रुदती ब्रूते चकोरी-'पूर्णचन्द्र हे ।
पण्डितस्य वचः श्रुत्वा प्रमादं गणयामि तु ॥
त्वं किल ह्येकदा नस्यास्त्रिदिवे श्रूयते च तत् ।
महाप्रलयकाले तु निर्वाणत्वं गमिष्यसि ॥
हा सुधाकर हा हे हा हा हा निशापते तदा ।
कीदृशी गतिरस्माकं न जाने वा भविष्यति ॥
'पण्डितस्य गृहं गच्छ' चन्द्रो वदति 'हे प्रिये ।
कियत् त्वदीयमायुस्तत् पृष्ट्वाऽऽगच्छ विशेषतः' ॥

( ८७ )

॥ ईर्ष्याजनितसन्देहः (ईर्ष्यार सन्देह) ॥

पुच्छ आन्दोलिते तस्य च्छाया दोदुल्यते यदा ।
दर्पणे कुक्कुरस्तन्न सहते च कथञ्चन ॥
दासो यदा प्रभोः प्रीत्यै दोलयति च चामरम् ।
क्रुद्धः सन् कुक्कुरः कोऽयं पामरश्चिन्तयेत् तदा ॥
कम्पते यदि वृक्षो वा जलं तरङ्गितं भवेत् ।
कुक्कुरो भीषणक्रोधात् करोति भीमगर्जनम् ।
निश्चितं बुद्धवांस्तत् स त्रिभुवनस्य दोलनम् ।
झम्पेन तत् प्रभोः क्रोड उत्थानहेतवे खलु ॥
स एव हि प्रभोः पात्रात् सूपं लेलिह्यते तथा ।
विश्वे तस्यैव पुच्छं तु दोलयेदपि केवलम् ॥

( ८८ )

॥ अधिकारः ॥

अधिकारोऽधिकः कस्य विद्यतेऽत्र वनोपरि ।
तर्केणाऽस्य गतः कालो मध्याह्नः समुपस्थितः ।
'शृणुत बान्धवाः सर्वे'-आह्वयन् बकुलोऽवदत् ।
'गन्धेनाऽहं वनं सर्वमधिकृत्य विराजितः' ।
पलाशश्चावदच्छ्रुत्वा शिर आन्दोल्य गर्वतः ।
वर्णेनाऽहं दिशः सर्वा अपहृत्य सुशोभितः ॥
वक्रीभूय गुलाबस्तु स्वस्य वाक्यमभाषत ।
वनेऽस्मिन् गन्धशोभाभ्यां प्रभावोऽस्ति ममैव च'
कचुर्वदति 'गन्धं च शोभां प्रक्षाल्य खादत ।
अधिकारो ममैवाऽत्र प्रथितो भूमिमण्डले' ।
मृत्तिकाभ्यन्तरे तस्य अधिकारे प्रधानता ।
प्रत्यक्षेण प्रमाणेन कचोरेव जयोऽभवत् ॥

( ८९ )

॥ क्रीडनकम् (खेलना) ॥

विपण्यां सन्ति यावन्ति क्रीडनकान्यशेषतः ।
चिन्तयति शिशुर्वृद्धकाले क्रेष्यामि निश्चितम् ।
क्रीडावस्तु वयोवृद्धौ लोष्टवन् मन्यतेऽखिलम् ।
प्रसार्य याचते हस्तौ जनधनानि सर्वतः ॥
ततोऽधिकं वयः किं न प्राप्स्यति हेलया यदा ।
क्रीडाहट्टं पृथिव्याः हसंस्त्यक्त्वा प्रयास्यति ॥

(९०)

॥ स्पष्टभाषी ॥

वसन्त आगतोऽरण्ये पुष्पाणि विकसन्ति तत् ।
मुहूर्तं नास्ति विश्रामः पिको गायत्यहर्निशम् ॥
काको ब्रूते 'किमन्विषयन् कर्मान्तरं न लब्धवान् ।
चाटुगानं वसन्तस्य इदमारभसे कथम् ?'
गानाद् विरम्य दृष्ट्वा तं पिको वक्ति महाशय !
'को भवान् कुत आयातः ?' काको ब्रवीति 'हे पिक !
काकोऽहं स्पष्टभाष्ये को, धन्यस्त्वं प्रणमामि ते ।
पिको वदति-'कण्ठे ते तिष्ठतु स्पष्टभाषणम् ।
चिरं तथा ममैवाऽस्तु सत्यं मिष्टं च भाषणम्' ॥

(९१)

॥ राजनीतिः ॥

कुठारो वक्ति 'भिक्षां मे देहि शाल महाशय ।
शाखामेकां त्वदीयां च दण्डो मे नास्ति हस्तवत्' ।
शाखाग्रहणतो दण्डो यदैव निर्मितोऽभवत् ।
याच्ञा का च न विद्येत भिक्षुकस्य ततः परम् ॥
छेत्तुं च मूलदेशे स आपातान् कृतवान् बहून् ।
दीनस्य शालवृक्षस्य आद्यन्तं लोपतां गतम् ।

(९२)

॥ दानरिक्तः ॥

पतितो गगनस्यैकप्रान्ते मेघो हृतोदकः ।
वर्षान्ते; वर्षणात् पूर्णं सरो दृष्ट्वाऽथ तद्दशाम् ।

करोति मृदुहासं च दिनं व्याप्य क्षणं क्षणम् ॥
'लक्ष्मीहीनोऽयमेवाऽसौ गृहहीनस्तथैव च' ।
निःशेषीकृत्य-वक्ति च-'कुत्र वा विलयं गतः ॥
जलपूर्णं चिरं कालमहमस्मि च पश्य माम् ।
गम्भीरं सारवच्चैव न स्तश्चलनकम्पने' ॥
मेघः प्राह-'अरे वत्स, गर्वमित्थं कुरुष्व मा ।
तवैषा पूर्णता किन्तु ममैव गौरवं हि तत् ॥'

( ९३ )

॥ नम्रता ॥

वंशशाखावृतिर्वक्ति 'वंश-वन पितामह ।
अहरहं कथं वा त्वमित्थं च नम्रतां गतः ॥
वयं च तावके वंशे क्षुद्राः शाखास्तथापि तु ।
उत्तोल्य च चिरं कालं शिरस्तिष्ठेम पश्य तत् ॥
'एष एव प्रभेदोऽस्ति केवलं क्षुद्रवृद्धयोः ।
नतो भवामि क्षुद्रश्च न भवेयं कदाचन' ॥

( ९४ )

॥ भिक्षोपार्जनम् चैव (भिक्षा ओ उपार्जन) ॥

'वसुमति, कथं मातरीदृशी कृपणा भवेः ।
मृत्तिकाखननं कुर्यां वारं वारं तथापि तु ॥
शस्यकणश्च लभ्येत, दातुमिच्छाऽस्ति चेत् तव ।
सुप्रसन्ना प्रयच्छ त्वं सहासवदना सती ॥
कथं वा मस्तकात् स्वेदं पातयसि च पादयोः ।
शस्यं चेद् दीयते प्राज्यं प्रयच्छ कर्षणं विना' ॥

'तेन का क्षतिरेव स्यात्, मदीयं गौरवं ततः' ।
वसुमती हसन्त्याह 'वर्धेत स्वल्पमेव हि ॥
त्वदीयं गौरवं किन्तु तेन लुप्तं भविष्यति' ।

( ९५ )

॥ उच्चस्य प्रयोजनम् (उच्चेर प्रयोजन) ॥

अवदन् मनसः खेदात् क्षेत्रं समतलं शृणु ।
हट्टं प्रयूर्य यच्छेयं कति शस्य-फलानि च ॥
न जानेऽहं किमर्थं पर्वतो विद्यते ततः ।
स एव हि महाराज शैलसिंहासनोपरि ॥
विधातुरविचारोऽमुच्चता नीचता कथम् ।
तद् वार्तां नाऽवबुध्येऽहं किञ्चिन्मात्रं च चेष्टया ॥
'अभविष्यद्'-गिरिर्वक्ति 'सर्वा समतला धरा ।
भवेत् किं नामिता धारा निर्झरस्य सुमङ्गली ॥

( ९६ )

॥ अचेतनमाहात्म्यम् ॥

जलद वक्षसा हे ते दधासि त्वमियज्जलम् ।
तथापि लघुवेगेन धावसि वायुवक्त्रतः ॥
पोषयसि शतं भीमा विद्युतः शून्यवक्षसि ।
नेत्रभ्रान्तिं करोषि त्वं सुस्निग्धनीलरूपतः ॥
कार्यमेतदसाध्यं त्वमनायासेन साधयेः ।
रहस्यं तत्र किं वाऽस्ति ? दासं कथय तद्वचः' ॥
प्राह मेघस्ततो वाणीं गुरुगर्जनमध्यतः ।
'नाऽहं जाने किमाश्चर्यमत्र वा विद्यते कुतः' ॥

( ९७ )

॥ शक्तस्य क्षमा (शक्तेर क्षमा) ॥

नारदोऽवददागत्य 'धरणि देवि हे शृणु ।
तवान्नभोजनं कुर्वन् नरस्त्वामेव निन्दति ॥
वदति मृत्तिका त्वं हि धूलिः स्थूला जडा तथा ।
अकृतज्ञजनो वक्ति मलिनां त्वां च सर्वदा ॥
सृजेरन्नजले बाधां मुखं भवतु पाण्डुरम् ।
धूलिश्च मृत्तिका किं वा वत्स्यैस्तदवगम्यताम्' ॥
हसन्ती धरणी प्राह-आपद् गच्छतु दूरतः ।
प्रतिशोधं च गृह्णीयां किं ते स्युः सदृशा मम ॥
चिह्नं लगेन्न मे गात्रे तदीयानां च निन्दया ।
मरिष्यन्ति च सर्वे ते भवेयं कुपिता यदि' ॥

( ९८ )

॥ प्रतापस्य तापः (प्रतापेर ताप) ॥

चिन्तयति दिवारात्रं सिक्तकाष्ठं च साश्रुतः ।
काष्ठस्य ज्वलतं का वा दीप्तिस्तेजोऽस्य शोभनम् ॥
पतित्वा तामसे कोणे म्रियत ईर्ष्यया च तत् ।
ब्रूते केन सुयोगेन प्राप्स्यामि ज्योतिरीदृशम् ॥
वक्ति च ज्वलदङ्गारः-'अदग्ध काष्ठ हे शृणुः' ।
भुङ्क्षे त्वं हि वृथा दुःखं निश्चेष्टवासनावशात् ॥
प्राप्तवन्तो वयं यच्च दहनान् मरणात् तथा ।
तत् किं तावकहस्ते च उड्डीय आगमिष्यति ॥
वदति सिक्तकाष्ठं तत् 'को मरिष्यति वह्निना' ।
वदति ज्वलदङ्गारस्तदत्तु घूणकीटकः ॥



# लेखनतः

(१) निमिषं गणयित्वा यज्जीवति च प्रजापतिः ।
गणयति न वर्षाणि समयस्तस्य तद् बहुः ॥

(२) स्वीकृतेषु प्रभेदेषु ऐक्यं लभ्यं भविष्यति ।
प्रभेदा यदि भज्यन्ते भेदवृद्धिः प्रजायते ॥

(३) प्राक् खञ्जीकरणं पश्चात् पृष्ठदेशेन धारणम् ।
श्रूयते मधुरं तन्न दयैषा यदि कथ्यते ॥

(४) तरुः स्वां सुन्दरीं छायां पश्यन् सदाऽवतिष्ठते ।
स्वकीया तस्य सा तां च कदापि नाऽधिगच्छति ॥

(५) पश्यामि दर्पणे यां सा छाया मम तथापि तु ।
अपूर्वा ममता ह्येषा गर्वं कुर्वे तदर्थतः ॥

(६) प्रविशति मुखे नेत्रे धूलिः पादाहता यदि ।
निमेषाद् विलयं याति जलेन यदि सिच्यते ॥

(७) अमृतं यच्चिरं सत्यं परिमाणं न तस्य च ।
प्रमाणयति मृत्युस्तत् प्रत्यहं स्वेन कर्मणा ॥

(८) गगने गगने चैव देशे देशे नवे नवे ।
नवोषसि नवं जन्म लब्ध्वा जागर्ति वै रविः ॥

(९) प्रभुर्यच्छति मे मानं यदा कर्म करोम्यहम् ।
यदा गायामि सानन्दं स्निह्यति भगवान् मयि ॥

(१०) नभसि प्रतिनक्षत्रं हासो ज्वलति यद् विधेः ।
खद्योतः क्षीणजीवी तम् आनयद् धरणीतलम् ॥

(११) एकदा त्वमदाः पुष्पं विद्धो हा तस्य कण्टकैः ।
तथापि च हसित्वा त्वां सुन्दरं प्रणमाम्यहम् ॥

( १२ ) पथिप्रान्ते च कुत्राऽपि तीर्थं मम न विद्यते ।
पथः प्रान्तद्वये सन्ति कति देवालया मम ॥

( १३ ) मानुषं वेति निर्बोधं कीटस्तु ग्रन्थकर्तकः ।
नाऽत्ति ग्रन्थं कथं वा स चर्वित्वेत्यस्य विस्मयः ॥

( १४ ) सूर्यास्तरागरक्तेव धरा परिणतं फलम् ।
प्रसारयति तच्छेत्तुं हस्तं रात्रिस्तमोमयी ॥

( १५ ) गमिष्यत्येव गन्तव्यं द्वारे नोद्घाटितेऽपि च ।
क्षत्या संमिश्रिता बाधा एकाकारा भविष्यति ॥

( १६ ) परिधाति गले मालां काङ्क्षति ग्रथितां नरैः ।
देवो रक्ष तद् भूम्यां स्वकीयं पुष्पडल्लकम् ॥

( १७ ) कण्टकेष्वपराधा मे पुष्पे दोषो न विद्यते ।
पुष्पं चिनुष्व सन्तु समीपे कण्टकाः प्रिय ॥

( १८ ) लेखनी न हि जानाति लिखति वा किमङ्गुलिः ।
लिख्यते यच्च तत्सर्वं मिथ्या तस्य समीपतः ॥

( १९ ) लक्ष्य आत्मरसो यस्माद् भिक्षोः कवलतां गतः ।
इक्षुर्विनाशमाप्नोति दृष्ट्वेदं मूर्ख रे ततः ।
शिक्षां लभस्व वृक्षो हि फलदानेन रक्ष्यते ॥

( २० ) वह्निर्यदा तरोर्मर्मध्ये बद्धोऽवतिष्ठते ।
पल्लवफलपुष्पेण वृक्षस्तावद् विराजति ॥
यदोद्दामशिखा लज्जाहीना छिनत्ति बन्धनम् ।
तदा नाशत्वमापद्य व्यर्थतां याति भस्मसु ॥

( २१ ) त्यक्त्वा सर्वाभिमानं त्वं हे प्रेम क्षमसे यदा।
तदेव दारुणो दण्डस्तदेवाऽस्ति सुदुःसहम् ।
माधुरि कठिनाघातैस्तिष्ठसि नीरवा यदा ॥

(२२) भिक्षुरूपधरे देवे द्वारे देहीति याचति ।
मनुष्यः सहसैश्वर्यवार्ता स्वस्य लभेत तत् ॥

(२३) विरहस्य प्रदीपे तु प्रज्वलतु दिवानिशम् ।
मिलनस्मृतिसौख्यस्य निर्वाणहीनवर्तिका ॥

(२४) तामसमागतं दृष्ट्वा विलपन्ति पयोधराः ।
विस्मृतिमेव किं प्राप्तास्तैरेव सूर्य आवृतः ॥

(२५) बुद्बुदो विद्यते बद्धः स्वकीयक्षुद्रवेष्टने ।
शून्ये विलयमायाति न च जानाति सागरम् ॥

(२६) पारावारसमाऽसीमा निशाऽतलतमस्विनी ।
तदुपरि दिनं चित्रं प्लवने बुद्बुदो यथा ॥

(२७) फाल्गुनः शिशुवद् धूल्यां चित्रमङ्कयति क्षणम् ।
मार्ष्टि परक्षणे याति स्मरित न च किञ्चन ॥

(२८) मिलन्ति शिशवो देवकुलप्राङ्गण-भूतले ।
विस्मृत्य पूजका देवः पश्यति शिशुखेलनम् ॥

(२९) आकाशो बहुनाऽऽवृत्य रक्षति सर्वदा धराम् ।
स्वयं तथाप्यसीमः स सुदूरमवतिष्ठते ॥

(३०) दूरं निकटमायात दिने ह्यवसिते सति ।
दूरं गत्वेव तत् किन्तु समीपतरमस्ति च ॥

(३१) गुहाचर गुहां त्यक्त्वा एहि वाणीपतङ्गमे ।
शेष-यात्रावकाशस्ते गोधूल्यां समुपस्थितः ॥

(३२) एषा भगवदाकाङ्क्षा प्रेम्णा भवतु निर्मितः ।
देवालयो, मनुष्यस्तु प्रस्तरैरिष्टकैस्तथा ॥
उच्चैः-कृत्य नभश्चुम्बि निर्माति जयतोरणम् ॥

( ३३ ) ज्वालयत्यन्तरीक्षे यस्तारकादीपमालिका ।
पश्यन्नपेक्षते पृथ्व्यां कदा दीपो ज्वतिष्यति ॥

( ३४ ) गानेन मम गानेन लभे स्पर्शं प्रभो तव ।
शैलः स्पृशत्युदन्वन्तं यथा निर्झरधारया ॥

( ३५ ) उषा यदालयं याति नानावर्णीयपुष्पवत् ।
जागर्ति गौरवात् सूर्यस्तदा शुभ्रफलं यथा ॥

( ३६ ) विजयतोरणं धूल्यां परपीडकनिर्मितम् ।
भग्नं-क्रीडागृहं बाला निर्मान्ति तस्य प्रस्तरैः ।

( ३७ ) ज्योतिः स्वपादचिह्नं तु विहायसि न रक्षति ।
गन्तु जानाति तस्मात् तत् सुचिरस्थायि तिष्ठति ॥

( ३८ ) मेघो दत्ते सुवर्णानि रवये ह्यस्तगामिने ।
उद्यच्छशिकृते पाण्डुवर्णो हासोऽवतिष्ठते ॥

( ३९ ) अङ्क्यति च चित्राणि नित्यं स्वर्णपयोधरः ।
स्वनाम स तथाप्येवं लिखित्वा न हि रक्षति ॥

( ४० ) कुमारि हे तव प्राणा अपक्वं कठिनं फलम् ।
घनसङ्कोचसंच्छन्नं स्वात्मदानं सुरक्षितम् ॥

( ४१ ) मूल्यं च दीयते यस्य जीवनस्य हि मृत्युना ।
अमृतसदने मृत्युं जयति तस्य जीवनम् ॥

( ४२ ) वधूर्विरहिणी यद् वदञ्चलेनाऽवगुण्ठिता ।
उत्सुका तामसी तद्वदुपविष्टा त्वपेक्षते ।
प्रत्यावर्तनमिच्छन्ती आलोकस्य प्रवासिनः ॥

( ४३ ) विलम्बेनोदितस्त्वं तु कृष्णपक्षीय चन्द्र हे ।
तथापि रजनीगन्धा त्वामपेक्ष्याऽवतिष्ठते ॥

(४४) कीटे कुरु दयां पुष्प न हि मधुकरो हि सः ।
प्रेमाऽस्य प्रबला भ्रान्तिस्तेनाऽसौ जर्जरीकृतः ॥

(४५) रोदिति म्रियमाणेयं विरसा गीतिकाक्ष्मिणी ।
वीणातन्त्रीर्ममैतस्यां स्वरसंयोजनं कुरु ॥

(४६) दिवसस्य समग्रस्य स्वीकरोत्यवहेलनम् ।
ज्ञात्वा मृत्वर्तिका लभ्यं शिखायाश्चुम्बनं निशि ॥

(४७) नीरवनीडमध्ये तु निभृतजीवनस्य च ।
घनच्छायातले तिष्ठेन् निर्वाक्या एकका व्यथा ॥

(४८) ज्योतिर्मयस्मृतेश्छायां वक्षसि विदधाति यत् ।
(अनागताय कालाय) तदेव चित्रमुच्यते ॥

(४९) आवृता दिनतापेन हृतवाक्या व्यथा पुनः ।
दीप्तनक्षत्रमालेव रात्रेर्ज्वलति तामसे ॥

(५०) मालिकां तामसी-कण्ठ आलोको रतिमत्तया ।
यदा यच्छति सानन्दं सैव सृष्टिस्तदोच्यते ॥

(५१) पथिकोऽहं यदाऽऽयातः पुष्पवनं तदा ननु ।
कोरकद्वयमेवाऽऽसीत् प्रतियास्याम्यहं यदा ।
वासन्तेन समीरेण पुष्पं प्रविकसिष्यति ॥

(५२) अत्राऽऽगतो वसन्त त्वं किमु पथभ्रमादिव ।
प्राप्तश्चेज्जीर्णशाखायां पुष्पमेकं विकासय ॥

(५३) आलोकाय रतिं धत्ते छाया लज्जावती वने ।
पत्रं ब्रवीति तत्पुष्पं-श्रुत्वा पुष्पं हसत् स्थितम् ॥

(५४) उद्दिश्य गगनं तूष्णीमास्ते पर्वतमालिका ।
स्तम्भिताऽऽकुलता सा हि धरण्या अगमाय च ॥

(५५) यदा श्रृणोति सत्यं स्वं वचनं संगीते ननु ।
सौन्दर्येण तदा तस्य हासो विकसितो भवेत् ॥

(५६) गुरुभारकृतैः पूर्णा तरीः कालमहोदधौ ।
वहन्ती दुर्भरं तरणे यदि मज्जति ।
स्वल्पसंख्यमिदं तेन गानं लघुतरं मया ।
स्त्रोतस्युत्सृज्यते तत्र प्लवमानं चलेद् यदि ॥

(५७) जानामि मम पुष्पाणि हर्षेण विकसन्ति वै ।
किमप्यज्ञातमाङ्गल्य-चुम्बनस्पर्शलाभतः ॥

(५८) अपेक्ष्य गुणिनं वंशीं दत्तदृष्टिः पथि स्थिता ।
अन्विष्यति गुणी वंशी व्यपेक्षैषा परस्परम् ॥

(५९) सीमाहीनो महाकाशः शून्ये प्रसार्य तिष्ठति ।
अमरभुवनस्येह चित्रं लिखति मेदिनी ॥

(६०) मल्लिकाकोरकं सूर्यं दृष्ट्वा करोति चिन्तनम् ।
स्फुटिष्यति कदा वा च महत् पुष्पं ममेदृशम् ॥

(६१) प्रासादो धनिनां राहुः क्षुधितो विकटो यथा ।
वस्तुपिण्डस्य भारेण बाहुर्बद्धः सदा ततः ।
दीनस्य रिक्तगेहे तु स्मृतिपथमुदेति मे ।
आश्लेषार्थं दृढं बाहुर्विमुक्तो विद्यते सदा ॥

(६२) कुसुमोपायनं दत्ते निशाकराय काननम् ।
रोदिति सागरः स्वस्य ( वक्षसि ) शून्यतां दधत् ॥

(६३) नाऽऽस्तृणोति कदा जालं धर्तुं शशधरं नभः ।
बद्धस्तिष्ठति चन्द्रस्तत् स्वयं हि बन्धनं विना ॥

(६४) नीरवस्य यदा वाणी वाणीं ममाऽध आगता ।
तदेव तमहं जाने जानीयां स्वञ्च मां तदा ॥

(६५) प्रेमदुःखं यदा कुर्याच्छिरोविभूषणं मणिम् ।
तदेवाऽनन्द इत्येव जानामि तत्क्षणादहम् ॥

(६६) मृत्युसृष्टिरिदं विश्वं मृत्युनैति नवीनताम् ।
असुरस्याऽपमृष्टिस्तु त्रुट्येत् स्वास्तित्वभारतः ॥

(६७) प्रदाय विपदां लोभं भ्रामयित्वा महोदधे ।
मानवानां च चित्तानि बहिरानीतिवानसि ॥
भयस्य भीषणा वाणी नित्यं हि मानवास्तव ।
आकर्षति च पन्थानं दुःसाहसस्य दुस्तरम् ॥

(६८) विद्यते न रसो यत्र खन्यते यावदेव हि ।
जायते मरुभूम्यां हि निष्फलः कण्टकद्रुमः ॥

(६९) खद्योतवन् मम स्वप्नो दीप्तप्राणमणिर्यथा ।
उड्डीयते तमस्विन्यां स्तब्धायां ज्योतिषः कणः ।

(७०) भवतु मामकं प्रेम रविकिरणसन्निभम् ।
ज्योतिर्मय्या हि मुक्त्या तत् स्वामावृणोतु सर्वदा ॥

(७१) प्रेम येन कृत तावदङ्ग वाणिज्यकर्मणः ।
प्रेम दूरे समासीनं तस्य रङ्गं च पश्यति ॥

(७२) प्राणेभ्यो मृत्युमुद्रा च यदा मूल्यं प्रयच्छति ।
प्राणदानेन लभ्येत मूल्यवद् वस्तु यच्च तत् ॥

(७३) कर्म तत्तु मनुष्यस्य वाक्यमेतद् यथार्थतः ।
कर्मकृते नरो यस्तु धिक् तं धिक् तं पुनः पुनः ॥

(७४) क्रीडति अवकाशश्च स्वेन सह तु कर्मणि ।
क्रीडति स्वतरङ्गेण सिन्धोश्च स्तब्धता यथा ॥

(७५) मृत्योश्च धर्म एको हि प्राणधर्म बहुस्तथा ।
देवता म्रियते चेत् तु धर्म एको भविष्यति ॥

( ७६ ) पश्यति ह्यन्धकारस्तु एकमेकाकृती-कृतम् ।
आलोको वीक्षते किन्तु नानादिग्भ्यस्तदेककम् ॥

( ७७ ) मन्दस्य निन्दने किन्तु नास्ति तव ह्यपूर्णता ।
श्रेयसो यच्च मूल्यं तन्न कथं परिशोध्यते ॥

( ७८ ) ज्योतिषो महिमा पूर्णः समग्रे तु नभस्तले ।
अन्विष्यति स्वसीमानं तृणं शिशिरमध्यतः ॥

( ७९ ) पौरपथस्य वृक्षस्य पर्णे विरहिणः कथम् ।
अरण्यस्य च वार्ता तु आनयति समीरणः ॥

( ८० ) ईक्षमाणा फलाशे त्वं शीते पुष्पवने स्थिता ।
फाल्गुन-रजन्यां पुष्पं स्फुटितं विफलं च्युतम् ॥

( ८१ ) अतिथयश्च ये मे वा निमिषकालमात्रतः ।
यातायातं च कुर्वन्ति पथि तेषां कृते ननु ॥

( ८२ ) जानामि हृदयेन त्वां जाने तथापि न प्रिये ।
अभिमानिनि, सर्वाणि वाक्यानि नोक्तवत्यसि ॥

( ८३ ) उड्डयने दुराशाऽस्ति पर्वतस्य च सर्वदा ।
मेघस्य ह्याकृतिं धृत्वा म्रियते च परिभ्रमन् ॥

( ८४ ) दूरतः प्राप्तवान् यञ्च सर्वदा मम पार्श्वतः ।
समीपात् स सदाऽऽयाति समीपतरमेव मे ॥

( ८५ ) तव वातायने तत्र पश्यामि दृष्टिपाततः ।
निर्वाणोन्मुखदीपः स किं वा वादयते ननु ।
निविडरात्रवीणायां निभृतायां, न वेद्म्यहम् ॥

( ८६ ) समुद्वेलः समुद्रोऽसौ अश्रीरक्रन्दनेन च ।
नीरवनभसश्चुम्बं याचमानास्ते निरन्तरम् ॥

(८७) 'शुक्र नक्षत्र हे' चन्द्रो वदति 'मद्वचः शृणु ।'
रजन्यां तु व्यतीतायां गमनकालतः कथम् ।
आगतं दर्शनं दातुं ज्योतिस्तामसमध्यतः ।
हा हंसस्त्वमकार्षीः वा दिग्भ्रातिं च कथं ततः ॥

(८८) दिवालोको यदा रात्रेरतले याति शोषताम् ।
तमसो ध्याननेत्रेण लक्षं ताराः प्रदीप्यति ॥

(८९) सागरस्य श्रुतौ धीरं स्फीतकाले तटस्थली ।
वक्ति-'तव तरङ्गस्तु यदेव वक्तुमिच्छति ।
त्वं तल्लिख'-समुद्रश्च फेनानां व्याकुलाक्षरैः ।
लिखति यति वा लेखां तति च मार्ष्टि तत्क्षणात् ॥
अतृप्तिभरतः सम्यग्रेखाः स चिरचञ्चलः ।

(९०) दिनं ददाति वीणां स्वां स्वर्णमयीं सदैव हि ।
नीरवतारकाहस्ते बन्धुं चिरदिनस्वरम् ॥

(९१) रात्रेस्तमसि शेषेण प्रातर्भक्तिविहङ्गमाः ।
'आलोक' इति भाषन्तः कूजन्ति हर्षविह्वलाः ॥

(९२) सन्ध्यामेघतरण्यां तु सुवर्णमुकुटं तव ।
प्लावय, गच्छ हे भानो, विमुच्य वेषभूषणाम् ।
नीरवं नमितुं मृत्युमहेश्वरस्य मन्दिरम् ॥

(९३) दिवसे कृतवान् यस्य अवहेलां-स एव हि ।
प्रदीपो मामकः किन्तु रात्रिकाले यथार्थतः ॥

(९४) आह वृन्ताच्च्युतं पुष्पं स्वमनसा त्विदं वचः ।
इतः परं वसन्तर्तुर्नास्ति च धरणीतले ॥

( ९५ ) वसन्त पवन त्वं किं व्यस्मरः पुष्पकेशरान् ।
भ्रमसि पुरमार्गे तद् धूलिमुत्थाप्य केवलम् ॥

( ९६ ) पुष्पाणां जागरो नीतो वायो दक्षिणतस्त्वया ।
वनं शून्यं भवेद्यावद् दक्षिणस्यां निवर्तस्यसि ॥

( ९७ ) अरण्य-मर्मरो ह्येष सिक्तः शिशिरतः कथम् ।
व्याकुलो कृतवांस्तावन् मानसमीदृशं मम ।
अनामिका-प्रियाकर्णे प्रातः स्वप्नकथा यथा ॥

( ९८ ) दिनान्तस्य ललाटं तु सुरक्तचन्दनेन च ।
लिप्त्वा न्यमिलयन् चक्षुर्निःशब्दक्रन्दनेन ताः ।
दिग्वध्वोः दुःखसन्तप्ताः ।

( ९९ ) मास्म भूत् ( कण्ठ ) मालायां स्थानं ते मूर्खयोगिनः ।
हे मम पुष्प जानीहि-आशीरेषा तवोपरि ।
नवीनेऽस्मिन् प्रभातेऽद्य ।



# इतस्ततः सङ्गृहीतानि

अयाचितोऽपि यो दद्यादश्वं, मुक्त्वा स्वपेटिकाम् ।
यच्छति पूरयन् पात्रं तस्मै लोकोऽति क्रुध्यति ॥
हस्ती कथं न दत्तो वा, बहु साधनया किल ।
मत् सकाशाद्धि लभ्येत कृष्णमार्जारशावकः ।
अतुलनीयदातैकः साश्रुनेत्रो नरो वदेत् ॥

बहुदिनरानि व्याप्याहं बहुदूरान्तरे तथा ।
बहुवारं बहून् देशान् प्रत्यावृत्तः परिभ्रमन् ।
पर्वतमालिकां दृष्ट्वा नीलं फेनिल-सागरम् ॥
नाऽपश्यं चक्षुरुन्मील्य आगत्य गृहतो बहिः ।
पादद्वयं यदृच्छातः पातयित्वेव केवलम् ।
एकस्मिन् धान्यशीर्षे तु शिशिरस्येकबिन्दुकम् ॥

## मातृवन्दना ( क )

त्वयैव प्रापिता मातर्जन्मभूः पुण्यरूपिणी ।
निखिलमातरं त्वत्तो हे मातर्ज्ञातवानहम् ॥
पादेषु युवयोरेव कायेन मनसा तथा ।
पूर्णं कर्तुं समर्थः स्यां जननि पूजनं तव ।

## मातृवन्दना ( ख )

जननि तव यद् दानं शेषतां न गमिष्यति ।
शिरासु शोणिते यच्च प्रवहति सदा मम ॥

सूर्यश्चन्द्रश्च ताराश्च त्वया मह्यं समर्पिताः ।
आशीर्वादो महानेष मदीयजीवने तव ॥

## परिहासविजल्पितम् ( क )

परिधाप्य वशिष्ठेन शटिकां स्त्रीजनोचिताम् ।
परिदधातु पुंवस्त्रं स्वयं सती अरुन्धती ।
रुष्टः सन् जमदग्निश्च गच्छतु पितुरालयम् ॥

## परिहासविजल्पितम् ( ख )

दैनिकं चैनिकीं चां त्वं पिब, मनसि रक्ष्यताम् ।
गात्रे यदि बलं लभ्यं तदैव सैनिको भवेत् ॥
आयान्ति देशमस्माकं यदि जापानवासिनः ।
दधि चिपिटकं तावद् गृह्णन्तु ( भोजनाय ते ) ।
आधुनिककवीनां च ग्रन्थान् द्विचतुरांस्तथा ॥

## द्वितीयमहासमरकालविषयिणी रचना

नागीगण श्चतुर्दिक्षु विषश्वासं जहाति च ।
शान्तेर्ललितवाणी तद् वैयर्थ-परिहासवत् ॥
श्राव्यते-गमनात् पूर्वम् आह्वयामि च तांस्ततः ।
ये सर्वे दानवैर्गेहे युद्धप्रस्तुतिसज्जिताः ॥
(पूर्वोक्त कविताया गद्येन भाषान्तरम्)
नागीगणश्चतुर्दिक्षु, पातयति विषाक्तं निःश्वासम्,
शान्तेर्ललितवाणी व्यर्थ-परिहास इव श्रावयते ।
गमनात् पूर्णं तत् सर्वांस्तानाह्वयामि
ये सर्वे गृहे प्रस्तुता भवन्ति दानवैः सह संग्रामाय ॥

## चार्ल्स एण्ड्र्यूज़म्

प्राणानां रसनिष्यन्दः प्रतीच्यास्तीर्थभूमितः ।
हे बन्धो भवताऽऽनीतो नमामस्त्वामतो वयम् ॥
प्राची ददाति कण्ठे ते स्वकीयां वरमालिकाम् ।
गृहाण कृपया बन्धो, त्वां नमस्कुर्महे वयम् ॥
पश्य प्रेम्णा त्वदीयेन द्वारमुद्घाटितञ्च नः ।
प्रवेशं कुरु हे बन्धो नमामस्त्वां कृताञ्जलि ॥
प्राप्तास्त्वां दयया यस्य दानरूपेण भाग्यतः ।
हे बन्धो चरणे तस्य श्रद्धया प्रणता वयम् ॥

## –अमरकथाशिल्पि-शरच्चन्द्रचट्टोपाध्यायस्य तिरोधाने-

यस्याऽमृतमयं स्थानं प्रेमासने प्रतिष्ठितम् ।
मृत्योः शासनदण्डेन क्षयस्तस्य क्षयो नहि ॥
देशस्य मृत्तिकाखण्डात् कालहस्तेन यो हृतः ।
सादरं स धृतः शश्वद् देशस्य हृदयेन हि ॥

## –परमहंसश्रीरामकृष्णदेवः–

बहूनां साधकानाञ्च साधनापद्धतिर्बहुः ।
आगत्य तव सा सर्वा ध्यानेन मिलिताऽभवत् ॥
लीलापथे त्वसीमस्य त्वदीयजीवनस्य च ।
जगत्यस्मन् नवं तीर्थं रूपमाधत्त सुन्दरम् ॥
देशानाञ्च विदेशानाम् आकृष्य प्रणतिस्तथा ।
आनीता-तत्र मे दत्तः प्रणामो ( भक्तिपूर्वकम् ) ॥

## –देशबन्धु-चित्तरञ्जन-दासस्य-स्मृति-सौधतः–

स्वदेशधूलये यस्यै शेषस्पर्शं भवानदात् ॥
अञ्चलं वक्षसस्तत्र स्तृणोति जन्मभूसत्व ।
शब्दहीनेन गानेन प्रस्तरस्य च वाद्यते ॥
देशस्य वन्दना-देहहीनाऽऽयातु स्मृतिस्तव ॥
अस्यां मृत्युविहीनायां प्रेमवेद्यां ( चिरन्तनी ) ।

## देशबन्धु-चितरञ्जनः

मृत्युहीनाश्च ये प्राणा आनीता ( जगति ) त्वया ।
प्रदाय मरणे तांस्त्वं ( हे महन् ) गतवानसि ॥

## –स्मरणीय आशुतोषमुखोपाध्यायः–

स्वाक्षरः स्थापितो नाम्नि सरस्वत्यास्त्वयैकदा ।
महिमा घोषितस्तस्या जीवने ते चिरन्तनः ॥
तन्नाम मन्दिरे त्वस्मिन् करोतु ते जयध्वनिम् ।
भवतु पूजनं तस्याः सह ते स्मृतिररक्षया ॥

## –आचार्यश्रीजगदीशचन्द्रवसुः–

( कथा ओ काहिनी नाम ग्रन्थस्य उत्सर्गपत्रतः )

सत्यं रत्नं त्वयां दत्तं प्रतिदानाय तस्य च ।
कथा च कल्पनामात्रम् उपायनीकृता मया ॥

## –उइलि-पियरसन्-बन्धुवरेषु–

(बलाकाग्रन्थस्य उत्सर्गतः)

विस्मरसि त्वमात्मानम् अनायासेन-तद् वयम् ।
शक्नुमो न हि विस्मर्तुं त्वां-त्वं सर्वजनस्य च ।
पश्चाद यद् गुप्तभावेन निजं रक्षन्नवस्थितः ॥
प्रकाशयितुमिच्छामो वयं त्वां हे सखे ततः ॥
क्षुद्रो नहि कदापि त्वं-स्वं.क्षुद्रमवमन्यसे ।
समादर्तुं च जानासि सर्वमनादृतं जनम् ॥

प्रीतिस्तव न किञ्चिच्च स्वस्य कृते तु याचते ।
तवामादृत्य स्वामात्मानं धन्यं च कुर्महे वयम् ॥

विज्ञानाचार्यश्रीयुक्तजगदीशचन्द्रवसुकरकमलेषु
(रवेयानामकग्रन्थस्य उत्सर्गतः)

बन्धो, इयं हि मे लज्जावती लता
प्राप्ता किमाकाशतः किमायाता वायुस्त्रोतसा ।
पत्राभ्यन्तरे विलीना सा हि प्राणकथा ।
सयत्नं पुनः पुनरन्वेषणेन त्वया सा बोद्धव्या,
ततो भङ्ग्या च तस्या नीरवा व्याकुलता-
मम लज्जावती लता
बन्धो, सन्ध्या आगता, स्वप्नः स पवन इव मां चुम्बति,
सपत्राः सर्वाः शाखा निद्रया ज़डिमानं गताः ।
पुष्पाणि सर्वाणि नीलनयनतो नीरवम् आकाशम्
उद्दिश्य तूष्णीं पुनः पुनः पश्यन्ति तारकानां दिशि ।
कस्मिन् ध्याने रता मम लज्जावती लता ।
बन्धो, आनय तव तडित् स्पर्शं देहि च हर्षम् ।
सकरुणं चक्षुरुन्मील्य अस्या मर्मणि
दृष्टिपातं कुरु ।
सर्वदिनस्य गन्धं गीतिं सर्वदिनस्य आलोकस्य स्मृतिम्
नीत्वा इयं हृदयभारेण धरायाम् अवनता
मम लज्जावती लता ॥
बन्धो, त्वं जानासि क्षुद्रं यत्-क्षुद्रं तन्नहि,
यत्र किञ्चित् सत्यमस्ति तत्र विश्वं तिष्ठति,
इयं यल्लज्जया निमीलिताक्षी, अस्या मध्यत एव
त्वं पठिष्यसि
जीवनमरणातपच्छायाझञ्झानां वार्ताम् ।
मम लज्जावती लता ॥

—कविता सञ्चयनम्—

## ऊर्ध्वं पञ्चाशतोवनम् ( पञ्चाशोर्ध्वे )

शास्त्रं वदति 'गन्तव्यम् ऊर्ध्वं पञ्चाशतो वनम् ।'
'वानप्रस्थं' वयं ब्रूमो 'यौवने सुष्ठु चर्यते ॥'
मञ्जुबकुल पुष्पाणि विकसन्ति वने कति ।
तथा ह्यविरतं गायन् म्रियत इव कोकिलः ।
लतानाञ्चैव पत्राणां सरसा गोपनीयता ।
अत्यन्तमन्तराले तु शाखासु चम्पकस्य च ॥
विकीर्णा चन्द्रिका शुभ्रा मिथ्या सृष्टिरियं किमु ?
पञ्चाशतोऽति निम्ने ये बुध्यन्ते सर्वमेव ते ॥
शास्त्रं वदति-'गन्तव्यम् ऊर्ध्वं पञ्चाशतो वनम् ।'
'वानप्रस्थं' वयं ब्रूमो, 'यौवने सुष्ठु चर्यते ॥'
गृहे कोलाहला नाना मुखे नानाविधाः कथाः ।
नास्ति विरलतालेशो दृष्टि निक्षेपणे कुतः ॥
समयश्च तथा स्वल्पः स तु गच्छति शेषताम् ।
गमनाऽगमनेनैव अरसिक जनस्य च ॥
स तिष्ठति गृहीत्वा च समयमानयन्त्रिकाम् ।
सभायां सज्जनैः सार्धं सत्कथाऽऽलोचते रतः ॥
अन्विष्यति वनं तस्माद् हतभाग्यो युवा जनः ।
गृहे मुक्तिर्न तस्याऽस्ति इति सम्यक् स बुध्यते ॥
शास्त्रं वदति 'गन्तव्यम् ऊर्ध्वं पञ्चाशतो वनम् ।'
'वानप्रस्थं' वयं ब्रूमो यौवने सुष्ठु चर्यते ॥
सर्वे नूतनकालस्य नूतना युवका वयम् ।
अनाचारे रताः शास्त्रं मनूक्तं परिवर्त्य च ॥

तत्स्थाने चालयिष्याम ईदृशं नूतनं विधिम् ॥
वृद्धस्तिष्ठतु गेहे च करोतु धनसञ्चयम् ।
पश्यतु विषयानर्थान् व्यवहारांश्च चालयेत् ॥
शुभं लग्नं निरीक्ष्यैवं फाल्गुने मासि गच्छतु ।
युवा वनस्य पन्थानमुद्दिश्य कठिनव्रतः ॥
जागरितो रजन्यां स तिष्ठतु हर्ष विह्वलः ॥
शास्त्रं वदति 'गन्तव्यम् ऊर्ध्वं पञ्चाशतो वनम् ।'
'वानप्रस्थं' वयं ब्रूमो 'यौवने सुष्ठु चर्यते ॥'

—चैतालीनामकग्रन्थतः—

## तपोवनम्

मनोनेत्रेण पश्यामि प्राचीनं भारतं यदा ।
पूर्वस्मात् पश्चिमाद् वापि दक्षिणोत्तरतस्तथा ॥
महच्छायं महारण्यं सर्वत्र परिदृश्यते ।
राजा राजाभिमानत्वं त्यक्त्वा लोकालये स्वयम् ।
अश्वान् बद्ध्वा रथं दूरे स्थापयित्वा शिरो नतम् ।
कुर्वन् गच्छति मन्त्रार्थम् आचार्यस्य समीपतः ॥
योगासीन ऋषिः पुण्यस्त्रोतस्विनीतटे शुभे ।
शिष्याश्च विरले वृक्षतले वेदानधीयते ॥
शान्ते प्रातःसमीरे तु ऋषिकन्याश्च संयताः ।
परुषैर्वल्कलैर्बद्ध्वा पेलवं नवयौवनम् ।
वृक्षाणामालावालेषु कुर्वन्ति जलसेचनम् ॥
आगत्य महिमज्योतिः शान्तभालेन संवहन् ।
मुकुटहीनमूर्धा सन् पक्वकेशसुशोभितः ।
प्रविशति वनद्वारं त्यक्तसिंहासनो नृपः ॥

## प्राचीनभारतम्

दिशि दिशि च दृश्यन्ते विदर्भश्च तथा ततः ।
विराटश्च अयोध्या च तथा काञ्चीपुरी शुभा ॥
उद्धतेन ललाटेन स्पर्धयन्ति रसातलम् ।
इङ्गितेन ह्यपाङ्गस्य अश्वानां ह्रेषया तथा ।
हस्तिनां वृंहणैश्चैव असीनां झञ्झया मुहुः ।
नूपुरझङ्कृतैस्तावद् बन्दिनां वन्दनास्तवैः ।
विजयस्य च हर्षेण रथघर्घरमन्द्रतः ।
पथः कल्लोलशब्देन कलरोलेन कर्मणाम् ।
ध्वनितं नित्यमेवाऽसीत् प्राचीनं भारतं तथा ॥
अत्र मत्तं तथा स्फीतं मूर्तं क्षत्रियगौरवम् ।
तत्र स्तब्धो महामौनो ब्राह्मण-महिमा तथा ॥

## सभ्यतां प्रति

प्रत्यर्पय ह्यरण्यं तद् गृहाण नगरीमिमाम् ।
गृहाण लौहलोष्ठानि काष्ठानि प्रस्तरांस्तथा ।
हे नवसभयते शून्ये सर्वग्रासिनि निष्ठुरे ॥
पुण्यराशिसमाच्छन्नं देहि नस्तत् तपोवनम् ॥
दिवसान् ग्लानिहीनांस्तान् सायन्तनञ्च तत् ।
वने गोचारणं तच्च तां शान्तां सामगीतिकाम् ।
नीवारधान्यमुष्टिं तां वल्कलवसनं च तत् ॥
नित्यमालोचनं पुण्यं तव पाषाणपञ्जरे ।
न याच्यते निरापत्या राजभोगाश्च नूतनाः ॥
याच्या स्वतन्त्रता सा च, तथा तु पक्षविस्तृतिः ।

वक्षसि च पुनर्लभ्या शक्तिः सा छिन्नबन्धना ॥
प्राणेषु स्प्रष्टुकामोऽस्मि अनन्तजगतस्तथा ।
( ज्ञानदीपञ्च शान्तञ्च ) हृदयस्पन्दनं महत् ।

## कालिदासः

अद्यत्वे कविमात्रं त्वं नाऽन्या परिचितिस्तव ।
राजसभा कुतो वा ते कुतो वा तद्गृहं तव ।
राजराजेश्वरः श्रेष्ठः कालिदास प्रभुस्तव ।
चिह्नं नास्ति कुतः कस्य-केवलमद्य मन्यते ।
चिरमासीद् दिनं व्याप्य चिरानन्दमयो भवान् ।
अलकानगरीवासी-सन्ध्याभ्रशिखरे यदा ।
ध्यानान्ते भगवांस्तत्र भूमानन्दादुमापतिः ।
अनृत्यत्-सजलो मेघो मृदङ्गगुरुगर्जनम् ।
तडिद् दत्तवती तालान् छन्दसा छन्दसा तदा ।
त्वमपि वन्दनागानं कृतवानसि तत्क्षणे ॥
अवसानं गते गीते कर्णादुन्मुच्य बर्हिकाम् ।
स्निग्धहासेन गौरी ते चूडायां पर्यधापयत् ॥



# दिल्ली-संस्कृत-अकादम्याः समाचाराः

[ अक्टूबरमासतः दिसम्बर ( २००० ) पर्यन्तम् ]

-डॉ० जीतरामभट्टः

## १०. दिल्ली संस्कृत अकादम्याः दिल्ली नगरनिगमस्य संयुक्ततत्त्वावधाने गान्धी जयन्त्युपलक्ष्ये संगोष्ठी-

२-१०-२००० दिनाङ्के लालकिलायाः सम्मुखस्थ प्राङ्गणे दिल्ल्याम्, संस्कृत अकादमी दिल्ली नगर निगमस्य संयुक्त तत्त्वावधाने गान्धी जयन्त्युपलक्ष्ये संगोष्ठीम् आयोजितवती । संगोष्ठ्याः उद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'गान्धीमहोदयाः भारतस्य स्वातन्त्र्यस्य युद्धाय जीवनं समर्पितवन्तः । तेषां पुस्तकं 'श्रीमद्भगवद्गीता' आसीत् । गान्धीमहोदयः श्रीमद्भगवद्गीतायाः उपयोगित्वं स्वीचकार ।' अवसरेऽस्मिन् विशिष्टातिथयः दिल्ली नगरनिगमस्य पूर्वोपमहापौराः श्रीमन्तः महेशचन्दशर्ममहोदयाः उक्तवन्तः यत् 'महात्मनः गान्धीमहोदयस्य जीवने राजनीत्याः प्रभावः न्यूनम् अध्यात्मस्य चाधिकमासीत् । अध्यात्मेनैव सः स्वातन्त्र्यसाधने सफलः अभवत् ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः आवोचन् यत् 'अकादमी गतवर्षेष्वपि गान्धीमहोदयानां जयन्त्युपलक्ष्ये परिचर्चाः आयोजितवती, अस्यां संगोष्ठ्यां परिचर्चायाः विषयः अस्ति 'वर्तमानसन्दर्भे श्रीमद्भगवद्गीतायाः महत्त्वम्' । यस्यां दिल्लीस्थाः संस्कृतस्य आचार्याः, उपाचार्याः, विद्वांसश्च सम्मिलिताः सन्ति ।' मुख्यवक्तारः कुरुक्षेत्र विश्वविद्यालयस्य संस्कृतविभागस्याचार्याः डॉ. सुरेन्द्रमोहनमिश्रमहोदयाः श्रीमद्भगवद्गीतायाः आर्थिकोपयोगितायाः विषये अवोचन् । डॉ. कमल आनन्दमहोदयाः, डॉ. धर्मामहोदयाः, डॉ. उर्वीमहोदयाः, डॉ. सावित्रीगुप्तमहोदयाः, डॉ. निर्मलत्रिखामहोदयाः, डॉ. मोहनचन्दमहोदयाश्च स्वकीयानां शोधलेखानां वाचनमकुर्वन् । समारोहस्याध्यक्षाः दिल्लीनगरनिगमस्य पार्षदाः

श्रीमन्तः धर्मप्रकाशशास्त्रिमहोदयाः प्रावोचन् यत् 'महात्मागान्धीमहोदयस्य चिन्तने स्वतन्त्रभारतस्य यादृशं स्वरूपमासीत्, तादृशं नास्ति साम्प्रतिकं भारतम् ।' भारतस्य विकासाय गान्धीमहोदयास्य चिन्तनस्यानुसरणमावश्यकम् ।' अवसरेऽस्मिन् श्रीमन्तः विजयशंकर चतुर्वेदिनः, डॉ. गणेशदत्तशर्माणः नैके विद्वांसश्चोपस्थिताः आसन् ।

## २१. ज्योतिषकर्मकाण्डकेन्द्रोद्घाट्नसमारोहः

झण्डेवालानस्थ-अकादम्याः सभास्थले ८-१०-२००० दिनाङ्के संस्कृत अकादमी ज्योतिषकर्मकाण्डकेन्द्रोद्घाटनस्य समारोहमायोजितवती । समारोहेऽस्मिन् मुख्यातिथयः दिल्लीसर्वकारस्य प्रधानगृहसचिवाः श्रीमन्तः सेवारामशर्ममहोदयाः प्रावोचन् यत् 'ज्योतिषशास्त्रं वैज्ञानिक सिद्धान्तेष्वाधारितं वर्तते । मानव स्वभावोऽस्ति यत् सः जिज्ञासायाः शान्त्यै शोधकार्यं करोति । ज्योतिषशास्त्रम् ऋषीणां शोधकार्यस्य प्राक्तनी उपलब्धिः विद्यते।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'ज्योतिष शास्त्रं कर्मकाण्डञ्च परस्परमन्योन्याश्रिते स्तः ज्योतिषशास्त्रं वैज्ञानिकम् अस्ति, तस्यैव व्यावहारिकं स्वरूपं कर्मकाण्डं विद्यते ।' समारोहस्याध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवदन् यत् 'ज्योतिषकर्मकाण्डयोः सम्यग्विवेचनं स्यात्, तर्हि जनाः एतयोः उपयोगित्वं स्वीकरिष्यन्ति।' अवसरेऽस्मिन् ज्योतिषकर्मकाण्डयोः जिज्ञासवः अनेकेः जनाः विद्वांसश्चोपस्थिताः आसन्।

## २२. संस्कृतप्रतिभापुरस्कारसमारोहः

राजनिवासमार्गस्थ शाहसभागारे १४-१०-२००० दिनाङ्के दिल्ली संस्कृत अकादमी संस्कृतप्रतिभापुरस्कार समारोहमायोजितवती । समारोहस्योदघाट्नं कुर्वन्तः दिल्लीसर्वकारस्य शिक्षानिदेशकाः श्रीमन्तः सुरेशचन्द्रपौद्दारमहोदयाः प्रावोचन् यत् 'संस्कृत साहित्ये न केवलं मानवीयसंस्कृते. ज्ञानं विद्यते, अपितु विज्ञानविषयाणामपि ज्ञानं वर्तते ।' साम्प्रतं संस्कृत भाषायाः प्रसारस्यावश्यकता विद्यते ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् 'अकादमी प्रतिवर्षं प्रतिभावतां छात्राणाम् उत्साहवर्धनं करोति, वर्षेऽस्मिन्

द्विसहस्रसंख्यकाः छात्राः प्रतिभापुरस्कारेण पुरस्करणीयाः सन्ति समारोहस्याध्यक्षाः दिल्लीविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः डॉ. अवनीन्द्रकुमारमहोदयाः अवदन् यत् 'भाषायाः प्रसाराय छात्राणां महद्योगदानं भवति । संस्कृत भाषायाः प्रसारेऽपि संस्कृत छात्राणां भूमिका विद्यते ।' अवसरेऽस्मिन् अतिरिक्त शिक्षानिदेशकाः श्रीमन्तः एन.एस. टोलियामहोदयाः अवदन् यत् 'छात्राणाम् उत्साहवर्द्धनेन संस्कृतभाषायाः प्रसारः स्वत एव भवति ।' कार्यक्रमेऽस्मिन् श्रीमन्तः कृष्णदत्तशास्त्रिणः, श्रीमन्तः श्रीधरप्रसाद बलूनी, श्रीमन्तः ओम्प्रकाशठाकुराः नैके च विद्वांसः उपस्थिताः आसन् ।

## २३. दिल्लीशिक्षानिदेशालयस्य पश्चिम-बी मण्डलस्य षड्दिवसीयसंस्कृत-प्रतियोगितानाम् उद्घाटन-समारोहः

१७-१०-२००० दिनाङ्के संस्कृत अकादमी दिल्ली शिक्षानिदेशालयस्य पश्चिम बी मण्डलस्य षड्दिवसीय संस्कृतप्रतियोगितानाम् उद्घाटनसमारोहं बी-३ पश्चिमविहारस्थ राजकीय-सर्वोदय कन्या विद्यालये आयोजितवती । समारोहस्योद्घाटने मुख्यातिथयः दिल्लीसर्वकारस्य शिक्षायाः पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवोचन् यत् 'दिल्ली संस्कृत अकादमी प्रतिवर्षं विविधानां कार्यक्रमाणामायोजनं करोति येषु नैके कार्यक्रमाः छात्राणां कृते भवन्ति । प्रतियोगिताभिः संस्कृतस्य कृते छात्राः समुत्सुकाः भवन्ति ।' समारोहस्याध्यक्षाः दिल्ली शिक्षानिदेशालयस्य पश्चिम बी मण्डलस्योपनिदेशकाः डॉ. आर.के. शर्ममहोदयाः अवोचन् यत् 'संस्कृत प्रतियोगिताभिः दिल्ल्यां संस्कृतमयं वातावरणं सञ्जातम् । अकादम्याः प्रयासोऽयं प्रशंसनीयः ।' लक्ष्मीबाई महाविद्यालयस्य संस्कृतविभागस्योपाचार्याः डॉ. धर्मामहोदयाः अवोचन् यत् 'संस्कृते सर्वविधं ज्ञानं विद्यते, संस्कृतभाषायाः प्रसारेण संस्कृतेः प्रसारः भवति' अवसरेऽस्मिन् शिक्षाधिकारिणः श्रीमत्यः एस. अंगूरालामहोदयाः, श्रीमत्यः उषालाम्बा महोदयाः, श्रीमन्तः एल.आर. पाठक महोदयाश्चापि उपस्थिताः आसन् । तस्य विद्यालयस्य प्रधानाचार्याः श्रीमत्यः निरुपमागुप्तामहोदयाः पश्चिम बी मण्डलस्य संयोजिका आसीत् ।

## २४. दिल्ली शिक्षानिदेशालयस्य पूर्वमण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानाम् उद्घाटन समारोहः

दिल्ल्याम् । शंकरनगरस्थ सर्वोदय कन्याविद्यालये १७-१०-२००० दिनाङ्के दिल्ली संस्कृत अकादमी पूर्वमण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटनसमारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली विधानसभायाः सदस्याः श्रीमन्तः अरविन्दसिंहलवलीमहोदयाः प्रावोचन् यत् 'संस्कृतेः प्रसाराय संस्कृतभाषायाः प्रचारः आवश्यकः । दिल्ली संस्कृत अकादमी प्रतिवर्षं विद्वद्भ्यः, शिक्षकेभ्यः छात्रेभ्यश्च विभिन्नानां कार्यक्रमाणामायोजनं करोति । प्रतियोगिताभिः छात्रेषु संस्कृतस्य कृते रुचिरुत्पद्यते।' दिल्ली शिक्षानिदेशालयस्य पूर्वमण्डलस्योपनिदेशकाः श्रीमत्यः रेखाजैन महोदयाः उक्तवत्यः यत् 'दिल्ली संस्कृत अकादम्याः प्रयासैः छात्राः संस्कृतं पठनाय उद्यताः भवन्ति ।' सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् 'संस्कृते सर्वविधं ज्ञानं विद्यते, विविधाभिः प्रतियोगिताभिः छात्राः संस्कृतस्य ग्रन्थानामध्ययनाय समुत्सुकाः भवन्ति ।' अवसरेऽस्मिन् लाजपतराय स्नातकोत्तर महाविद्यालयस्य पूर्वप्राचार्याः डॉ. गणेशदत्तशर्ममहोदयाः, पूर्वप्राचार्याः श्रीमन्तः जयन्तीप्रसादमिश्रमहोदयाः, श्रीमन्तः विजयशंकर चतुर्वेदि महोदयाश्चोपस्थिताः आसन् । पूर्वमण्डले षड्दिवसीय संस्कृत-प्रतियोगितानां संयोजिका श्रीमती डॉ० सरोजसेनः आसीत् ।

## २५. दिल्ली शिक्षानिदेशालयस्य नवदिल्लीमण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानाम् उद्घाटनसमारोहः

जोरबागस्थ सर्वोदय कन्याविद्यालये १८-१०-२००० दिनाङ्के दिल्ली संस्कृत अकादमी दिल्ली शिक्षानिदेशालयस्य नवदिल्लीमण्डलस्य षड्दिवसीय-संस्कृत प्रतियोगितानाम् उद्घाटनसमारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्लीविधानसभायाः सदस्याः श्रीमन्तः रामभजमहोदयाः प्रावोचन् यत् 'संस्कृतभाषया एव संसारे भारतस्य प्रसिद्धिः वर्तते।

संस्कृतभाषायां ज्ञानविज्ञानयोः मौलिकं वाङ्मयं वर्तते ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः प्रोक्तवन्तः यत् 'अकादमी प्रतिवर्षं विद्यालयीय छात्राणां कृते संस्कृत श्लोक-संगीत प्रतियोगिता, श्लोकोच्चारण, संस्कृत-काव्यालि-संस्कृतभाषण-वाद-विवाद-एकलश्लोकसंगीतप्रतियोगितानामायोजनं करोति, वर्षेऽस्मिन् एतासु प्रतियोगितासु छात्राः सोत्साहेन सम्मिलिताः सन्ति', विशिष्टातिथयः श्रीमन्तः सुभाषविद्यालंकारमहोदयाः उक्तवन्तः यत् 'प्रतियोगिताभिः छात्राणां बौद्धिकः विकासो भवति, साम्प्रतिके प्रतियोगिताप्रधाने युगे परमावश्यकं विद्यते यत् छात्राणां योग्यतायै प्रतियोगितानामायोजनं बारं बारं स्यात् ।' रा. शै.अ. प्रशिक्षणपरिषदः संस्कृतविभागस्याध्यक्षाः डॉ. कमलाकान्तमिश्रमहोदयाः, प्रसिद्धाः ज्योतिर्विदः श्रीमन्तः महिमानन्दद्विवेदिमहोदयाः, दिल्लीशिक्षानिदेशालयस्य शिक्षाधिकारिणः श्रीमन्तः वी.पी. खण्डूरीमहोदयाः, श्रीमत्यः सतेन्द्रकौरमहोदयाश्चापि उपस्थिताः आसन् । मण्डलस्यास्य संयोजिका जोरबागस्थ सर्वोदय कन्या विद्यालयस्य प्राचार्या श्रीमती पुष्पा गुलियानी आसीत् ।

## २६. दिल्ली शिक्षानिदेशालयस्य पश्चिम ए मण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानाम् उद्घाटन समारोहः

१८-१०-२००० दिनाङ्के रमेशनगरस्थ राजकीय सर्वोदय कन्या विद्यालये दिल्ली शिक्षानिदेशालयस्य पश्चिम ए-मण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटनसमारोहे मुख्यातिथयः दिल्ली विधानसभायाः सदस्याः श्रीमन्तः अविनाशसाहनीमहोदयाः प्रावोचन् यत् 'संस्कृते सर्वविधं ज्ञानं विद्यते, संस्कृत-ग्रन्थेषु वर्णितानां विषयाणां प्रचारस्यावश्यकता वर्तते, दिल्ली संस्कृत अकादम्या आयोजितैः कार्यक्रमैः दिल्ल्यां संस्कृतच्छात्राणां वृद्धिः सञ्जाता ।' अवसरेऽस्मिन्नुद्घाटनकर्तारः दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवोचन् यत् 'संस्कृतभाषा पूर्णतः वैज्ञानिकी भाषा विद्यते । अत एव साम्प्रतमपि संस्कृतस्य स्वरूपं मौलिकं वर्तते ।' दिल्ली शिक्षानिदेशालयस्य पश्चिम-ए

मण्डलस्योपनिदेशकाः श्रीमन्तः प्रकाशवीरमहोदयाः प्रावोचन् यत् 'संस्कृतं पठत्सु छात्रेषु सद्गुणानां विकासः स्वत एव भवति । संस्कृत अकादमी स्वकीयैः कार्यक्रमैः संस्कृतस्य प्रसारे प्रवृत्ता अस्ति ।' अवसरेऽस्मिन् दिल्ली शिक्षानिदेशालयस्य शिक्षाधिकारिणः श्रीमन्तः आर. पी. राम महोदयाः, श्रीमत्यः सविताकालरा महोदयाः विशिष्टातिथयः डॉ. रमाकान्तशुक्लमहोदयाः, श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः, रमेशनगरस्थ राजकीय सर्वोदय कन्या विद्यालयस्य प्रधानाचार्याः श्रीमत्यः निर्मलगुप्तमहोदयाश्च उपस्थिताः आसन् । मण्डलेऽस्मिन् संयोजिका रमेशनगरस्थ राजकीय सर्वोदय कन्या विद्यालयस्योपप्राचार्या श्रीमती उषा सिडाना आसीत् ।

## २७. दिल्ली शिक्षानिदेशालयस्य दक्षिण-पश्चिम मण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानाम् उद्घाटन समारोहः

दिल्ल्याम् । से. १२, रामकृष्णपुरस्थ होसेमार्ती सर्वोदय विद्यालये २०-१०-२००० दिनाङ्के दिल्ली संस्कृत अकादम्या दिल्लीशिक्षानिदेशालयस्य दक्षिण-पश्चिममण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटन समारोहः आयोजितः । समारोहस्य मुख्यातिथयः दिल्लीसर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृतभाषायाः प्रभावेण जनः सुसंस्कृतो भवति, यतः संस्कृते परिमार्जितं ज्ञानं विद्यते । संस्कृतवाङ्मयं बिना ज्ञान-विज्ञानयोः परिकल्पना नैव भवितुं शक्नोति ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् 'संस्कृतभाषायाः प्रसारेण विद्यार्थिषु संस्काराणां स्थापना भवति; साम्प्रतं भौतिकेऽस्मिन् वातावरणे संस्काराणां संस्कृतेश्च शिक्षायाः आवश्यकता विद्यते । दिल्ली संस्कृत अकादम्याः कार्यक्रमैः संस्काराणां संस्कृतेश्च प्रसारः भवति ।' अवसरेऽस्मिन् रा.शै.अ.प्र. परिषदः संस्कृतविभागास्याध्यक्षाः डॉ. कमलाकान्तमिश्र महोदयाः अपि उपस्थिताः आसन् । समारोहस्याध्यक्षाः दिल्ली शिक्षानिदेशालयस्य दक्षिण-पश्चिम मण्डलस्योपनिदेशकाः श्रीमन्तः बी.सी.बोसमहोदयाः अवोचन् यत्

'संस्कृतभाषया एव भारतस्य संस्कृतेः रक्षा भवितुं शक्नोति ।' अवसरेऽस्मिन् दिल्ली शिक्षानिदेशालयस्य शिक्षाधिकारिणः श्रीमत्यः मायाविश्वासमहोदयाः, श्रीमत्यः उषाअरोड़ामहोदयाः, श्रीमत्यः राजकुमारीप्रभृतयः अधिकारिणः उपस्थिताः आसन् । दक्षिण-पश्चिम मण्डलेऽकादम्याः प्रतियोगितानां संयोजकाः श्रीमन्तः वी.बी. भटनागरमहोदयाः आसन् ।

## २८. सामान्य महाविद्यालयीय/संस्कृतमहाविद्यालयीय/संस्कृतविद्यालयीय-संस्कृत वादविवाद प्रतियोगिता

दिल्ल्याम् । अकादम्याः संगोष्ठीकक्षे २१-१०-२००० दिनाङ्के दिल्ली संस्कृत अकादमी सामान्य महाविद्यालयीय/संस्कृत महाविद्यालयीय/ संस्कृत विद्यालयीय-संस्कृत वादविवाद-प्रतियोगितायाः आयोजनं कृतवती । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवोचन् यद् 'ज्ञानविज्ञानयोः सर्वेषां विषयाणां चिन्तनं संस्कृतभाषायामेवाभवत् । वादविवादप्रतियोगितायाः सर्वप्रथमं चिन्तनं संस्कृतभाषायामेवाभवत् । शास्त्रार्थपरम्परा एव कालक्रमेण वादविवाद प्रतियोगिता सञ्जाता ।' प्रतियोगितायामस्यां दिल्लीस्थानां सामान्यमहाविद्यालयानां संस्कृतविद्यालयानां पञ्चाशत् छात्राः सम्मिलिताः अभवन् । अवसरेऽस्मिन् अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः उक्तवन्तः यत् 'प्रतियोगिताभिः छात्राणां योग्यतायाः विकासः भवति । अकादमी प्रतिवर्षं छात्राणां कृते विविधानां प्रतियोगितानामायोजनं करोति । समारोहस्याध्यक्षाः राष्ट्रिय संस्कृतसंस्थानस्य पूर्वनिदेशकाः डॉ. के.के. मिश्र महोदयाः प्रावोचन् यत् 'संस्कृत साहित्ये सर्वविधं ज्ञानं विद्यते, मानवसंस्कृतेः कल्याणाय संस्कृतसाहित्यस्य प्रसारः आवश्यकः विद्यते ।' प्रतियोगितायामस्यां स्नातकोत्तरे प्रथम पुरस्कारः विश्वनाथ संस्कृतमहाविद्यालयेन मध्यमास्तरे च प्रथमपुरस्कारः शारदा देवी संस्कृतविद्यापीठेन प्राप्तः। अवसरेऽस्मिन् डॉ. आर.के. शर्मा, डॉ. रमाकान्तशुक्लः, प्रो. उमेशचन्द्रपाण्डेयः, श्रीमती वेदवतीधींगड़ा च उपस्थिताः आसन् ।

## २९. योग-आयुर्वेदाध्ययनकेन्द्रोद्घाटनसमारोहः

दिल्ल्याम् । २९-१०-२००० दिनाङ्के झण्डेवालानस्थ अकादम्याः सभास्थले दिल्ली संस्कृत अकादमी जिज्ञासूनां कृते योग-आयुर्वेदाध्ययनकेन्द्रस्योद्घाटन-समारोहमायोजितवती। समारोहस्योद्घाटनं कुर्वन्तः अखिल भारतीय-आयुर्वेद-महासम्मेलनन्यासस्याध्यक्षाः वैद्यवृहस्पति देवत्रिगुणामहोदयाः अवोचन् यत् 'आयुर्वेद चिकित्सा पद्धतौ सर्वेषां रोगाणां चिकित्सायाः वर्णनं विद्यते । संस्कृत शास्त्रेषु आधुनिक चिकित्साविज्ञानस्य सर्वे सिद्धान्ताः सन्ति । विश्वस्मिन् भारतस्य विश्वगुरुत्वे योग-आयुर्वेदयोः महत्वपूर्णं स्थानं वर्तते ।' दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः अवोचन् यत् 'योग-आयुर्वेदयोः परस्परम् अन्योऽन्याश्रितः सम्बन्धः विद्यते ।' दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवदन् यत् 'आयुर्वेद शिक्षापद्धतौ आहारविहारयोः अत्यधिकं महत्त्वं वर्तते । तत्र लिखितं वर्तते यत् 'पथ्ये सति गदार्तस्य किमौषधनिषेवणे ।' अवसरेऽस्मिन् शताधिकाः जिज्ञासवः नैके विद्वांसश्चोपस्थिताः आसन्। अस्य केन्द्रस्य प्रशिक्षकाः डॉ. चन्द्रहासशर्माणः अपि समारोहेऽस्मिन्नुपस्थिताः आसन् ।

## ३०. दिल्ली शिक्षानिदेशालयस्योत्तरपूर्वमण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानामुद्घाटन-समारोहः

दिल्ल्याम् । १-११-२००० दिनाङ्के शाहदरास्थ राजकीय उ.मा. बाल विद्यालये संस्कृत अकादम्या दिल्लीशिक्षानिदेशालयस्योत्तरपूर्वमण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानामुद्घाटन समारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्लीसर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृतभाषायां छात्राणां योग्यताविकासाय सर्वे विषयाः सन्ति, संस्कृतस्याध्ययनेन छात्राणां सर्वाङ्गीणो विकासः भवति ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् 'अकादम्याः कार्यक्रमैः दिल्ल्यां संस्कृतस्य छात्राणां संख्यायां वृद्धिः सञ्जाता, अन्य भारतीयभाषाणामपेक्षा

संस्कृतं पठितुं छात्राः समुत्सुकाः सन्ति ।' अवसरेऽस्मिन् लाजपतराय-स्नातकोत्तर महाविद्यालयस्य पूर्वप्राचार्याः डॉ. गणेशदत्तशर्ममहोदयाः, भारतसर्वकारस्य पूर्वसहायकसंस्कृतपरामर्शकाः डॉ. आ.के. शर्ममहोदयाः अन्ये चापि विद्वांसः विदुष्यस्तत्रोपस्थिताः आसन् । दिल्ली शिक्षानिदेशालयस्य शिक्षाधिकारिणः श्रीमन्तः महेन्द्रपालसिंहडांगीमहोदयाः अवदन् यत् 'संस्कृतस्याध्ययनेन छात्राणां चरित्रनिर्माणं भवति । संस्कृतस्य छात्राः सुसंस्कृताः भवन्ति ।' मण्डलेऽस्मिन् प्रतियोगितानां संयोजकाः जी.टी. रोड शाहदरास्थ राजकीय उ.मा. बाल विद्यालयस्य प्रधानाचार्याः श्रीमन्तः ओमदत्तमहोदयाः आसन् ।

## ३१. दिल्ली शिक्षानिदेशालयस्य दक्षिणमण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानामुद्घाट्न-समारोहः

दिल्ल्याम् । २-११-२००० दिनाङ्के सी ब्लाक डिफेन्स कालोनीस्थ सर्वोदय कन्या विद्यालये शिक्षानिदेशालयस्य दक्षिणमण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटन-समारोहः आयोजितः । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृतभाषायाः प्रभावेण अन्यासां भाषाणां साहित्यमपि समृद्धं जातं, संस्कृतभाषा सर्वासां भारतीयभाषाणां जननी विद्यते, दिल्ली संस्कृत अकादमी संस्कृत भाषायाः प्रचाराय विविधानां कार्यक्रमाणामायोजनं करोति ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् 'प्रतियोगिताभिः छात्रेषु संस्कृतस्याध्ययनाय जिज्ञासा समुत्पद्यते । अकादमी विद्यालयानां महाविद्यालयानां संस्कृतमहाविद्यालयानाञ्च कृते संस्कृतस्य विविधाः प्रतियोगिताः समायोजयति ।' समारोहेऽस्मिन् रा.शै.अ.प्र. परिषदः संस्कृतविभागस्याध्यक्षाः डॉ. कमलाकान्तमिश्रमहोदयाः श्री लाल ब.शा.रा.सं. विद्यापीठस्य पूर्वकुलपतयः डॉ. श्रीधरवसिष्ठमहोदयाः, गुरुकुलकांगड़ी विश्वविद्यालयस्य पूर्वकुलपतयः श्रीमन्तः सुभाषविद्यालंकारमहोदयाः दिल्ली शिक्षा

निदेशालयस्योपशिक्षाधिकारिणः श्रीमन्तः एस.के. शर्म महोदयाश्चोपस्थिताः आसन् । अस्मिन् मण्डले दिल्ली संस्कृत अकादम्याः प्रतियोगितानामायोजनं सी–ब्लाक डिफेन्सकालीनस्थ सर्वोदय कन्या विद्यालयस्य प्रधानाचार्या डॉ. (श्रीमती) एस. वसिष्ठ महोदया कृतवती ।

## ३२. दिल्ली शिक्षानिदेशालयस्योत्तरमण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानामुद्घाटन-समारोहः

दिल्ल्याम् । ३-११-२००० दिनाङ्के लांसर्स रोड–तिमारपुरस्थ सर्वोदय विद्यालये दिल्ली संस्कृत अकादमी दिल्लीशिक्षानिदेशालंयस्योत्तरमण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटनसमारोहमायोजितवती । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली विधानसभायाः सदस्याः श्रीमन्तः जगदीश आनन्दमहोदयाः प्रावोचन् यत् 'जीवने संस्काराणामत्यधिकं महत्त्वं विद्यते ।' संस्कृतभाषा छात्रेभ्यः संस्काराणां शिक्षां ददाति।' दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवोचन् यत् 'शिक्षायाः सर्वेषु उद्देश्येषु प्रामुख्यं भजते संस्काराणां शिक्षा, संस्कृतं विना संस्काराणां कल्पना नैव भवितुं शक्नोति ।' दिल्ली शिक्षानिदेशालयस्योपनिदेशकाः श्रीमन्तः वी.के. शर्ममहोदयाः अवोचन् यत् 'दिल्ली संस्कृत अकादम्याः प्रयासैः दिल्ल्यां संस्कृतस्य छात्राणां संख्यायां वृद्धिः सञ्जाता ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'संस्कृतस्य ग्रन्थेषु सर्वे विषयाः सन्ति, संस्कृतग्रन्थानां शोधस्यावश्यकता विद्यते । छात्राः जिज्ञासवः भवन्ति । संस्कृतशास्त्राणां विषये छात्राणां मार्गदर्शनं करणीयम् ।' मण्डलेऽस्मिन् दिल्ली संस्कृत अकादम्याः संस्कृतप्रतियोगितानां संयोजिकाः लांसर्स रोड तिमारपुरस्थ–सर्वोदय विद्यालयस्य प्रधानाचार्याः श्रीमत्यः आभाजोशीमहोदयाः आसन् ।

## ३३. दिल्ली शिक्षानिदेशालयस्योत्तर-पश्चिम-ब मण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानामुद्घाटन-समारोहः

दिल्ल्याम् । से. ७ रोहिणीस्थ राजकीय सर्वोदय सहशिक्षा उ.मा. विद्यालये ४-११-२००० दिनाङ्के दिल्ली संस्कृत अकादम्या दिल्लीशिक्षानिदेशालयस्योत्तर-पश्चिम-ब मण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटन समारोहः आयोजितः । अवसरेऽस्मिन् मुख्यातिथयः दिल्ली विधानसभायाः सदस्याः श्रीमन्तः जयभगवानअग्रवालमहोदयाः प्रावोचन् यत् 'संस्कृतभाषया छात्रेषु संस्काराणां संस्थापना भवति, सदाचारस्य शिक्षायाः कृते संस्कृतभाषायाः अध्ययनमावश्यकं विद्यते ।' संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवोचन् यत् 'संस्कृतभाषा मानवसंस्कृतेः आधारभूता विद्यते । भाषायामस्यां सर्वासां भाषाणां स्रोतांसि सन्ति ।' दिल्ली संस्कृत अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् 'दिल्ल्यां संस्कृतभाषायाः प्रसाराय दिल्ली संस्कृत अकादम्या विविधैः कार्यक्रमैः श्रमः विधीयते । छात्राः संस्कृतस्य शिक्षायै समुत्सुकाः सन्ति ।' दिल्ली शिक्षानिदेशालयस्योत्तर पश्चिम-ब मण्डलस्योपनिदेशकाः श्रीमन्तः सैय्यदअथरअलीमहोदयाः, शिक्षानिदेशालयस्य शिक्षाधिकारिणः श्रीमन्तः कुलदीपरायमहोदयाः, श्रीमत्यः सुधागुप्तामहोदयाः, श्रीमन्तः रामसिंहमहोदयाः, श्रीमत्यः गार्गी मित्तलमहोदयाः, श्रीमत्यः इकबालकौर महोदयाश्चावसरेऽस्मिन्नुपस्थिताः आसन् । मण्डलेऽस्मिन्नकादम्याः षड्दिवसीय संस्कृत प्रतियोगितानां संयोजकः से. ७ रोहिणीस्थ राजकीय सर्वोदय सहशिक्षा उ.मा. विद्यालयस्य प्राचार्यः डॉ. बलदेवसिंह महोदयः आसीत् ।

## ३४. अक्षरश्लोक प्रतियोगिता

झण्डेवालानस्थ-अकादम्याः संगोष्ठीकक्षे ५-११-२००० दिनाङ्के दिल्ली संस्कृत अकादमी अक्षरश्लोक प्रतियोगितायाः आयोजनम् अकरोत् । प्रतियोगितायां मुख्यातिथयः श्रीलालबहादुर शास्त्री संस्कृत विद्यापीठस्य पूर्वकुलपतयः प्रो. श्रीधरवसिष्ठमहोदयाः आसन्।

तेऽवोचन् यत् 'संस्कृतवाङ्मयाधारितानां विषयाणां शिक्षणं परमावश्यकं विद्यते ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'दिल्ली संस्कृत अकादमी शिक्षकाणां छात्राणां विदुषां विदुषीनाञ्च कृते विभिन्नानां कार्यक्रमाणामायोजनं विदधाति । कार्यक्रमस्याध्यक्षाः लाजपतराय महाविद्यालयस्य पूर्वप्राचार्याः डॉ. गणेशदत्तशर्ममहोदयाः प्रावोचन् यत् 'संस्कृतवाङ्मये योग्यताविकासाय विभिन्नाः विधाः सन्ति, प्रत्येकं विधायाः उद्देश्यमपि भिन्नं वर्तते । अक्षरश्लोक प्रतियोगितया छात्रेषु श्लोककण्ठस्थीकरणस्याभिरुचेः विकासो भवति ।' राष्ट्रिय संस्कृत संस्थानस्य पूर्वनिदेशकाः डॉ. कमलाकान्तमिश्रमहोदयाः प्रावोचन् यत् ' संस्कृतभाषायां सर्वविधं ज्ञानं विद्यते । येन छात्रेषु संस्काराणां संस्थापनमपि भवति ।' प्रतियोगितायामस्यां शारदादेवीविद्यापीठेन प्रथमं स्थानं, रामदल संस्कृत महाविद्यालयेन द्वितीयं स्थानं, नरेलास्थ आर्यकन्या गुरुकुलेन तृतीयं, हनुमान् संस्कृत महाविद्यालयेन च चतुर्थं स्थानमधिगतम् । अवसरेऽस्मिन् डॉ. नोदनाथमिश्रमहोदयाः, श्रीमत्यः वेदवतीधींगड़ा महोदयाः, श्रीमत्यः शशिप्रभागोयलमहोदयाः, डॉ. रमाकान्तशुक्लमहोदयाश्चोपस्थिताः आसन्।

## ३५. दिल्ली शिक्षानिदेशालयस्य मध्यमण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानाम् उद्घाटन-समारोहः

६-११-२००० दिनाङ्के दिल्लीशिक्षानिदेशालयस्य मध्यमण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानाम् उद्घाटनसमारोहमायोजयन्तः संस्कृत अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् ' संस्कृत अकादमी प्रतिवर्षं छात्राणां कृते विविधानां प्रतियोगितानामायोजनं करोति । छात्राः देशस्य भाविनः नागरिकाः सन्ति ।' अवसरेऽस्मिन् मुख्यातिथयः दिल्लीविधानसभायाः सदस्याः श्रीमत्यः दर्शनारामकुमारमहोदयाः अवोचन् यत् 'दिल्ली संस्कृत अकादमी दिल्ल्यां संस्कृतस्य प्रचारायानेकासां प्रतियोगितानामायोजनं विदधाति । येन दिल्ल्यां छात्राः संस्कृतं पठितुं प्रोत्साहिताः सन्ति ।' अवसरेऽस्मिन् दिल्लीसर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवदन् यत्

'संस्कृतभाषया छात्राणां ज्ञानवृद्ध्या सहैव संस्कारवृद्धिरपि भवति ।' षड्दिवसीय संस्कृत प्रतियोगितानामस्मिन् मण्डले दिल्ली संस्कृत अकादम्या मनोनीता संयोजिका सुश्री अरुणाजोशीमहोदया अवोचन् यत् 'संस्कृतभाषा अतीव सरला मधुरा च वर्तते । विद्यालयेषु यदा संस्कृत प्रतियोगितानामभ्यासो भवति, तदा विद्यालयीयाः अन्येऽपि छात्राः संस्कृतं पठनाय प्रोत्साहिताः भवन्ति ।' अवसरेऽस्मिन् दिल्ली शिक्षा निदेशालयस्य शिक्षाधिकारिणः, संस्कृतस्य विद्वांसः, संस्कृतानुरागिणश्चोपस्थिताः आसन् ।

## ३६. दिल्ली शिक्षानिदेशालयस्योत्तरपश्चिम-ए मण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानामुद्घाटन-समारोहः

विजयनगरस्थ राजकीय सर्वोदय कन्या विद्यालये ६-११-२००० दिनाङ्के दिल्ली संस्कृत अकादमी दिल्लीशिक्षानिदेशालयस्योत्तर पश्चिम-ए मण्डलस्य षड्दिवसीय संस्कृत प्रतियोगितानामुद्घाटनसमारोहमायोजितवती, समारोहस्योद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवोचन् यत् 'संस्कृते सर्वविधं साहित्यं विद्यते । संस्कृतस्य पठनेन छात्राः संस्कारिताः भवन्ति । पाश्चात्यदेशेषु संस्कृतस्य ज्ञान विज्ञानयोः शोधकार्यं प्रचलति ।' अवसरेऽस्मिन् दिल्लीशिक्षानिदेशालयस्योत्तर पश्चिम-ए मण्डलस्योपनिदेशकाः श्रीमन्तः बी.श्रीवास्तवमहोदयाः दिल्ली शिक्षानिदेशालयस्य शिक्षाधिकारिणः श्रीमन्तः एस.पी. सिंहमहोदयाः विविधानां विद्यालयानां प्रधानाचार्याः, संस्कृत-शिक्षकाः विद्वांसः संस्कृतानुरागिश्चोपस्थिताः आसन् । उत्तर पश्चिम ए मण्डलस्य षड्दिवसीय-संस्कृत-प्रतियोगितानां संयोजिका विजयनगरस्थ राजकीय सर्वोदय कन्या विद्यालयस्य प्रधानाचार्या डॉ. श्रीमती यू.एन. चौधरी महोदया आसीत् । मण्डलेऽस्मिन् प्रतिदिनं प्रायशः पञ्चविंशतिविद्यालयानां छात्राः प्रतियोगितासु सम्मिलिताः अभवन् ।

## ३७. दिल्ली संस्कृत-अकादम्याः अर्थसाहाय्येन प्रकाशितानां-ग्रन्थानां लोकार्पण समारोहः

पुरानासचिवालयस्थ दिल्ली सर्वकारस्य शिक्षायाः सचिवानां कक्षे ९-११-२००० दिनाङ्के दिल्ली संस्कृत अकादम्याः अर्थसाहाय्येन प्रकाशितानां ग्रन्थानां लोकार्पण समारोहः आयोजितः । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य शिक्षायाः संयुक्तसचिवाः श्रीमन्तः डी.आर. टम्टामहोदयाः प्रावोचन् यत् 'संस्कृत भाषा मानवसंस्कृतेः प्रथमा भाषा विद्यते। विश्वस्य साहित्यस्य मूलोद्गमः संस्कृतभाषया एव सञ्जातः, वैदिककालत एव संस्कृतभाषा विविधानां भाषाणां मार्गदर्शनं कुर्वती साहित्यसंवर्द्धने प्रवृत्तास्ति ।' अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवोचन् यत् 'समाजे सदाचारस्य संस्थापने संस्कृतभाषायाः विद्वांस एव समर्थाः सन्ति । संस्कृतस्य श्लोकेषु संस्कृतेरभिव्यक्तिः भवति।' दिल्ली संस्कृत-अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'संस्कृतस्य प्रसाराय यथा विविधाः प्रतियोगिताः आयोज्यन्ते तथैव संस्कृतसाहित्यस्य संवर्द्धनायापि विदुषां, विदुषीनाञ्च कृते विभिन्नाः योजनाः सञ्चाल्यन्ते पाण्डुलिपि प्रकाशन सहयोग योजना तास्वेका योजना विद्यते ।' समारोहेऽस्मिन् डॉ. धर्मवीरशास्त्रिणः 'अवेक्षणानि', डॉ. ओम् प्रकाशठाकुरस्य 'प्रेरणापारिजातम्', प्रो. कृष्णलालस्य 'प्रशस्तिपञ्चचामरम्', आचार्य श्रीधरप्रसादस्य 'दशमेशचरितम्', डॉ. सत्येदवचौधरीमहोदयस्य 'अस्माकं दन्ताः', 'शिशो उत्पत्तिश्च', डॉ. कृष्णदत्तशास्त्रिणः 'शुष्को वृक्षः', डॉ. राजेन्द्रमिश्रस्य 'संस्कृतशतकम्', 'अरण्यानी' च, डॉ. कीर्तिवल्लभ शाकटायनस्य 'राष्ट्रं भवति सर्वस्वम्', पं. रामदवे महोदयस्य 'सौन्दर्यलीलामृतम्', डॉ. श्रीनिवासमिश्रस्य 'अलङ्कार कौस्तुभम्' इत्यादीनां पुस्तकानां लोकार्पणमभवत् । अवसरेऽस्मिन् नैके विद्वांसः संस्कृतानुरागिणः शिक्षकाश्चोपस्थिताः आसन् ।

## ३८. वेदमन्त्रान्त्याक्षरी प्रतियोगिता

झण्डेवालानस्थ अकादम्याः संगोष्ठी कक्षे ११-११-२००० दिनाङ्के दिल्ली संस्कृत अकादमी संस्कृत विद्यालयस्य छात्राणां कृते वेदमन्त्रान्त्याक्षरी प्रतियोगिताम् आयोजितवती। प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'वेदाः ज्ञान-विज्ञानयोः स्रोतांसि सन्ति । विश्वे वेदानामुपरि शोधकार्यं कुर्वन्तोऽनेके वैज्ञानिकाः स्वीकुर्वन्ति यत् संसारस्य रहस्यं ज्ञातुं वेदाः एव सम्पूर्णं ग्रन्थाः सन्ति ।' कार्यक्रमस्याध्यक्षाः प्रसिद्धाः समाजसेविनः श्रीमन्तः कृष्णदत्त शास्त्रिमहोदयाः अवोचन् यत् ' वेदः मानवसंस्कृतेः आदिमः ज्ञानकोषः विद्यते । वेदमन्त्रेषूक्तं ज्ञानं वैज्ञानिकं विद्यते ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवोचन् यत् 'वेदानां महत्त्वं ज्ञात्वा एव दिल्ली संस्कृत अकादमी प्रतिवर्षं वेदेष्वाधारितानां कार्यक्रमाणामायोजनं करोति । तेष्वेव-वेदमन्त्रान्त्याक्षरी प्रतियोगिताप्येका वर्तते ।' अवसरेऽस्मिन् दिल्ली विश्वविद्यालयस्य संस्कृतविभागस्य पूर्वाचार्याः डॉ. कृष्णलालमहोदयाः, लालबहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठस्य वेदविभागस्याध्यक्षाः डॉ. लक्ष्मीश्वर झा महोदयाः, प्रसिद्धाः स्वातन्त्र्यसेनान्यः आचार्याः नरेन्द्रपाण्डेयमहोदयाः अन्येऽपि संस्कृतज्ञाः संस्कृतानुरागिणश्चोपस्थिताः आसन् ।

## ३९. महाविद्यालयीय श्लोकसंगीत प्रतियोगिता

मिराण्डा हाउस महाविद्यालये १६-११-२००० दिनाङ्के दिल्ली संस्कृत अकादमी महाविद्यालयीय श्लोकसंगीत प्रतियोगितामायोजितवती, प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली विश्वविद्यालयस्य संस्कृतविभागस्याध्यक्षाः डॉ. अवनीन्द्रकुमारमहोदयाः प्रावोचन् यत् 'संगीतस्योत्पत्तिः भारतेऽभवत् । सामवेदः संगीतस्यैव वेदोऽस्ति । संस्कृतभाषायां संगीतस्यानेके ग्रन्थाः सन्ति । येषु संगीतं 'नादब्रह्म' इत्युक्तम् ।' दिल्ली संस्कृत अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् ' संगीते प्रभावोत्पादिका शक्तिः

भवति, रोगाणां शोकानाञ्च नाशाय संगीतस्योपयोगः वैज्ञानिकैः विदेशेषु कृतः संस्कृतवाङ्मये संगीतस्य मौलिकं ज्ञानं विद्यते । संस्कृतभाषया संगीतस्य प्रसाराय अकादमी प्रतिवर्षं विभिन्नान् कार्यक्रमान्नायोजयति ।

## ४०. अखिलभारतीय नवोदित संस्कृत कवि समागमः

६६-११-२००० दिनाङ्के अकादम्याः सभास्थले दिल्ली संस्कृत अकादमी अखिलभारतीय नवोदित संस्कृतकवि समागमं आयोजितवती, कार्यक्रमस्योद्घाटनं कुर्वन्तः भारतीय प्रशासनिक सेवायाः वरिष्ठतमाः अधिकारिणः श्रीमन्तः आर.पी.रायमहोदयाः प्रावोचन् यत् 'संस्कृतभाषायाः साहित्यस्य वैशिष्ट्यं विद्यते यत् तस्याभिव्यक्तेः विधा काव्यं विद्यते, यतः काव्ये मानवहृदयस्यान्तरिकं चिन्तनमपि प्रकटं भवति । ऋषयः कवयश्चैवादौ शोध कार्येषु प्रवृत्ताः अभवन्, यतः तेषां दृष्टिः सूक्ष्मा आसीत् ।' समारोहस्याध्यक्षाः दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवोचन् यत् 'संस्कृतकाव्येषु सर्वेषां विषयाणां चिन्तनं विद्यते । काव्यमाध्यमेन भाषायाः प्रसारः सरलः भवति ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् 'कविः यत्किञ्चिदपि अनुभवति काव्यमाध्यमेन तस्याभिव्यक्तिं करोति, दिल्ली संस्कृत अकादमी कवीनां प्रोत्साहनाय विविधानां कार्यक्रमाणामायोजनं विदधाति । नवोदितानां कवीनां कृते प्रतिवर्षं नवोदित संस्कृत कवि समागमस्यायोजनं विधीयते ।' नवोदित संस्कृत कविप्रतियोगितायामस्यां अहमदाबादस्य श्रीमती प्रीतिराधाकृष्णन् प्रथमं स्थानं, मिर्जापुरस्य श्री श्रीकान्तमिश्रः द्वितीयं स्थानं, सन्तकवीर नगरस्य श्रीनाथधरद्विवेदी तृतीयं स्थानं, मधुबनी बिहारस्य श्री विवेकानन्दझा चतुर्थं, मयराष्ट्रस्य श्रीमती डिम्पलत्यागी पञ्चमं स्थानञ्च प्राप्तवती । कार्यक्रमेऽस्मिन् प्रो. अवनीन्द्रकुमारः, डॉ. रमाकान्तशुक्लः, डॉ. इच्छाराम द्विवेदी, डॉ. कुटुम्बशास्त्री, श्रीमन्तः विजयशंकरचतुर्वेदीश चोपस्थिताः असन् ।

## ४१. संस्कृतप्रश्नमञ्चप्रतियोगिता

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे ३०-११-२००० दिनाङ्के संस्कृत प्रश्नमञ्च प्रतियोगितायाः आयोजनम भवत् । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीय महोदयाः प्रावोचन् यत् 'संस्कृत विद्वांसः प्राचीनकाले योग्यताविकासाय शास्त्रार्थविधायाः आयोजनमकुर्वन् । साम्प्रतिके युगे सैव विधा प्रश्नमञ्चनाम्ना लोकप्रियतां भजति । संस्कृतस्य प्रचाराय संस्कृतप्रश्नमञ्च प्रतियोगिता लोकप्रियमाध्यमो भविष्यति ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् 'संस्कृत अकादमी यद्यपि छात्राणां योग्यता-विकासाय विविधानां कार्यक्रमाणामायोजनं विदधाति, किन्तु तासु प्रश्नमञ्च प्रतियोगितायाः महत्त्वमधिकं विद्यते । यतः प्रतियोगिताप्रधानेऽस्मिन् युगे प्रश्नोत्तराणि साक्षात्कारस्य निकषा सन्ति ।' प्रतियोगितायामस्यां मोती लाल नेहरू महाविद्यालंयस्य कु. सस्मिता खटुआ प्रथमं स्थानं, इन्द्रप्रस्थमहाविद्यालयस्य कु. कामिनी अहोई द्वितीयं स्थानं, शारदादेवी संस्कृतविद्यापीठस्य श्री शंकरदत्तपाण्डेयः द्वितीयं स्थानं, हंसराजमहाविद्यालयस्य श्री राजेशकुमारोऽपि द्वितीयं स्थानं प्राप्तवान् । मोतीलाल संस्कृत महाविद्यालयस्य श्री दुर्योधन राणा तृतीयं स्थानमधिगतवान्। प्रतियोगितायाः सञ्चालनं मोतीलालनेहरू महाविद्यालयस्य प्राध्यापकाः डॉ. रमणकुमारशर्म महोदयाः अकुर्वन् । अवसरेऽस्मिन् आचार्याः नरेन्द्रपाण्डेयमहोदयाः, डॉ. रामप्रकाशदासमहोदयाः, डॉ. श्रीधरवसिष्ठमहोदयाश्चोपस्थिताः आसन् ।

## ४१. महाकवेः कालिदासस्य स्मृत्युपलक्ष्ये परिचर्चा

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे ३-१२-२००० दिनाङ्के महाकवेः कालिदासस्य स्मृत्युपलक्ष्ये परिचर्चा आयोजितवती । परिचर्चायाः उद्घाटनं कुर्वन्तः दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः प्रावोचन् यत् 'संस्कृत साहित्ये सम्पूर्णं ज्ञानं विद्यते, विज्ञानस्य विविधाः विधाः संस्कृतशास्त्रेषु वर्णिताः सन्ति ।

महाकविः कालिदासः प्रकृतेरुपासकः कविः विद्यते ।' दिल्ली संस्कृत अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः प्रावोचन् यत् 'महाकविः कालिदासः न केवलं श्रृंगाररसस्योपासकः अपितु पर्यावरणस्यापि साधकः वर्तते । महाकवेः रचनासु पर्यावरणरक्षायाः वर्णनं विद्यते ।' अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'कालिदासः रससिद्धः कवीश्वरः वर्तते । सः पर्यावरणस्य रक्षायै विविधानामुपायानां वर्णनं करोति । तस्य काव्यानि यः येन भावेन पश्यति तं तस्योपलब्धिः भवति ।' परिचर्चायामस्यां सागरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः डॉ. राधावल्लभ त्रिपाठि महोदयाः मुख्यवक्तारः आसन् । श्रीलालबहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठस्य पूर्वकुलपतयः डॉ. श्रीधर वसिष्ठमहोदयाः, सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य पूर्वकुलपतयः डॉ. रामकरणशर्ममहोदयाः, लक्ष्मीबाईमहिलामहाविद्यालयस्य प्राध्यापिकाः डॉ. धर्माः, डॉ. कमलआनन्दमहोदयाः, जाकिरहुसैन महाविद्यालयस्य प्राध्यापिकाः डॉ. प्रवेशसक्सेनामहोदयाः, दौलतराम महाविद्यालयस्य प्राचार्याः श्रीमन्तः ओम्प्रकाशठाकुरमहोदयाः, रामजस विद्यालयस्य शिक्षिकाः डॉ. स्वराजगुप्ता महोदयाश्च परिचर्चायामस्यां शोधलेखानां वाचनमकुर्वन् । अवसरेऽस्मिन् डॉ. आनन्दमहोदयाः, डॉ. कृष्णलालमहोदयाः, डॉ. इन्दुशर्ममहोदयाः, डॉ. उषागुप्तामहोदयाः नैके विद्वांसः विदुष्यश्चोपस्थिताः आसन् ।

## ४३. केन्द्रीय संस्कृत प्रतियोगिता समारोहः

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे ९-१२-२००० दिनाङ्के दिल्ली संस्कृत अकादमी दिल्ली शिक्षा निदेशालयस्यैकादश मण्डलानां केन्द्रीय संस्कृत प्रतियोगिता समारोहमायोजितवती । प्रतियोगिता समारोहस्योद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य प्रधानगृहसचिवाः श्रीमन्तः सेवारामशर्ममहोदयाः प्रावोचन् यद् 'ज्ञानविज्ञानयोः स्रोतः संस्कृतशास्त्राणि सन्ति । वैज्ञानिकाः साम्प्रतं यावत् वेदेष्वाधारितानां विषयाणां शोधकार्यं प्रति उपेक्षाभावेन पश्यन्ति, अत एव तेषामाविष्काराणि मानवसंस्कृतेः कल्याणायापेक्षा

ह्रासाय सन्ति । सर्वासां मानवीयसमस्यानां समाधानं संस्कृतशास्त्रेषु विद्यते ।' दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृत भाषायां राष्ट्रियैकतायाः विविधानि सूत्राणि सन्ति । संस्कृतेनैव राष्ट्रे एकता भवितुं शक्नोति।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः उक्तवन्तः यत् 'अकादमी प्रतिवर्षं छात्राणां कृते विविधानां प्रतियोगितानामायोजनं करोति मण्डलीयप्रतियोगितासु पुरस्कृतानां छात्राणां कृते केन्द्रीय संस्कृतप्रतियोगितानामायोजनं विधीयते, सर्वेभ्यः पुरस्कृतेभ्यः छात्रेभ्यः प्रमाणपत्राणि पुरस्कारराशयः साहित्यञ्च वितरति, प्रतियोगितायामस्यां षट्शतसंख्यकाः छात्राः सम्मिलिताः सञ्जाताः । संस्कृतभाषणप्रतियोगितायां प्रथमं स्थानं महाशय चुन्नीलाल सरस्वती बालमन्दिरस्य छात्रः अंशुमानः प्राप्तवान्, एकलश्लोक संगीत प्रतियोगितायामपि अस्यैव विद्यालयस्य छात्रः प्रथमं स्थानमधिगतवान् । श्लोक संगीत प्रतियोगितायां शक्तिनगरस्थ क्र. १ राजकीय उ.मा. विद्यालयस्य छात्राः प्रथमं स्थानं प्राप्तवन्तः । संस्कृत काव्यालि प्रतियोगितायां रूपनगरस्थ राजकीय व.मा. कन्या विद्यालयस्य छात्राः श्लोकोच्चारणे रामकृष्णपुरस्थ सर्वोदय कन्या विद्यालयस्य छात्राः प्रथमं स्थानमधिगतवन्तः । अवसरेऽस्मिन् डा. रमाकान्तशुक्लः, डॉ. नोदनाथमिश्रः, डॉ. जी.आर.मिश्रः, डॉ. शक्तिकपूरमहोदयाः, श्रीमती शशिप्रभागोयलः, आचार्य श्रीधरप्रसादबलूनी, डॉ. महावीरः, श्री ओम्प्रकाशठाकुरः, डॉ. शुक्लामुखर्जी, श्रीमती वेदवतीधींगरा नैके च विद्वांसः उपस्थिताः आसन् ।

## ४४. महाविद्यालयीय संस्कृत काव्यालि प्रतियोगिता

पश्चिम-पञ्जाबी बागस्थ श्यामाप्रसादमुखर्जी महिला महाविद्यालयस्य सभागारे १५-१२-२००० दिनाङ्के दिल्ली संस्कृत अकादमी महाविद्यालयीय संस्कृत काव्यालि-प्रतियोगिता आयोजितवती । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृत भाषायां विरचितेषु विविधेषु ग्रन्थेषु ज्ञान-विज्ञानयोः विविधाः विषयाः सन्ति । ज्ञान-विज्ञानयोः

सार्वभौमिकं स्वरूपं संस्कृतशास्त्रेषु विद्यते । काव्यालिविधाः अपि सर्वतः पूर्वं संस्कृतशास्त्रेष्वेवोल्लिखिता विद्यते ।' दिल्ली संस्कृत अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'संस्कृत शास्त्रेषूक्तं यत् 'साहित्य संगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः, संगीतस्य महत्त्वं जीवनेऽत्यधिकं विद्यते । अकादमी प्रतिवर्षं विभिन्नैः कार्यक्रमैः संस्कृतशास्त्रे वर्णितानां विषयाणां प्रसारं करोति । समारोहस्याध्यक्षाः श्यामाप्रसादमुखर्जी महिला महाविद्यालयस्य प्राचार्याः डॉ. सुरजीतकौर जोली महोदयाः प्रौक्तवत्यः यत् ' संस्कृतमतीव सरला भाषा विद्यते, संस्कृतस्य अध्ययनेन मानवः सुसंस्कारितः भवति । संस्कृतस्योच्चारणे माधुर्यं भवति । प्रसन्नतायाः विषयोऽस्ति यत् दिल्ली संस्कृत अकादमी वर्षेऽस्मिन् महाविद्यालयीय संस्कृत काव्यालि प्रतियोगितायाः आयोजनमस्माकं महाविद्यालये करोति । अवसरेऽस्मिन् गुरुकुल कांगड़ी विश्वविद्यालयस्य पूर्वकुलपतयः श्रीमन्तः सुभाषविद्यालंकारमहोदयाः, डॉ. शक्तिकपूरमहोदयाः, आचार्याः रामसेवकशर्ममहोदयाः, डॉ. नीलमग्रोवरमहोदयाः, डॉ. स्नेहलताभार्गव महोदयाश्चोपस्थिता आसन् । प्रथमं स्थानं श्यामाप्रसादमुखर्जी महिला महाविद्यालयः, द्वितीयं स्थानं इन्द्रप्रस्थ महाविद्यालयः, तृतीयं स्थानं जानकी देवीमहिलामहाविद्यालयः चतुर्थं लक्ष्मीबाई महिला महाविद्यालयश्चाधिगतवान् । अवसरेऽस्मिन्नैके विद्वांसः विदुष्यश्चोपस्थिताः आसन् ।

## ४५. सामान्यमहाविद्यालयीय-संस्कृतमहाविद्यालयीय-संस्कृतविद्यालयीय एकलश्लोक-संगीत-प्रतियोगिता

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे १६-१२-२००० दिनाङ्के दिल्ली संस्कृत अकादमी सामान्यमहाविद्यालयीय संस्कृत महाविद्यालयीय-संस्कृत विद्यालयीय एकलश्लोक संगीतप्रतियोगितायाः आयोजनमकरोत् । प्रतियोगितायाः उद्घाटनं कुर्वन्तः दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृत भाषायाः प्रसाराय विभिन्नानां प्रतियोगितानामायोजनम् आवश्यकं विद्यते । अकादमी

प्रतिवर्षं विभिन्नैः कार्यक्रमैः प्रतियोगिताभिश्च संस्कृतस्य प्रचारे प्रवृत्तास्ति ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् ' प्रतियोगिताभिः छात्राः संस्कृतश्लोकानां स्मरणं कुर्वन्ति । येन संस्कृतं प्रति तेषु अभिरुचिः संजायते । यत्र विद्यालयीय छात्राणां प्रतियोगिताः भवन्ति, तत्रैव महाविद्यालयीय छात्राणां कृतेऽपि विभिन्नाः प्रतियोगिताः आयोज्यन्ते।' समारोहस्याध्यक्षाः कर्मचारी भविष्यनिधि आयोगस्यायुक्ताः श्रीमन्तः वी.एन.शर्ममहोदयाः आसन् । अतिरिक्त शिक्षानिदेशकाः श्रीमन्तः एन.एस. टोलियामहोदयाः अपि अवसरेऽस्मिन् उपस्थिताः आसन् । प्रथमं स्थानं गार्गीमहाविद्यालयेन, द्वितीयं स्थानं इन्द्रप्रस्थमहाविद्यालयेन, तृतीयं स्थानं लालबहादुरशास्त्रि राष्ट्रिय संस्कृत विद्यापीठेन प्राप्तम्। अवसरेऽस्मिन् श्रीमती वेदवतीढींगरा महोदया, डॉ. शक्तिकपूर महोदयाः नैके च संस्कृत विद्वांसः विदुष्यः उपस्थिता आसन् ।

## ४६. कवेः साक्षात्कारः ( डा० कृष्णलालः )

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे २९-१२-२००० दिनाङ्के दिल्ली संस्कृत अकादमी 'कवेः साक्षात्कारः' कार्यक्रमः आयोजितवती । कार्यक्रमोऽयं डॉ. कृष्णलालमहोदयानां व्यक्तित्वे कृतित्वे चासीत् । कार्यक्रमस्योद्घाटनं कुर्वन्तः दिल्ली संस्कृत अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृतस्य कवयः विद्वांसः आदिकालत एव ज्ञान-विज्ञानयोः विविधासु विधासु चिन्तनमकुर्वन् । स्वातन्त्र्योत्तरकालेऽपि अनेके संस्कृतकवयः काव्यरचनायां प्रवृत्ताः सन्ति, येषां प्रयासैः संस्कृतभाषायाः अस्तित्वं साम्प्रतमपि वर्तते ।' कार्यक्रमस्याध्यक्षाः सम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य पूर्वकुलपतयः डॉ. रामकरणशर्ममहोदयाः, विशिष्टातिथयः आचार्याः श्रीधरप्रसादबलूनीमहोदयाश्च तत्रोपस्थिताः आसन् । अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् 'संस्कृत कवीनां कृतित्वस्य विषये तु कतिपयाः जनाः जानन्त्येव, किन्तु तेषां रचनायै का अभिप्रेरणा आसीत्, कासु परिस्थितिषु ते

काव्यरचनामकुर्वन्, के च तेषामनुभवाः आसन्, इत्थं कवेरेव मुखात् तस्यानुभूतीनां श्रवणं 'कवेः साक्षात्कारः' इत्यास्मिन् कार्यक्रमे भवति, अस्मिन् साक्षात्कारे डॉ. कृष्णलालमहोदयाः स्वकीयानां काव्याभिप्रेरणानां परिचयं प्रदास्यन्ति ।' स्वकीये स्मृत्युपाख्याने प्रसिद्धाः कवयः डॉ. कृष्णलालमहोदयाः प्रावचन् यत् 'मम काव्येषु मम हार्दिकी अनुभूतिः अभिव्यक्ता, यदा यदा अहमुद्विग्नः जात, तदैव काव्यस्य सृष्टिः सञ्जाता । काव्यरचनानन्तरं यदा स्वयमेवाहं पठामि स्म तदाश्चर्यचकितो भवामि स्म ।' अवसरेऽस्मिन् डॉ. रमाकान्तशुक्लः, डॉ. प्रवेशसक्सेना, डॉ. प्रतिभा, श्रीओम्प्रकाशठाकुरः नैके च कवयः, विद्वांसः, विदुष्यः, लेखकाः लेखिकाश्चोपस्थिताः आसन् ।

## ४७. गुरुगोविन्दसिंहजयन्त्युलपक्ष्ये परिचर्चा

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे ३०-१२-२००० दिनाङ्के दिल्ली संस्कृत अकादम्या गुरुगोविन्दसिंह जयन्त्युपलक्ष्ये 'पञ्जाबीसंस्कृतयोः पारस्परिकसम्बन्धः' विषयेऽस्मिन् परिचर्चैका आयोजिता, परिचर्चायाः उद्घाटनं कुर्वन्तः माननीयानामुपराष्ट्रपतिमहोदयानां विशेषकार्याधिकारिणः डॉ. के.एल.गाँधीमहोदयाः प्रावोचन् यत् 'राष्ट्रियैकतायां गुरुगोविन्दसिंहस्य परिवारस्य महद्योगदानं विद्यते । भारतस्यास्तित्त्वस्य संरक्षणाय गुरुगोविन्दसिंहेन लोकसंघटनं कृतम् । सः संस्कृतस्यापि ज्ञाता आसीत् । पञ्जाबीसंस्कृतयोः विकासाय प्रसाराय च गुरुगोविन्दसिंहः बहुविधं श्रममकरोत् ।' दिल्ली सर्वकारस्य पूर्वकार्यकारिपार्षदाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'पञ्जाबीभाषायाः उद्गमः संस्कृतभाषा अस्ति । पञ्जाबीभाषायां संस्कृतस्यानेके शब्दाः प्रयुज्यमानाः सन्ति । पञ्जाबीभाषायां सम्यग्ज्ञानाय संस्कृतस्य ज्ञानं परमावश्यकं विद्यते ।' दिल्ली संस्कृत अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'पञ्जाबीभाषा संस्कृतस्य सर्वाधिकं निकटं विद्यते, यतः पञ्जाबप्रदेशः संस्कृतस्य विदुषां विदुषीनाञ्च कार्यक्षेत्रमासीत् ।' दिल्ली सर्वकारस्य पञ्जाबी अकादम्याः सचिवाः

डॉ. खेलसिंह महोदयाः अवदन् यत् 'पञ्जाबी संस्कृतयोः सम्बन्धस्य विषये पञ्जाबी अकादमी अपि प्रवृत्ता अस्ति, संस्कृतस्य प्रथमग्रन्थस्य ऋग्वेदस्य, पाणिनेः अष्टाध्यायीतिग्रन्थस्य चानुवादः पञ्जाबीभाषायां विधीयते ।' पञ्जाबीविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः डॉ. इन्द्रमोहनसिंहमहोदयाः अवदन् यत् 'विष्णुसहस्रनामस्तोत्रस्य दशमग्रन्थस्य च समीक्षया प्रतीयते यत् दशमग्रन्थे विष्णुसहस्रनामस्तोत्रस्य प्रभावः विद्यते ।' अवसरेऽस्मिन् श्रीमन्तः चन्द्रकान्तबालीमहोदयाः, श्रीमन्तः सुभाषविद्यालंकारमहोदयाः, डॉ. बलवीरसिंहमहोदयाः, डॉ. शक्तिकपूरमहोदयाः, श्रीमती सरस्वतीबाली, श्रीमती वेदवतीधींगड़ाः, डॉ. रमाकान्तशुक्लमहोदयाः, श्रीधरप्रसादबलूनीमहोदयाः, डॉ. क्षेमचन्दमहोदयाः अनेके विद्वांसः विदुष्यश्चाप्युपस्थिताः आसन् ।

(त्रैमासिकी)

# संस्कृत-मञ्जरी

(जनवरी २००१ तः मार्च २००१ पर्यन्तम्)

वर्षम् १० अङ्कः ४

## श्रीरवीन्द्रकाव्यकुसुमाञ्जलिः

(द्वितीयो भागः)

सम्पादकः

श्रीकृष्णसेमवालः

सचिवः




## दिल्ली-संस्कृत-अकादमी

(राष्ट्रिय-राजधानी-क्षेत्र-दिल्ली-सर्वकारः)

# कुमारसम्भवगानम्

श्रावितवान् यदैकाग्रो हे कवे देवदम्पती ।
कुमारसम्भवं गानं–प्रमथाः सर्वतो दिशः ॥
आसन् दण्डायमानास्ते, शीर्षे गिरिपतेस्तदा ।
सान्ध्यो मेघस्तरः शान्तो मन्थरोऽवनतिं गतः ॥
स्तब्धा सौदामिनी लीला निस्तब्धं मेघगर्जनम् ।
कुमारस्य शिखी चाऽपि नतपुच्छः स्थिरः स्थितः ।
वक्रीकृत्योन्नतग्रीवां पार्वती–पार्श्वभूतले ॥
कदा वा स्मितहासेन ओष्ठो देव्या अकम्पत ।
दीर्घश्वासः कदा वा च अलक्ष्यमुदपद्यत ॥
कदा वाऽश्रुजलोच्छ्वासो नेत्रप्रान्ते ह्यदृश्यत ॥
अवसाने यदाऽऽकुला लज्जानेत्रनिमेषतः ।
नीरवाऽवनता–देवीमुखं दृष्ट्वा हठात् ततः ।
असमाप्ते च गाने त्वं नीरवोऽभून् महाकवे ॥



# मेघदूतम्

अत्रुट्यत् तु निमेषेण प्रतापः स महानपि ।
ऊर्ध्वतो देवता-शाप एकदा प्राविशद् यदा ।
तत्सुखराज्यमागत्य विच्छेदस्य शिखां वहन् ॥
यौवनस्य जगद्ग्रासि मिलनमृगतृष्णिका ।
मत्ता अहमिका यासु माया कुहेलिका-समा ।
मुहूर्तेन लयं याता प्रखरसूर्यतापतः ॥
विहाय चामरं छत्रं षड्ऋतुसहचारिकाः ।
सभां च भङ्गतां नीत्वा सहसा उदतोलयत् ।
रङ्गयवनिकां तत्र–उद्घाटितमभूत् तदा ।
सहसा च सपद्येव दृश्यं चित्राङ्कितं यथा ।
सुन्दरं भुवनं तावदश्रुप्लुतं समागतम् ।
दिनमाषाढमासस्य पर्वताः काननानि च ।
सुन्दराः कतिग्रामाश्च तथा विश्व-सभाङ्गने ।
तव विरहिणी वीणा वाद्यते करुणस्वरा ॥



# ऋतुसंहारः

कालिदास कविश्रेष्ठ कल्पकुञ्जवने मिथः ।
यौवन-यौवराज्यस्य रत्नसिंहासनोपरि ॥
आसीनः प्रियया सार्धं, समग्रा धरणी तव ।
पीठं पादयुगं वोढं, मरकत-विनिर्मितम् ॥
समग्रं गगनं धत्ते युवयोरेव मस्तके ।
यौवनं राजछत्रं च–षड्ऋतु परिचारिकाः ।
नववर्णमयैर्मद्यैः पूरयित्वा नवं नवम् ।
पात्रं–तेनाभिसिञ्चन्ति युष्मत् तृष्णार्तयौवनम् ॥
अन्तःपुरं त्रिलोक्येकं मधुरजनियापने ।
नास्ति दुःखं न वा दैन्यं न सन्ति जनमानवाः ।
तत्र त्वं वर्तसे राजा तव राज्ञी च वर्तते ॥



# काव्यम्

तथापि च किमासीन् न सुखं दुःखं कवे तव ।
आशानैराश्ययोर्द्वन्द्वो, मृत्युविहीन हे सुधीः ॥
अस्माकमिव आसीन्न षट्चक्रं तदनुक्षणम् ।
आघातः गोपनः कश्च–तथा वै राजपर्षति ।
कदाचि सोढवान् किं न अपमानमनादरम् ?
अविश्वासं तथाऽन्यायविचारश्च दरिद्रताम् ।
क्रूरां मतिं कठोरां वा? निद्राहीनाश्च रात्रयः ।
कदापि यापिताः किं न शूलं विद्ध्वाऽऽत्मवक्षसि?
तथापि ऊर्ध्वतस्तेषां काव्यं निर्लिप्तनिर्मलम् ।
आनन्दसूर्यमुद्दिश्य सौन्दर्यकमलं तव ।
प्रस्फुटितं; न तत्राऽपि चिह्नं कुत्र च विद्यते ।
दुःखदारिद्र्यदुःखानां दुर्दिनस्य तथा कुतः ॥
जीवनमन्थनोत्पन्नं विषं पीत्वा स्वयं च तत् ।
अमृतमुत्थितं यच्च दत्वा त्वं गतवानसि ॥



# मानसलोकः

मानससरस्तीरे कैलाशगिरिशिखरे ।
निर्जनभुवने ह्यासीर्महेशमन्दिराङ्गणे ॥
नीलकण्ठद्युतेस्तुल्यं सुस्निग्धनीलभासिते ।
आषाढस्य चिरस्थायि-घनमेघंदले तथा ।
तपोलोकतले ज्योती रूपसप्तार्षिरोचिषाम् ॥
अद्यापि कुरुषे वासं मानसधाम्नि हे कवे ॥
वससि त्वं चिरं तत्र शिवचरितगानतः ।
समग्रं भुवनं व्याप्य अज्ञयिनी नृपालयः ।
नृपतिर्विक्रमादित्यो नवरत्नसभा च सा ।
मध्यतो वा कुतो दृश्यः स्वप्नः क्षणप्रभा-समः ॥
स्वप्तः सविलयं प्राप्तो विपुला सा छविस्तथा ।
मानसलोकवासी संस्तिष्ठसि त्वं महाकवे ॥



# नैवेद्यतः

## प्रार्थना

भयशून्यं यतश्चित्तम्--उच्चं यत्र शिरस्तथा ।
ज्ञानं मुक्तं, यतो गेहप्राचीरं च दिवानिशम् ।
स्वस्य प्राङ्गणभूम्यां च खण्डीकृत्य वसुन्धराम् ।
क्षुद्रीकृत्य तथा यत्र स्थापितवान् न कुत्र वा ॥
हृदयाच्च मुखाद् यत्र वाक्यमुच्छ्वसितं भवेत् ।
निर्बाधस्त्रोतसा यत्र कर्मधारा प्रधावति ॥
दिशि दिशि तथा देशे देशे चाऽजस्त्रधारया ।
चरितार्थतया; यत्र न ग्रसेन्मरुबालुका ।
शुष्काचारस्य पन्थानं विचारस्त्रोतसस्तथा ।
पौरुषं शतधा खण्डं यत्र कृतवती नहि ॥
नित्यं यत्र स्वयं त्वं हि सकलकर्मणां तथा ।
चिन्तनानां च सर्वेषाम् आनन्ददायकः स्थितः ॥
कृत्वाऽऽघातं स्वहस्तेन निर्दयं त्वं हि हे पितः ! ।
जागरय च तत् स्वर्ग इदं भारतमण्डलम् ॥



# न्यायदण्डः

त्वदीयो न्यायदण्डः स सर्वस्यैव करेऽर्पितः ।
स्वयं त्वया–तथा दत्तो राजाधिराज हे ! त्वया ।
शासनस्य महान् भारः प्रत्येकोपरि ते गुरुम् ।
सम्मानं तं दुरूहञ्च, तत् कार्यं त्वां प्रणम्य च ।
सविनयं शिरोधार्यं कर्तुं शक्तो भवान्यहम् ॥
बिभयानि न कस्माच्च कदापि तव कर्मणि ॥
क्षीणा दुर्बलता यत्र क्षमा हे रुद्र ! तत्र च ।
भवेयं निष्ठुरः सम्यक् तव आदेशतः प्रभो ॥
सत्यं वाक्यं तथा सद्यः खरखड्गसमं ज्वलत् ।
उत्तिष्ठेत् रसनायां स इङ्गितेन तवैव च ॥
गृहीत्वा स्वस्य यत् स्थानं विचारस्याऽऽसने तव ।
रक्षेयं तव सम्मानं ( सावधानं निरन्तरम् ) ॥
अन्यायं कुरुते यश्च अन्यायं सहते च यः ।
तव घृणा दहेत् तं हि तृणवद् भस्मसादिति ॥



# निवेदनम्

(१)

एतत् तव समीपे मे रोषं निवेदनं प्रभो !
दृढबलेन सर्वां च क्षीणतां छिन्धि हे मम ॥
अन्तरस्य च अन्तस्तो वीर्यं देहि सुखाय मे ।
तत् सुखं कठिनीकुर्याम् दुःखे वीर्यं च देहि मे ।
शान्तसस्मितवक्त्रेण यद् दुःखं स्वमुपेक्षते ॥
देहि च भक्तये वीर्यं सफला साऽस्तु कर्मणि ।
प्रीत्या स्नेहेन पुण्येन प्रस्फुटिताऽस्तु सा तथा ॥
क्षुद्रजनाय वीर्यं तद् देह्यात्मानं यथा स च ।
हीनज्ञानं न कुर्वीत शक्तिमच्चरणे भयात् ॥
लुटंश्च न पतेत् क्वाऽपि, वीर्यं चित्ताय देहि मे ।
यथा तदेककं नित्यं तुच्छतोपरि च स्वयम् ।
स्थापयितुं समर्थः स्याद् ( दृढमविचलं सदा ) ॥
वीर्यं देहि च पादे ते विनतः पातयन् शिरः ।
अहर्निशं स्वमात्मानं स्थिरं स्थापयितुं क्षमः ॥

( २

हे भारत, नृपं त्वं तु तथा शिक्षितवद् यथा ।
त्यक्तुं मुकुटदण्डौ च स्वस्य सिंहासनं भुवम् ।
धातुं दरिद्रवेषं च, तथा वीरमशिक्षयः ।
क्षमितुं च महाशत्रुं धर्मयुद्धे पदे पदे ॥
विस्मृत्य च जयं किं वा पराजयं तथा शरान् ।
संहर्तुम् योगयुक्तेन चेतसा कर्मिणं जनम् ।
अशिक्षयश्च सर्वेषां कर्मणां तु फलस्पृहाम् ।
उपहारस्वरूपेण प्रदातुं ब्रह्मणः पदि ॥
अशिक्षयश्च गेहस्थं विस्तर्तुं च स्वकं गृहम् ।
अनाथाऽऽर्ताऽतियोनाञ्च बन्धूनां प्रतिवेशिनाम् ।
कृते; भोगमबाधाश्च सहितं संयमेन हि ॥
उज्ज्वलमकृथा दैन्यं सुनिर्मलविरागतः ॥
अकृथा मङ्गलाः सर्वाः पुण्यकर्मसु सम्पदः ।
त्यक्त्वा ह्यशिक्षयः स्वार्थान् सर्वदुःख-सुखेषु च ।
स्थापयितुं च संसारं सर्वदा ब्रह्मणः पुरः ॥

( ३ )

भारतवासिनी लज्जां मा कुरुत कदापि वा ।
दैहिकशक्तिमत्तानां वणिजाञ्च विलासिनाम् ।
प्रतीच्या धनदृप्तानां कटाक्षपातसम्मुखे ॥
उत्तरीयं सितं धत्त सुशान्तसौम्यवक्त्रतः ।
सरलं जीवनं वोढुम्, वदेयुस्ते च किं वचः ।
मा शृणुत, तव श्रेष्ठं धनं तिष्ठतु चेतसि ॥
तिष्ठतु तच्च ते गेहे, तच्च तिष्ठतु सर्वदा ।
सुप्रसन्नललाटस्य उपरि मुकुटं तव ।
अदृश्यम् यत् तु दृश्येत बहिस्तः सुविशालवत् ।
स्तूपीकृतं च यच्चक्षुः सम्मुखे विद्यते स्थितम् ।
मा लोटताभिभूय स्वं तत्समीपे पुनः पुनः ॥
राजसिंहासने तत्र प्रतिष्ठां कुरुताऽऽत्मनः ।
दारिद्रस्य स्वतन्त्रस्य ( मुक्तपक्षस्य ) हर्षतः ।
रिक्तत्वस्याऽवकाशे च हृदयं परिपूर्य च ॥

## (४)

भारत, तव शिक्षा यदस्मभ्यमददात् धनम् ।
स्वल्पमायोजनं तस्य बहिरतीव दीनवत् ।
दृश्येत, त्वन्तरे तस्य विस्तृतं तच्च विद्यते ।
ऐश्वर्यम् अद्य दृश्येत बहिराडम्बरे च यत् ।
सभ्यताया अनन्ते तु उच्च आस्फालने तथा ।
दरिद्ररक्तपुष्टौ च विलासलालने च हि ।
अ[illegible]य चक्रगर्जे च मुखरे चैव घर्घरे ।
लौहबाहोस्तु दैत्यस्य बर्बरत्वे च भीषणे ।
रक्तरक्ताग्निदीप्ते च परमस्पर्धने तथा ।
निःसंकोचेन शान्तेन चेतसा को हि धास्यति ।
हा ! दीनसौम्यवेषं तं वीरस्य गौरवं तथा ।
सुविमलं न यत्राऽस्ति चिन्ता, चेष्टा च काचन ॥
आत्मनः सम्पदो राशिमुदारमतिमङ्गलम् ।
को रक्षिष्यति पूर्वा च स्वस्याऽन्तरनिकेतनम् ॥

( ५ )

एकदा भारतस्याऽस्य कस्मिन् वनतले ननु ।
उच्चैरुच्चारणं तावत् कृतं तत् विश्ववासिनः ।
शृण्वन्त्वमृतपुत्रा ! हे यावान् देवगणस्तथा ।
दिव्यधामनिवास्तव्यास्तमेव ज्ञातवानहम् ।
महान्तं पुरुषं तं यं तमःपारे व्यवस्थितम् ।
ज्योतिर्मयम् विदित्वा तं तमुद्दिश्य च दर्शनात् ।
मृत्युं लङ्घयितुं शक्तो नाऽन्यः पन्थाश्च विद्यते ॥
भारते पुनरस्मिन् क आनयिष्यति वा वद् ।
तं महानन्दमन्त्रं च, तदुदात्तं वचस्तथा ।
सञ्जीवनं तथा स्वर्गे मर्त्ये मृत्युञ्जयं हि तत् ।
परमं घोषणं, सा च अतीवैकान्तनिर्भरा ।
अनन्ताऽमृतवार्ता च शृणु हे मृत भारत ।
तच्च हि एकमेवाऽस्ति नाऽन्यः पन्थाश्च विद्यते ॥



# ब्राह्मणः

अन्धकारवनच्छाये सरस्वतीनदीतटे ।
सायमस्तङ्गतः सूर्यः प्रत्यावृत्ता वनान्तरात् ।
आश्रमे च समिध्भारं वहन्तो मस्तकोपरि ।
ऋषिपुत्राः, समाहूय श्रान्तास्ते होमधेनवः ।
सुस्निग्धशान्तनेत्रास्तैर्गोष्ठगेहे प्रवेशिताः ॥
अभितो गौतमाचार्यमासीना उटजाङ्गने ।
होमानलप्रदीप्ता ते सान्ध्यस्नानादनन्तरम् ।
ध्यानमग्नो महाशान्तिः—शून्येऽनन्तविहायसि ।
नक्षत्रश्रेणयस्तत्र स्तब्धा निःशब्दो निभृताश्रमः ।
अभूद् यावद् ऋषावेवं शिष्यान् वदति गौतमे ।
'ब्रह्मविद्यां वदिष्यामि हे शिष्या अवधत्त ताम् ॥'
तरुणो बालकः कश्चित् प्रविशदुटजाङ्गनम् ।
वहन् करपुटेनाऽर्घ्यभारं, पुष्पफलेन च ।
वन्दित्वा ऋषिपादाब्जं प्रणतो भक्तिपूर्वकम् ।
उवाच पिककण्ठेन सुधास्निग्धस्वरेण च ॥
'शिक्षार्थी ब्रह्मविद्याया भगवन्नाश्रमाऽगतः ।
कुरुक्षेत्र-निवास्तव्यो दीक्षायै तव सन्निधिम् ।

नाम्नाऽहं सत्यकामोऽस्मि ।' श्रुत्वा तत् सस्मिताननः।
ब्रह्मर्षिस्तदुवाचेदं भाषया स्निग्धशान्तया ।
'हे वत्स, कुशलं तेऽस्तु, किं गोत्रं तव मे वद ।
यतो हि ब्राह्मणस्यैव ब्रह्मविद्योपलब्धये ।
केवलमधिकारोऽस्ति ।'—धीरमुवाच बालकः ।
'भगवन् न हि जाने मे गोत्रं, पृष्ट्वाऽथ मातरम् ।
देहि मेऽनुमतिं श्वोऽहमेष्याम्युक्त्वा नतोऽभवत् ।
ऋषेश्चरणपद्मेषु, सत्यकामस्तदन्तरम् ॥
शान्तां तीर्त्वा च पादाभ्यां स्निग्धां स्वच्छां सरस्वतीम्।
अन्धकारसमाच्छन्नवनवीथ्यां न्यवर्तत ॥
सुषुप्तिनीरवग्रामप्रान्ते ससिकते तटे ।
प्राविशज्जननीपर्णशालां च बालको मुदा ॥
सान्ध्य-दीपो ज्वलन्नासीद्—गृहद्वारं विधृत्य च ।
जबाला जननी तत्र तस्थौ पुत्रमुखोत्सुका ॥
दृष्ट्वा तं वक्षसाऽलिङ्ग्य समाघ्राय शिरोऽवदत् ।
कल्याण-कुशलां वाणीं सत्यकामोऽथ पृष्टवान् ।
'किं वा मम पितुर्नाम जननि वद मे च तत् ।
जन्म ममाऽन्वये कस्मिन्, दीक्षार्थमगमं यदा ।
गौतमसन्निधिं सायम्—आचार्यो मामभाषत ।

हे वत्स ! ब्राह्मणस्यैव अधिकारोऽस्ति केवलम् ।
लाभार्थं ब्रह्मविद्याया, गोत्रं जननि मे वद् ॥'
श्रुत्वा तन्मृदुकण्ठेन अवनतमुखी सती ।
उवाच जननी तं च 'यौवने दैन्यदुःखिता ।
बहु परिचरन्ती त्वामलभे जननं तव ।
भर्तृहीनजबालायाः क्रोडे गोत्रं न वेद्मि ते ॥'
तपोवनस्य वृक्षाग्रे नवं प्रातः परे द्यवि ।
सुप्रसन्नं समायातं—यावन्त ऋषिबालकाः ।
तरुणशिशिरस्निग्धज्योतिषः सौम्यमूर्तयः ।
भक्त्या श्रुतधौतसर्वाङ्गा नवपुण्यच्छटा यथा ॥
प्रातः स्नातास्तथा स्निग्धच्छवियुक्त जटाजुटाः ।
समुज्ज्वलशरीरैश्च अतीव शुचि-शोभनाः ॥
छायायां वटवृक्षस्य संवेष्ट्य गुरुगौतमम् ।
उपविष्टाः—विहङ्गानां काकलिकलनिस्वनः ।
मधुपगुञ्जनञ्चैव तथा जलकलध्वनिः ।
उत्तिष्ठन्ति च, तैः सार्धं गम्भीरमधुरात् तथा ।
तरुणकण्ठतश्चित्रात् सम्मिलितस्वरेण च ।
आश्रममध्यतः शान्ता सामगीतिर्मनोहरा ।
सत्यकामस्तदाऽऽगत्य धीरेण गुरुसन्निधिम् ।

प्रणम्य ऋषिपादाब्जम् उदारनयनद्वयम् ।
उन्मील्य नीरवं तस्या आचार्यश्चाशिषं ददौ ॥
'गोत्रं किं ते, ततोऽपृच्छद् 'हे सौम्य प्रियदर्शन ।'
समुत्तोल्य शिरः प्राह बालको 'भगवन् ! शृणु ।
न वेद्मि मम किं गोत्रं, जननीं पृष्टवानहम् ।
'सत्यकाम', अवादीत् सा, 'बहु परिचरन्त्यहम् ।
अलभे त्वाम्, अजायेथाः क्रोडे मे वत्स ! हे यतः ।
भर्तृहीनजबालायाः गोत्रं ते न हि वेद्मि तत्' ।
समाकर्ण्य च तां वाणीं छात्रा मृदुस्वरेण च ।
शब्दयन्तश्चतुर्दिक्षु मधुचक्रे पतङ्गवत् ॥
विस्मय-विह्वलाः सर्वे कश्च हासं चकार वा ।
चीत्कारं कृतवान् को वा दृष्ट्वाऽनार्यस्य तस्य तम् ।
निर्लज्जस्य अहङ्कारं, परिहृत्य स्वमासनम् ।
गौतम ऋषिरुत्थाय बाहुद्वयं प्रसार्य च ।
आश्लिष्य बालकं प्राह—न त्वमब्राह्मणः खलु ।
परं द्विजोत्तमो नूनं जातः सत्यकुले यतः ॥'



# स्वर्गात् प्रत्यावर्तनम्

## (स्वर्ग हइते विदाय)

म्लानीभवति दिव्येयं कण्ठे मन्दारमालिका ।
मलिने मे, ललाटे सा ज्योतिर्मयी ललाटिका ।
निर्वाणत्वं गता तावत् हे महेन्द्र ! क्षयं गतम् ।
सर्वं पुण्यफलं, स्वर्गात् प्रस्थानदिनमद्य मे ॥
हे देवा अयि देव्यश्च–वर्षलक्षशतं मया ॥
लेशमात्राऽश्रुरेखां तु पश्यन् स्वर्गस्य चक्षुषि ।
इत्याशाऽऽसीद् गमिष्यामि विच्छेदस्याऽन्तिमे क्षणे ।
शोकहृदयहीनेयं स्वर्गभूमिः सुखावहा ।
निरैक्षत उदासीनं–पक्ष्म तच्चक्षुषो न हि ।
लक्षं लक्षं च वर्षाणि-पत्रे जीर्णतमेच्युते ।
अश्वत्थविटपप्रान्ताद् यावतो जायते व्यथा ।
कक्षच्युतं हतज्योतिर्नक्षत्रं च यथा दिवः ।
अन्तहीने धरण्याश्च जन्ममृत्युतरङ्गतः ।
शतं शतं वयं यावन् मुहूर्तं पतिताश्च्युताः ।
तावत्यपि व्यथा किन्तु स्वर्गस्य न हि जायते ॥

यद्यपि स्वर्गलोके च वेदना साऽजनिष्यत ।
अद्रक्ष्यत तदा छाया रेखा विरहजा ततः ।
कोमलहिमवाष्पेण ज्योतिः स्वर्गस्य मर्त्यवत् ।
अभविष्यच्चिरं म्लानं, दिव्यं नन्दनकाननम् ।
दुःखतो मर्मरायित्वा न्यश्वसिष्यच्च निश्चितम् ॥
सकरुणां कथागीतिं मन्दाकिनी तटे तटे ।
अगास्यत् कलकण्ठेन ( व्यथाजर्जरिता सती ) ॥
अवसन्ने दिने सन्ध्याऽऽगम्य निर्जनप्रान्तरम् ।
अगमिष्यदुदासीना, दिगन्तं प्रतियामिनी ।
निस्तब्धाऽश्रावयिष्यश्च शान्तं वैराग्यसङ्गीतम् ।
झिल्लीमन्त्रेण नक्षत्रसभायां; प्रायशस्तदा ।
नृत्यन्त्या मेनकायाश्च कनकनुपूरे मुहुः ।
तालभङ्गोऽभविष्यच्च, उर्वश्याश्च स्तनोपरि ।
स्वर्णवीणा क्षणं तावद् वक्रीभूयाऽन्यमानसा ।
अकरिष्यदकस्माच्च झङ्कारैरतिपीडितैः ।
मूर्च्छनां करुणां तीव्रां, तथा निष्कारणादपि ।
अद्रक्ष्यताऽश्रुधाराश्रुहीनयोर्देवनेत्रयोः ।
पतिपार्श्वे शचीदेवी एकासनमधिष्ठिता ।
अनिष्यन्तीव पानाय जलमिन्द्रस्य नेत्रयोः ।

न्यक्षोस्यत् सहसा दृष्टिम् उच्छ्वसन् मध्यमध्यतः ।
पवनस्त्रोतसा तत्र आगमिष्यद् धरातलात् ।
पृथिव्या दीर्घनिश्वासो, विच्युता नन्दने वने ।
कुसुममञ्जरीवृन्दात् अपतिष्यद् भुवस्तले ॥
तिष्ठ सहासवक्त्रेण सुखेन स्वर्गधाम ! हे ।
सुधां पिबत हे देवाः–स्वर्गः सुखनिकेतनम् ।
युष्माकमेव ( वासार्थं ) वयमत्र प्रवासिनः ॥
मर्त्यभूमिर्न हि स्वर्गो मातृभूमिर्यतो हि सः ।
अश्रुधारा वहेत् तस्मात् तस्या नेत्राच्चिरन्तरम् ॥
यावद् दण्डद्वयं कश्चिद् दिनद्वयात् परं यदि ।
तां परित्यज्य गच्छेद् वा–यावान् क्षुद्रो भवेद्धि सः ।
यावदभाजनं क्षीण ( -स्तथाऽतितुच्छ एव वा ) ॥
यावान् पाप्यथवा तापी, व्यग्रेणालिङ्गनेन सा ।
बन्धुं कामयते सर्वान् स्वस्य कोमलवक्षसा ॥
धूलिलिप्ततनुस्पर्शान् मातुश्चितं सुशीतलम् ॥
वहतु तेऽमृतं स्वर्गे मर्त्ये तिष्ठन्तु केवलम् ।
भूतलस्वर्गखण्डानि प्रेमाश्रुधारया चिरम् ।
श्यामीकृत्य सुखैर्दुःखैरनन्तमिश्रितानि च ॥
हे अप्सरः ! कदा मा भूत् प्रणयव्यथया तव ।

म्लानं नयनयोर्ज्योतिरापृच्छे भवतीमहम् ॥

प्रार्थय प्रणयं कञ्चित् त्वं शोकः कस्य कृते न ते ॥

दीनतमगृहे पृथ्व्यां यदि जायेत मे प्रिया ।

ग्रामस्य प्रान्तदेशे तु कस्मिंश्चिच्च नदीतटे ।

प्रच्छन्न उटजेऽश्वत्थच्छायायां, सा च बालिका ।

सञ्चेष्यति सुधाभाण्डं यत्नाद् वक्षसि मे कृते ॥

शैशवे सा नदीतीरे प्रातर्निमाय भक्तितः ।

शिवमूर्तिं समभ्यर्च्य मां वरं प्रार्थयिष्यते ॥

दीपं प्रज्वाल्य सन्ध्यायां विसृज्य जलवक्षसि ।

स्थास्यन्त्येकाकिनी घट्टे द्रक्ष्यन्त्यनन्यमानसा ।

सशङ्कं कम्पवक्षा स्वं सौभाग्यं गणयिष्यति ।

रक्तपट्टाम्बरा भाले श्वेतचन्दनचर्चिता ।

सोत्सवं च गृहं वंशी-सङ्गीतध्वनिना सह ॥

सुदिने दुर्दिने दध्यात् करे कल्याण-कङ्कणम् ।

तथा सिन्दूर-बिन्दुं च सीमन्तसीम्नि मङ्गलम् ॥

गृहे लक्ष्मीः सुखे दुःखे संसारसिन्धुमूर्धनि ।

पूर्णिमा शशिनः कान्तिः, हे देवाः स्मरणं मम ।

दूरे स्वप्नसमा स्वर्गकथाऽऽगच्छेद् कदापि वा ॥

अर्धरात्रे यदा कस्मिन् सहसा जागरं गतः ।

द्रक्ष्यामि शयनं शुभ्रं चन्द्रज्योतिःसमुज्ज्वलम् ॥
निद्रिता प्रेयसी तत्र, शिथिला बाहुवल्लरी ।
लुटन्ती दृश्यते पार्श्वे लज्जा ग्रन्थिश्च विच्युता ॥
प्रबुद्धा चकितं मे तु मृदुप्रणयचुम्बनात् ।
सा लतायिष्यते तन्वी दृढमालिङ्ग्य वक्षसि ॥
दक्षिणः पवनस्तत्र पुष्पगन्धं प्रवक्ष्यति ।
जागरितः पिको गायेद् विटपेऽदूरवर्तिनि ॥
अयि दीने तथा हीने साश्रुनेत्रे सुदुःखिते ।
जननि मलिने मर्त्यभूमे—बहुदिनात् परम् ।
रोदिति त्वत्कृते मेऽद्य विधुरं हृदयं भृशम् ॥
शुष्के मे नयने यावद् अभूतामश्रुदपूर्णिते ।
प्रस्थानदुःखतः स्वर्गलोकः कुत्र लयं गतः ।
अलसकल्पनाप्रायस्तावच्छायाछविर्यथा ॥
तव नीलाम्बरं ज्योतिर्जनपूर्णगृहाणि च ।
सिन्धुतीरे सुदीर्घां तां पाण्डुरसैकतस्थलीम् ।
हिमरेखा तथा शुभ्रा सुनीलपर्वतोपरि ॥
मध्यवर्ति-तरुश्रेण्या निःशब्दश्चारुणोदयः ।
शून्ये नदीतटे तत्र सन्ध्यानतमुखी तथा ॥
अश्रुजलस्य बिन्दौ च दर्पणस्य तले यथा ।

सर्वाणि प्रतिबिम्बानि आगत्य पतितानि च ॥

जननि ! हतपुत्रे हे—शेषविच्छेद-वासरे ।

अक्ष्णोः शोकाश्रुधारा या च्युता मातृस्तनौ तव ।

अभ्यसिञ्चद्—इदानीं तु शुष्कतामद्य सागता ॥

तथापि मनसा जाने यदा तव निकेतनम् ।

पुनः प्रत्यागमिष्यामि—बाहुद्वयं च मां तदा ।

धास्यति, मङ्गलः शङ्खो ध्वनितश्च भविष्यति ॥

प्रेमच्छायेऽथ गेहे ते प्रेमसंसार सद्मनि ।

सुखदुःखभयैः पूर्णे मध्यतः पुत्रकन्ययोः ।

ग्रहीष्ये मां तथाऽऽदृत्य चिरं परिचितं यथा ॥

तत् परदिवसान् मातः शिरःपार्श्वे सदा मम ।

उपविष्टा प्रबुद्धा स्याः कम्पितहृदया सती ।

उन्मील्य करुणां दृष्टिं सदा चिन्तापरायणा ।

कदा वा हारयिष्यामि यमेव लब्धवत्यहम् ॥



# विजयिनी

अच्छोदसरसीनीरे स्नानाय रमणी यदा ।
अवतीर्णा—तदाऽभ्राम्यदादिप्रेमेव कम्पितः ॥
निखिलं भुवनं व्याप्य रोमाञ्चितः क्षणे क्षणे ।
वसन्तो नूतनो हर्षात् समीरणश्च प्रालपत् ।
प्रच्छायसघने वृक्षपल्लवशयने मृदु ॥
ज्योतिर्माध्यान्दिनं तत्र मूर्च्छितं च वनोरसि ॥
चम्पकविटपं शान्तमध्यास्याऽऽकम्पितौ मुदा ।
चुम्बनावसरे चञ्चोर्घने कपोतदम्पती ।
विरले कृतवन्तौ च विह्वलं कूजनं मुहुः ॥
श्वेतशिलातले तीरे त्यक्तं नीलाम्बरं यथा ॥
स्फलितगौरवं त्वेकप्रान्ते लुटत्यनादृतम् ।
तत्राऽधुनाऽपि सम्पृक्तं श्रीतनोस्तप्तसौरभम् ॥
देहे मूर्च्छान्विते क्षीण आयुषि दृश्यते यथा ।
प्राणलेशः कटिं त्यक्त्वा तथा लुटति मेखला ।
तूष्णीम्भूयाऽवमानेन, पतितं नूपुरद्वयम् ॥
स्वर्णयुग्मं परित्यज्य पाषाणे कठिने पुनः ।
लुटन्ती दृश्यते तत्र कञ्चुली, स्वर्णदर्पणः ।

मुखं स्मरंश्च कस्या वा शून्यमुद्वीक्ष्य पश्यति ॥
चन्दनस्य च पङ्कोऽपि कुङ्कुमरागरञ्जितः ॥
सज्जितः स्वर्णपात्रेऽस्ति, रक्तशतदलद्वयम् ।
लुटितं लज्जितं भूम्याम्–अम्लानसुन्दरं सितम् ।
करवीपुष्पमाल्यञ्च, धौतं शुक्लाम्बरं लघु ।
पूर्णिमाऽऽकाशवत् स्वच्छम् पूर्णं नीलं स्थिरं जलम् ।
अनाहतं गभीराणि विह्वलालिङ्गनानि च ।
वक्षसि परिपूर्णानि विस्तृतानि तटे तटे ॥
बकुलस्य घनच्छायतले श्वेतशिलापटे ।
सरस्याः प्रान्तदेशे तु आवक्षो जलमध्यतः ।
मग्ना सा सुन्दरी श्रेष्ठा, स्वच्छनीरे प्रसार्य च ।
स्वच्छायां कम्पमानां तां, स्निह्यत्याकृष्य वक्षसा ॥
सयत्नपालिते शुभ्रे राजहंसेऽति सादरम् ॥
नग्नेन बाहुपाशेन पक्षावावेष्ट्य कोमलौ ।
स्कन्धोपरि च संन्यस्य दीर्घां ग्रीवां पुनः पुनः ।
कपोलं कोमलं हंसपृष्ठे लिम्पति सादरम् ॥
रागिणी मधुरा काचिद् उत्तिष्ठति जले स्थले ।
नभस्तले चतुर्दिक्षु छायातपकरेण च ।
अरण्यस्य तथा सुप्त्या पत्राणां मर्मरेण तु ॥

कतिभिः स्पन्दकम्पैश्च वासन्तवासरस्य वै ।
निश्वासोच्छ्वास भाषाभिराभासंर्गञ्जनैस्तथा ॥
चमत्कृतमुहूर्तेन कथामेकां मनोहराम् ।
कोऽपि वा वाचयन्नासीत्, रश्मितन्त्र्यो रवेर्ननु ।
यथा ह्याकाशवीणायाः सुरबालाकृतेन तु ।
चम्पाङ्गुलिघातेन सङ्गीतझङ्कृतेन च ।
अरुदन्, स्तब्धतां मौनीं व्यथया मूर्छया तथा ।
पीडयन्त्विव; वृक्षस्य तलेऽथ विवशानि च ।
निःशब्देनाऽपतंस्तत्र विरले बकुलानि तु ।
अश्रान्तं कोकिलागीतं कृतवन्तश्च केवलम् ॥
रुदती भ्रमणं कृत्वा प्रत्यावृत्ता वनान्तरात् ।
विफला काकली तत्र, उदासीनः प्रतिध्वनिः ॥
छायां नाऽतिदूरे च माणिक्य-किङ्किणीध्वनिम् ।
वादयन्ती सरःप्रान्ते कलनृत्येन काचन ।
क्षुद्रा निर्झरिणी तत्र कल्लोलमिश्रिताऽभवत् ॥
तृणाऽऽस्तृततटे तत्र तस्या जलकलस्वनैः ।
मध्याह्नपवनेऽप्येकः सारसो निद्रितः स्थितः ।
वक्रीकृत्य सुदीर्घां तां ग्रीवां भङ्गीभरेण च ।
आकृष्य पृष्ठदेशे तु धूसरपक्षमध्यतः ॥

कस्याश्चिद् दूरवर्तिन्या नद्याः सैकतखेलनम् ।
व्यक्तोड्डीय चलन्ति स्म राजहंसगणाः सिताः ।
बलाकारूपतो बद्धा नभसि क्षिप्रचञ्चलाः ।
द्रुततुषारकैलासमुद्दिश्य सुमनोहराः ॥
अकस्माच्छ्रान्तवायुश्च वनगन्धं वहन् बहुम् ।
उत्तप्ताऽऽग्रहतः स्निग्धे लुटन् पतति वक्षसि ।
दीर्घं निःश्वस्य मुग्धायाः सरस्या बाहुबन्धने ॥
व्यग्रकौतूहलात् तत्र वसन्तस्य सखा स्मरः ।
बकुलस्य तले दृढं निषण्णः कुसुमासने ॥
प्रसार्य पादयुग्मं च नवीनतृणविष्टरे ।
देहभारं तरुस्कन्धे वक्रं संन्यस्य हेलया ।
उत्तरीयाञ्चलं पीतं लुटितं धरणीतले ॥
ग्रथिता मालतीमाला कुञ्चितकुन्तलोपरि ।
गौरकण्ठतले तस्य सहासं च कटाक्षतः ।
सुन्दर्याः स्नानलीलां तां मोहिन्याः स सकौतुकम् ।
अपश्यद् अङ्गुलिस्तस्य अधीरा चञ्चलोत्सुका ।
कोमलं निर्मलं वक्षो लक्ष्यीकृत्य मुहुर्मुहुः ।
पञ्चशरान् गृहीत्वा स्वम् अवसरमवैक्षत ॥
लक्षं मधुकरास्तावत् कुर्वन्ति गुञ्जनध्वनिम् ।

पुष्पे पुष्पे; विमुग्धाक्षो मृगश्छायातले मुदा ।
शनैः शनैः मृगीं सुप्तामलिक्षत क्षणे क्षणे ॥
आलस्येनाऽऽशया चैव वासन्तस्पर्शनैस्तथा ।
पूर्णमासीद् वनच्छायम् क्षुण्णं क्षुण्णं च कम्पनम् ।
अवस्थाप्य जलप्रान्ते सजलं चरणाङ्कनम् ।
सोपानेष्वङ्कयित्वा सा सुन्दरी तीरमागता ॥
स्रस्तश्च केशभारोऽस्याः पृष्ठदेशे विलम्बितः ॥
मायामन्त्रच्छलेनेव लावण्यस्य स्थिरोऽचलः ।
बन्दीभूतोऽस्ति, तस्याश्च शिखरे शिखरे क्षणात् ।
माध्यन्दिनरवेरंशुरपतदधरे तथा ।
ललाटे कटिदेशे च वक्षसि स्तनमूर्धनि ।
बाहुयुग्मे सुसिक्तायां प्रतिरेखं तनौ तथा ॥
निर्मलो वायुराकाशोऽनन्त एकत्र आगतौ ।
वेष्टयित्वा चतुर्दिक्षु संन्यस्याऽऽग्रहतो यथा ।
अदत्तां चुम्बनं तस्याः सर्वाङ्गे, सेवकाविव ॥
सिक्तां तनुं सयत्नं च आतप्तेनाऽञ्चलेन तु ।
मार्जयामासतुस्तावद्; रक्तपादतलोऽपतत् ।
च्युतवस्त्रमिवच्छाया, काननं स्तब्धतां गतम् ।
विस्मयेन मृतं प्रायो; मृदु मन्दं हसंस्ततः ।

त्यक्त्वा बकुलवृक्षस्य मूलम् अनङ्ग उत्थितः ।
सहसा सम्मुखं गत्वा दण्डवद्-ऋजुभावतः ।
निश्चलनिर्निमेषाभ्यां नयनाभ्यां क्षणं मुखे ।
दृष्टिं निवेशयामास-ततः परक्षणे भुवि ।
जानुनी पातयित्वा च निषण्णो नतमस्तकः ॥
निःशब्दो विस्मितश्चाऽसौ पुष्पधनुःशरान् स्वयम् ।
दत्तवांश्चरणोपान्ते तूणीरं शून्यतां नयन् ।
पूजोपहाररूपेण निरस्त्रं मदनं प्रति ।
शान्तप्रसन्नवक्त्रेण दृष्टिं चिक्षेप सुन्दरी ॥



# मेघदूतम्

कविवर कदा कस्मिन् विस्मृतवासरे भवान् ।
कस्याऽऽषाढस्य मासस्य प्रथमे दिवसे ननु ।
अलिखन् मेघदूतं तच्छ्लोकास्ते मेघमन्द्रिणः ॥
स्व-स्व-शोकस्तु विश्वस्य विरहिणां तु यावताम् ।
मध्य-सघनसङ्गीतं पुञ्जीकृत्य स्तरे स्तरे ।
अस्थापयच्च संरक्ष्य आत्मनस्तामसं ततः ॥
उज्जयिन्या नगर्याश्च प्रासादशिखरोपरि ।
विद्युदुत्सव उद्दामा वायुवेगो गुरूरवः ।
न जानामि दिने तस्मिन् को वा घनघटोत्सवः ।
निर्घोषस्तस्य गम्भीरो मेघसङ्घर्षणस्य च ।
जागरितमकार्षीच्च-एकस्मिन्नेव तद्दिने ।
अन्तर्गूढं तथा वाष्पाकुलं विच्छदरोदनम् ।
वत्सराणां सहस्त्रस्य च्छित्त्वा कालस्य बन्धनम् ।
आर्द्रीकृत्य तवोदारश्लोकराशिं च तद्दिने ॥
अविरलं चिरं रुद्धमिवाश्रुपतितं भुवि ॥
तद्दिने जगतः किंवा यावत् प्रवासिनो जनाः ।
शून्ये प्राञ्जलयो मेघमुद्दिश्य नतमस्तकाः ।

गाथां विरहजां वा तेऽगायन् समस्वरेण वै ।
प्रियागृहदिशं दृष्ट्वा? तथा निर्बन्धनस्य च ।
नवमेघस्य पक्षे स्वां स्थापयित्वाऽश्रुपूर्णताम् ।
श्रावयितुमयाचन्त प्रेमवार्ताम्; अशेत सा ।
वातायनतले दूरे यत्र विरहिणी प्रिया ।
भूतलशयने मुक्तकेशाऽति-म्लानवेषतः ।
सजलनयना? तेषां सर्वेषाञ्च महाकवे !
गानं तत्र च सङ्गीतैः प्रेरयामास किं भवान् ?
दिवसे च निशीथिन्यां देशे देशान्तरे तथा ।
अन्विष्यन् तां हि सर्वत्र विरहिणीं प्रियां ननु ?
श्रावणे जाह्नवी यद्वत् प्रवहन्त्यभिधावति ।
आकृष्य दिग्दिगन्तानां वारिधारां च सर्वतः ।
महासमुद्रमध्ये तु दिग्भ्रान्ता भ्रमितुं तथा ॥
पाषाणश्रृंङ्खला-बन्दी गिरिर्हिमालयो यथा ।
आषाढेऽनन्तशून्ये तु मेघान् वीक्ष्य नभश्चरान् ।
स्वतन्त्रगान् विनिश्वस्य दीर्घं कातरतां गतः ॥
राशिं राशिं च वाष्पाणां कन्दराणां सहस्त्रतः ।
प्रेरयन्त्यम्बरोद्देश्यं; प्रधावन्ति च ते द्रुतम् ।
उद्गतकामनातुल्याः शिखरमधिरुह्य च ।

सहसा मिलिताः सन्त एकीभूतास्ततश्च ते ।
गगनस्य तलं तावत् समस्तमधिकुर्वते ॥
आरभ्य तद्दिनाद् याताः शतशः दिवसाः कति ।
सुस्निग्धनववर्षाणां प्रथमाः नवजीवनम् ।
दत्वा च तव काव्याय वर्षाः कति प्रस्थिरे ।
अभिवृष्य नवां वृष्टिं वारिधारां पुनः पुनः ।
विस्तार्य नवमेघानां स्निग्धच्छायाः सुशीतलाः ।
सञ्चार्य नवमेघानां प्रतिध्वनी नवान् नवान् ।
स्फीतीकृत्य तरङ्गाणां प्रवेगान् छन्दसा तव ।
वर्षातरङ्गिणीतुल्याः, कालान् व्याप्य च वा कति ।
प्रियाहीने गृहे शून्ये सङ्गिहीना जनास्तथा ।
वृष्टिक्लान्तेऽतिदीर्घे च विलुप्तशशितारके ।
सायम् आषाढमासस्य क्षीणप्रदीपरोचिषा ।
उपविश्य तथा मन्दमन्दमुच्चार्य निर्जने ।
तच्छन्दो मर्जयामासुरात्मनो विरहव्यथाम् ॥
कण्ठस्वरश्च सर्वेषां तेषामायाति मे श्रुतिम् ।
समुद्रस्य तरङ्गस्य कलध्वनिर्यथा तथा ।
त्वदीयकाव्यतः, पूर्वप्रान्तेऽहं भारतस्य च ।
निषण्णः श्यामवङ्गेषु तेषु येषु कविर्वरः ।

वर्षाणां वासरे कस्मिन् जयदेवो निरैक्षत ।
श्यामच्छायां दिगन्तस्य तमालवनमध्यतः ॥
मेदुरमम्बरं मेघपूर्णम्, दिवाऽद्य तामसम् ।
सततं वृष्टिपातश्च, पवनश्चातिदारुणः ॥
आक्रमणेन तस्योर्ध्वबाहुर्भूत्वा वनस्थली ।
हा हा शब्दं करोतीवच्छित्त्वा विद्युन्निरीक्ष्यते ।
शून्ये मेघस्तरं हासं वृष्ट्वा वक्रं खरं तथा ॥
रुद्धगृहेऽन्धकारेऽहम् एकाकी उपविश्य च ।
पठामि मेघदूतं तद्—गृहत्यागि मनो मम ।
मेघपृष्ठे समासीनं मुक्तगति विहाय सा ।
चलत्युड्डीयमानं सद् देशाद् देशान्तरं तथा ॥
सानुमान् आम्रकूटः क्व ? कुत्र वहति वा पुनः ।
विशीर्णा विमला रेवा विन्ध्यपादमूले च सा ॥
उपलव्यथित-स्रोता; वेत्रवती तटे कुतः ।
परिणतफलश्यामजम्बूछाये तथा स्थितः ।
प्रस्फुटत्-केतकीवृत्या वेष्टितश्च समन्ततः ।
दशार्णनामको ग्रामो लुप्तः सन्नवतिष्ठते ।
ग्रामविहङ्गमाः कुत्र नीडारम्भं च कुर्वते ।
वर्षासु पथिपार्श्वस्तरुशाखास्वितस्ततः ।

कलकलरवैरुच्चैर्वेष्टयन्तो वनस्पतीन् ?
भ्रमन्ति क्व न जानामि कस्मिन् नदीतटे च वा ।
यूथीवनविहारिण्यस्तप्तकपोलतापतः ।
क्लान्तकर्णोत्पलाः सत्यो मेघच्छायाभिलाषतः ।
विकलमानसा जाता; आरण्यकाङ्गनास्तथा ।
भ्रूविलासानभिज्ञाः का नार्यस्ता मेघडम्बरम् ।
निक्षिप्य गगने दृष्टिं जनपदवधूजनाः ।
श्रुत्वाऽऽकाशे निरीक्षन्ते तान् मेघानूर्ध्वनेत्रतः ॥
पतति नयने नीले छायाघननीला तथा ॥
मेघश्याममगिरौ कस्मिन् मुग्धा सिद्धाङ्गना मुदा ।
स्निग्धं नवघनं दृष्ट्वा उन्मनस्काः शिलातले ।
चकित-चकिता भीत्या जडीभूय प्रभञ्जने ।
हठात् समागते तत्र त्वरितचरणास्ततः ।
संवृत्याऽऽकुलवासांसि अन्विष्यन्तो गुहाश्रयम् ।
'मात'र्वदन्ति 'वायुः किं गिरिशृङ्गं हरिष्यति ॥
अस्त्यवन्ती पुरी कुत्र ? निर्विन्ध्या तटिनी क्व वा ?
कुत्र शिप्रानदीतीर उज्जयिनी च पश्यति ।
आत्मनो महिमच्छायां, रात्रेर्द्विप्रहरे गते ।
विस्मृत्य प्रेमचाञ्चल्यं सुप्ताः पारावतास्तथा ।

भवनशिखरे तत्र; विरहस्य विकारतः ।
सूचीभेद्येऽन्धकारे च विद्युद्दीप्तपथे क्वचित् ।
रमणी बहिरायाति अभिसाराय केवलम् ॥
ब्रह्मावर्ते कुरुक्षेत्रं कुत्र वा तद् विराजते ?
कुत्र कनखलं वा तद् यत्र यौवनचञ्चला ।
भृकुटिरचनां गौर्याः फेनैर्विहस्य जाह्नवी ।
क्रीडति गृह्णती शम्भोर्जटाश्चन्द्रकरोज्ज्वलाः ॥
देशाद् देशान्तरं भ्राम्यदित्थं मेघस्वरूपतः ।
हृदयं प्लवते गन्तुं कामना-मोक्षधाम तत् ।
अलकानगरी मध्ये-रोषे विरहिणी च सा ।
सौन्दर्यस्यादिमा सृष्टिः प्रियतमा विराजते ॥
समर्थो को भवेन्नेतुं देशं तं त्वदृते ननु ।
विलासनगरीं लक्ष्म्या अपावृत्य महाकवे !
अमरभुवनम् यत्र सदाऽनन्तवसन्ततः ।
नित्यपुष्पवने नित्य-चन्द्रज्योतिःसमन्विते ।
इन्द्रनीलगिरेर्मूले प्रासादे मणिनिर्मिते ।
प्रफुल्ल-कनकाम्भोज-सरसीतीरसंस्थिते ।
मग्नैकाऽसीमसम्पत्सु क्रन्दति विरहव्यथा ॥
मुक्तवातायने सा च दृश्यते तनुवल्लरी ।

विलीना शयनप्रान्ते शशिरेखा तथा कृशा ।
पूर्वगगनप्रान्ते या प्रायो ह्यस्तमुखं गता ॥
कवे ! त्वदीयमन्त्रेण रुद्धा हृद्-बन्धन-व्यथा ।
मुच्यतेऽद्य ततो लब्धं विरह-स्वर्गधाम तत् ।
यापयति चिरं रात्रीर्यत्र विरहिणी प्रिया ।
जाग्रत्यनन्दसौन्दर्यमध्ये सैकाकिनी सती ॥
पुनर्नष्टमभूत् सर्वम्, पश्यामि च चतुर्दिशः ।
वर्षति सन्ततं देवो, घनीकृत्य तमस्तथा ।
निर्जनाऽऽयाति रात्रिश्च, प्रान्तर-शेषभूतले ।
अकूलं च समुद्दिश्य वायुः क्रन्दति सञ्चरन् ॥
अनिद्रनयनो रात्रेरर्धे चिन्तितवानहम् ।
अदात् क ईदृशं शापं-व्यवधानं कथं च तत् ।
ऊर्ध्वं पश्यन् कथं रुद्धो मनोरथश्च रोदिति ॥
कथं रुद्धगति प्रेम स्वपथं लभते न हि ॥
सशरीरं नरो को वा स्थानं तद्गतवान् यतः ।
मानससरसीतीरे विरहशयने स्थितम् ।
रात्रिहीन-प्रदोषस्य देशे मणिप्रदीपतः ।
दीप्ते सर्व-नदी-शैल-शेषेऽस्य जगतः क्व वा ॥



# अधुना प्रत्यावृत्य मामानय

(पवार फिराओ मोरे)

संसारेऽस्मिन् यदा सर्वे चिरं कर्मशते रताः ।
केवलच्छिन्नबन्धस्त्वं बाल इव पलायितः ।
प्रान्तरमध्य एकाकी मध्यदिने विषादतः ।
तरुच्छायातले दूरे वनगन्धप्रवाहिणि ।
मन्दगतौ तथा क्लान्ते तप्ते समीरणे दिनम् ।
सर्वं वादितवान् वंशीम् उत्तिष्ठ च त्वमद्य रे ।
अग्निर्लग्नः कुतो वा तत्? शङ्खः कस्य च वाद्यते ।
जगज्जनप्रबोधाय, शून्यतलं कुतश्च वा ।
ध्वनितं क्रन्दनेनाऽन्धकारागाराच्च वा कुतः ।
बन्धनजर्जराऽनाथा याचते सा सहायताम् ।
स्फीतकायोऽपमानश्च मुखलक्षेण शोणितम् ।
अजस्रं शोषयंस्तावत् पिबत्यक्षमवक्षसः ॥
स्वार्थोद्धतोऽविचारश्च परिहसति वेदनाम् ॥
संकुचितश्च भीतश्च क्रीतदासजनस्तथा ।
निलीयंते स्वमात्मानं छद्मवेषधरो भवन् ॥

एते दण्डायमानास्ते मूकाश्च शतस्य च ।
सर्वे म्लानमुखे तेषां शताब्द्याश्च शतस्य च ।
वेदनाकरुणा वार्ता लिखिता विद्यते खलु ॥
स्थापितान् स्कन्धतो यावद् भारान् यावच्च जीवनम् ।
वहन्तो मन्दगत्या च चलन्त्ययत्यन्तकष्टतः ॥
सन्तानेभ्यश्च यच्छन्ति वंशानुक्रमतस्ततः ।
नाऽदृष्टं भर्त्सयन्ते, न स्मृत्वा निन्दन्ति देवताम् ॥
दुष्यन्ति मानवान् वा न, अभिमानं विदन्ति न ।
अङ्गुलिभ्यां समुत्तोल्य भुक्त्वाऽन्नं स्वल्पमेव यत् ।
रक्षन्ति कथमप्येवं कष्टक्लिष्टं च जीवनम् ॥
यदा कश्चित् तदन्नं च हरति तस्य जीवने ।
प्रयच्छति यदाऽऽघातं गर्वान्धनिष्ठुरेण च ।
अत्याचारेण जानन्ति न कस्य द्वारदेशतः ।
विचारस्याऽऽशया गत्वा स्थास्यन्तिं आह्वयन्ति तत् ।
दरिद्रस्येश्वरं किन्तु वारैकमपि केवलम् ।
त्यजन्तो दीर्घनिःश्वासं म्रियन्ते नीरवं ततः ॥
सर्वेष्वेतेषु मूकेषु मूढम्लानमुखेषु हि ।
प्रदातव्या च भाषा तत्, सर्वेष्वेतेषु वै तथा ।
श्रान्तशुष्केषु भग्नेषु वक्षःस्थलेषु एव च ।

आशा च ध्वनयितव्या वाच्या आहूय ते पुनः ।
मुहूर्तं शिर उत्तोल्य भवन्तु ऋजुदण्डवत् ।
एकत्र संहताः सर्वे भीता यूयं यतो भयात् ।
भीततरः स चाऽन्यायो युष्मत्तो, जागृया यदा ।
स पलायिष्यते धावन् नूनं युष्मत् समीपतः ।
यदा दण्डायमानस्त्वं तिष्ठेश्च तस्य सम्मुखे ।
सङ्कोचं च सत्रासं स यथा मार्गकुक्कुरः ।
सपद्येव लयं गच्छेद् विमुखी तस्य देवता ।
सहायो नास्तिकस्तस्य, मुखेनाऽऽस्फालनं च सः ।
करोति मनसा किन्तु जानीते च स्वहीनताम् ॥
उत्तिष्ठ च कवेस्तावत् प्राणाश्च यदि सन्ति ते ।
सङ्गीकुरुष्व तानद्य सर्वेभ्यस्तत् प्रदेहि तान् ।
महादुःखं व्यथा चाऽपि महती सम्मुखे च ते ।
कष्टमयश्च संसारो दरिद्रोऽतीव विद्यते ।
शून्योऽतीव तथा क्षुद्रो बद्धोऽहङ्कार एव च ॥
याच्यतेऽन्नं तथा प्राणा ज्योतिर्मुक्तः समीरणः ।
बलं याच्यं तथा स्वास्थ्यम् आयुः सानन्दमुज्ज्वलम् ।
साहसेन तथा याच्यं वक्षःपटं सुविस्तृतम् ।
आनय दैन्यमध्येऽस्मिन् स्वर्गतश्च सकृत् कवे !

विश्वासस्यच्छविं तावत् ।

मां प्रत्यावर्तयाऽधुना ।

नय संसारतीरञ्च, हे रङ्गमयि कल्पने !

समीरे च समीरे च पुनर्मां मास्म दोलय ।

तरङ्गे च तरङ्गे च, तव संसारजालतः ।

मोहिनीमायया ते च मा विस्मारय मां पुनः ॥

विषादेन घनीभूत-विजनान्तर्निकुञ्जतः ।

मा स्थापय पुनश्चैवं छायायामुपवेश्य माम् ॥

सन्ध्याऽऽयाति दिनं याति दिशश्च तमसावृताः ।

उदासीन निराश्वासवायुना च वनस्थली ।

क्रन्दन्तीयं सनिःश्वासं, ततोऽहं बहिरागतः ।

अम्बरतल उन्मुक्ते, धूसरप्रसरे तथा ।

राजपथे जनारण्यमध्ये, पान्थ ! क्व यासि हे ।

क्व यासि, मां निरीक्षस्व, नाऽहं परिचितस्तव ।

मा कार्षीर्मय्यविश्वासं त्वदीयं नाम मे वद ॥

सृष्टौ सृष्टिविहीनायाम् अवसं बहुकालतः ।

रात्रिन्दिवं विनासङ्गं ममाश्चर्यकरस्ततः ।

वेषोऽयं नूतनश्चैष आचारो, नयने मम ।

स्वप्नावेशस्ततो दीप्तः क्षुधाग्निर्हृदये मम ।

यद्दिनेऽहं जगत्प्राप्तो मातः कामे ददाः इमाम् ।
केवलं क्रीडनार्थाय वंशीं, तां वादयंस्ततः ।
विमुग्धोऽहं महाज्ञातः स्वस्य स्वरेण तेन च ।
दीर्घां रात्रिं दिनं दीर्घमजनन्नैव वा कदा ।
क्रान्त्वा संसारसीमानं दूरमेकान्ततोऽगमम् ॥
तद्वंश्यां यः स्वरोऽभ्यस्तस्तस्य उल्लासतो मया ।
अवसन्नपुरी गीतशून्या कर्तुं च शक्यते ।
ध्वनिता यदि सा मृत्युञ्जयाशागीतधारया ॥
तस्य कर्मविहीनस्य यौवनस्य च यद्यहम् ।
प्रान्तमेकं समर्थोऽस्मि कर्तुं तरङ्गितं क्षणम् ।
स्वां भाषां लभते दुःखं यदि वा सुप्तितस्तथा ।
अन्तरस्य गभीरा सा तृष्णा जागरिता भवेत् ।
स्वर्गस्यामृतलाभाय–ततो धन्यं भविष्यति ।
मम गानम्, असन्तोषास्तेन शतशतं च वै ।
महागीतेन सम्पूर्णं निर्वाणत्वं गमिष्यति ॥
किं त्वं गायसि, किं वा च श्रावयिष्यसि वै तथा ।
मिथ्याऽऽत्मसुखजातानि, दुःखानि च मृषा वद ॥
स्वार्थमग्नो जनो यो हि बृहतो जगतोऽस्य च ।
विमुखो, न च शिक्षां वै लब्धवान् जीवितुं कथम् ॥

महाविश्वजनीनस्य जीवनस्य तरङ्गतः ।
कृत्वा सत्यां ध्रुवां तारां धावन् नृत्यंश्च निर्भयम् ।
मृत्योः शङ्कां न कुर्वंश्च, दुर्दिनाश्रुजलं तथा ।
मस्तकोपरि पात्येत; यास्यामि ह्ययभिसारतः ।
तन्मध्य एव सामीप्यं तस्य यस्मै समर्पितम् ।
मम जीवनसर्वस्वं व्याप्य च जन्मजन्मतः ॥
कः स तं नहि जानामि, न स परिचितो मम ।
जानामि केवलं ह्येतद् रात्रेस्तमसि तत्कृते ।
मानवाः यात्रिणः सर्वे चलन्ति युगतो युगम् ।
झञ्झायां वज्रपाते च धृत्वाऽति सावधानतः ।
आत्महृदयदीपांस्तान् ज्वालयन्तो यथायथाम् ।
केवलमेव जानामि श्रुतवान् यश्च कर्णतः ॥
तदीयाऽऽह्वानसङ्गीतं धावति स च निश्चितम् ।
संकटावर्तमध्येऽपि निर्भयप्राणतः सदा ॥
विश्वविसर्जनं कृत्वा दत्तवान् स ह्यकातरः ।
तथा स आप्तवांश्चैव स्ववक्षः पातयन् मुदा ।
निर्यातनं तथा मृत्योर्गर्जनं श्रुतवांश्च सः ।
सङ्गीतवत् ॥ तमग्निश्च दग्धवान्, बिद्धवानापि ।
शूलं तं, छिन्नवांश्चैव कुठारः, प्रियवस्तु यत् ।

सर्वं स्वस्येन्धनीकृत्य व्याप्य जन्म स्वयं चिरम् ।
अज्वालयच्च होमाग्निमकातर्येण तत्कृते ॥
हृत्पिण्डच्छेदनं कृत्वा रक्तशतदलार्घतः ॥
जन्मर्णं शोधयन् भक्त्या कृतवान् शेषपूजनम् ।
कृतार्थीकृत्य प्राणांश्च मृत्युना, श्रुतवानहम् ।
तदर्थं राजपुत्रोऽपि विषयविमुखी भवन् ।
पर्यधाच्छिन्नकन्यां च पथि भिक्षुकवेषतः ।
क्षुद्रमुत्पीडनं तावत्, प्रात्यहिक कुशाङ्कुरः ।
चरणतलदेशे तं विद्धवान्, कृतवांस्ततः ।
अविश्वासं जनो मूढो विज्ञः प्रियजनस्तथा ।
सुपरिचितयाऽकार्षीत् परिहासमवज्ञया ॥
नीरवं सदयाक्षेण क्षमां कृत्वा गतो हि सः ।
सौन्दर्यप्रतिमां भक्त्या अतुलामन्तरे वहन् ॥
मानी च पादयोस्तस्या मानमर्पितवांस्तथा ।
आत्मप्राणांश्च वीरस्तु, धनी च दत्तवान् धनम् ॥
तामुद्दिश्य कविश्चाऽपि विरच्य लक्षलक्षतः ।
गानं विकीर्णवान् देशे देशे कति महामुदा ॥
केवलं तत्तु जानामि तदीयमङ्गलध्वनिः ।
गम्भीरश्च महांश्चैव श्रूयते सागरे तथा ।

सम्पूर्णा प्रेममूर्तिश्च तदीया परमक्षणे ।
सुष्ठु विकाशते प्रेयो-जनस्य मुखमण्डले ॥
जानामि केवलं तद्धि प्रदाय क्षुद्रतां बलिम्
तद् विश्वप्रेयसी-प्रेम्णा वर्जयित्वा च दूरतः ।
जीवनस्य ह्यसम्मानान् सर्वांस्तथा च सम्मुखे ।
उन्नतं शिर उत्तोल्य स्थातव्यम् ऋजुदण्डवत् ॥
भयस्य लेखनं तस्मिन् मस्तके लिखितं न हि ।
दासत्वधूलिभिस्तस्मिन्नाङ्कितं विद्यते च वा ।
कलङ्कतिलकं कुत्र-तां च स्थापयताऽन्तरे ।
जीवनकण्टकाकीर्ण-मार्गेणैकाकिना मता ।
गन्तव्यं नीरवं धृत्वा धैर्यं दुःखसुखे समम् ।
अक्षिणी अश्रुपूर्णे च सम्मार्ज्य विरले तथा ॥
तदीयमुज्ज्वलप्रान्तं वेष्ट्य नीलमम्बरम् ।
विलुठद्दृश्यते सम्यक् तथैव भूमिमण्डले ॥
प्रत्यहं सन् निरालस्यः प्रात्यहिकेषु कर्मसु ।
सर्वजनान् सुखीकृत्य सुदीर्घपथशेषतः ।
जीवयात्रावसाने च क्लान्तपादस्ततः परम् ।
शान्तये शान्तिहारिण्यै रक्ताक्त-सिक्तवेशतः ।
आलयं दुःखहीनं तं प्राप्स्यामि नूनमेकदा ।

प्रसन्नवदना मन्दहासा सा भक्तकण्ठतः ।
लक्ष्मीर्महिममूर्तिर्मे स्वयं स्वां वरमालिकाम् ।
दास्यति, करपद्मस्य स्पर्शेन शान्तताम् इयुः ।
ग्लानयः सर्वदुःखानि सर्वाण्यमङ्गलानि च ।
आजन्मरुद्धनेत्राम्बुधारया क्षालयाम्यहम् ।
पादौ च रक्तपादाम्ब्जे लुटन्, सुचिरसञ्चिताम् ।
आशां मे पुर उद्घाव्य जीवनाऽक्षमतां तथा ।
क्रन्दन् निवेदयिष्यामि, याचयिष्ये ततः परम् ।
भक्त्याऽनन्तक्षमां तावत् तेन दूरीभवेद् यदि ।
दुःखनिशा, तथातृप्ता भवेच्च यदि वा ततः ।
सर्वप्रेमतृषैकेण प्रेम्णा मे जीवनस्य च ॥



# परिशोधः

## (महावस्तत्ववदावतः)

राजकोषादिदं चौर्यं धृत्वा तं चौरमानय ।
नीचेद् रक्षा भवेत् ते न श्रृणु नगरपाल ! रे ।
मुण्डं स्थास्यति देहे न; राज्ञः शासनतस्ततः ।
चौरस्यान्वेषणार्थं च बभ्रमू रक्षिणः पथि ॥
भवने भवने चैवं, शयितो नगराद् बहिः ।
विदीर्ण-मन्दिरैकस्मिन् वज्रसेनश्च-नामतः ।
तक्षशिला-निवास्तव्यः पान्थो वैदेशिकः, स तु ।
विक्रेतुमागतः काशीमश्वांश्च; दस्युहस्ततः ।
सर्वस्वं हारयित्वा च निःस्वो रिक्तोऽभवत् पुनः ॥
स्वदेशं प्रति यात्रार्थं निराश्वासोऽतिदुःखितः ।
चौराख्यया कृतो बन्दी बन्दिशालापथे तदा ।
चालितः हस्तपादे स बद्धः सन् लौहश्रृङ्खलैः ॥
तदा च सुन्दरीश्रेष्ठा श्यामा वातायनासना ।
प्रवाहं राजमार्गस्य कौतुकालस्य-भावतः ।
पश्यन्ती यापयामास प्रहरं, नेत्रसम्मुखे ।
जनता स्वप्नतुल्यैका, हठाद् विकम्पिता सती ।

श्यामाऽथ कथयामास-'काऽप्यहो रूपमाधुरी ।
महेन्द्रनिन्दिनी कान्तिरस्य चोन्नतदर्शनम् ।
कमिमं बन्दिनं कृत्वा नयति चौरवत् कथम् ॥
कठिनशृङ्खलैर्बद्ध्वा? गच्छ रे सहचारिणि ।
शीघ्रम् उच्चार्य मे नाम नगरपालकं वद ।
आह्वयति च तं श्यामा–कृपया बन्दिना सह ।
आगच्छतु स वारैकं ममैतत् क्षुद्रमालयम्' ॥
श्यामाया नाममन्त्रस्य गुणान् नगरपालकः ।
आमन्त्रणस्य तां वार्तां श्रुत्वा उत्तालतां गतः ॥
रोमाञ्चितोऽति शीघ्रं स प्रविष्टो गृहमध्यतः ।
ईषद् रक्तकपोलः सन् रक्षी सहासमब्रवीत् ।
अतिशये ह्यकालेऽस्मिन्नभाजनं जनं प्रति ।
अयमनुग्रहोऽयाच्यः, सम्प्रति च चलाम्यहम् ।
राजकार्याय, मे देहि अनुमतिं सुदर्शने' ॥
सहसा शिर उत्तोल्य वज्रसेन उचाव, हे ।
लीला सुन्दरि केषा ते, लीलैषा वा कथं तव ।
पथितो गृहमानाय्य मां वा कस्माच्च कौतुकात् ।
अस्याऽवमाननादुःखे निर्दोषस्य प्रवासिनः ।
अपमानं करोष्येवम्'? श्रुत्वा श्यामाऽवदत् ततः ।
'वैदेशिक अहो पान्थ नैतत् किमपि कौतुकम् ।

मदीयाङ्गेषु यावन्ति सुवर्णभूषणानि च ।
तानि सर्वाणि दत्त्वा ते शृङ्खलं स्वतनौ मम ।
ग्रहीतुं शक्नुयां भद्र, तवैतदपमानतः ।
अन्तरात्मा मदीयः स्वं मन्यते ह्यपमानितम्' ॥
उक्त्वैतत् सिक्तपक्ष्माभ्यां नयानाभ्याममार्जयत् ।
समस्तं लाञ्छनं तस्य पथिकस्याऽङ्गतो यथा ॥
रक्षिणमवदत् तावद् 'गृहीत्वा च यदस्ति मे ।
निर्दोषं बन्दिनं मुक्तं कृत्वा गन्तुं त्वमर्हसि' ॥
प्रत्यवादीच्च तां रक्षी 'अद्याऽपसारयामि ते ।
इममनुनयं, ह्येतदसाध्यं कर्म सुन्दरि ॥
राजकोषो हृतस्तेन कस्य प्राणव्ययं विना ।
शान्तिं न नृपते रोषः कथमपि गमिष्यति' ॥
गृहीत्वा रक्षिणं हस्ते श्यामाऽतिकातराऽवदत् ।
'बन्दिनो जीवनं रक्ष केवलं रजनीद्वयम् ।
इममनुनयं कुर्याम्'; 'पालयिष्यामि ते वचः' ।
प्राह नगरपालस्ताम्; द्वितीयरजनौ ततः ।
अवसानं गतायां सा ज्वलत् प्रदीपहस्ततः ।
बन्दिशालां समुद्घाट्य रमणीकक्षमाविशत् ॥
यत्र निगडितो मौनी इष्टनामजपेरतः ।
वज्रसेनः प्रभातस्य मृत्योः कुर्वन् प्रतीक्षणम् ॥

कटाक्षादिङ्गितं प्राप्य रमण्याः सहसाऽगतः ।
अमुञ्चच्छृङ्खलं रक्षी; ततो बन्दी निरैक्षत ।
सुकोमलं च शुभ्रं तद् विह्वलविस्मयान्वितः ।
उन्मीलत्-कमलप्रायमतिसुन्दरमाननम् ॥
गद्गदस्वरोऽवादीत्सः, का त्वमत्रोदिताऽभवः ।
शुक्रग्रहं करे धृत्वा शुभ्रा उषासमा ननु ।
शेषं गता यदा रात्रेर्विकारस्य विभीषिका ।
मुमूर्षोः प्राणरूपा त्वम् अयि मुक्तिस्वरूपिणि ।
निष्ठुरनगरीमध्ये लक्ष्मीरेका दयामयी ॥
'अहं दयामयी नूनं–रमण्या उच्चं-हासतः ।
सहसा जागरितं तत् कारागारं भयङ्करम् ॥
नवभीत्या तथा त्रासात् हसन्ती च पुनःपुनः ।
उन्मत्तोत्कटशब्देन शोकाश्रुराशिना तथा ।
पतिता सहसा भग्ना क्रन्दन्ती प्राह सा तदा ।
'अस्याः पुर्याः पथोमध्ये यति शिला भवन्ति च ।
सुकठिनतरा काऽपि श्यामाया न हि तत्र तु' ॥
उक्त्वैतद् दृढया शक्त्या गृहीत्वा तं करे ततः ।
नयन्ती वज्रसेनं सा काराया बहिरागता ॥
उषा जागर्ति पूर्वस्मिन् वरुणायास्तटे तदा ।
वनान्तरे, तरीरासीद् घट्टे, बद्धाऽतियत्नतः ॥

'पान्थ आगच्छ आगच्छ' सुन्दरी तमुवाच हे ।
नावि दण्डायमाना सा स्थित्वैवं 'हे मम प्रिय ।
स्मरणे रक्षणीयं तु वाक्यमेतच्च केवलम् ।
हे मम जीवनस्वामिन् प्रभो जीवनदेवते ।
समस्तबन्धनं छित्त्वा त्वयैकस्त्रोतसि प्लवे ॥'
नौकाऽभूद् बन्धनान् मुक्ता, विहङ्गश्च तटे तटे ।
आनन्दोत्सवसङ्गीतं वृक्षे वृक्षे वने वने ।
आरेभिरे, प्रियायाः स उत्तोल्य मुखमण्डलम् ।
बाहुद्वयेन वक्षः स्वं प्रपूर्य पृष्टवांश्च ताम् ।
वज्रसेनः—'प्रिये मुक्तस्तयाऽहं सम्पदा कया ?
सम्पूर्णां ज्ञातुमिच्छामि वद विदेशवासिनि ।
जनो दीनदरिद्रोऽयम्, ऋणेन कियता च वा ।
ऋणी तव समीपे स, सा कथा ह्यधुना न हि ।
आलिङ्गनं घनीकृत्य सुन्दरी प्रत्युवाच तम् ॥
पल्वमानाऽचलन्नौका पूर्णपवनवेगतः ।
तूर्णं च स्त्रोतसो वेगात्; मध्याह्नगगनोपरि ।
उदितो भास्करश्चण्डो, ग्रामवधूगणस्तदा ।
प्रत्यावृत्तः स्वगेहेषु स्नानान्तात् सिक्तवस्त्रतः ।
नीत्वा गङ्गाजलं कांस्यघटे, हट्टस्तटे तदा ।
प्रभातस्य गतो भङ्गं, कोलाहलस्तटद्वये ।

विरतिं गतवांस्तावज्जनपदमपथस्तदा ।
पान्थहीनस्ततः कर्णधारः पाषाणघट्टके ।
वटवृक्षतलेऽबध्नात् स्नानभोजनतस्तरीम् ॥
सङ्गीतशब्दहीनश्च वटशाखोपरि स्थिताः ।
तन्द्राघनास्तथाच्छायामग्नानीडाश्च पक्षिणाम् ॥
तथाऽऽलसपतङ्गाश्च गुञ्जन्ति दीर्घवासरम् ॥
पक्वशस्य-सुसौरभ्य-हर-मध्याह्नवायुना ।
उन्मोचितमकस्माच्च श्यामाया अवगुण्ठनम् ॥
व्यथितं व्याकुलं वक्षः पूर्णप्रणयपीडया ।
रुद्धप्रायेण कण्ठेन वज्रसेन उवाच ह ।
श्यामायाः कर्णमूले, 'तत्क्षणं शृङ्खलमोचनम् ।
कृत्वा बद्धवती मां त्वमेवमनन्तशृङ्खलैः ।
दुःसाध्यव्रतमेतत् ते विवृत्य वद मां कथम् ।
साधितं, मत्कृते कर्म यत् तत् कृतवती प्रिये ।
जाने चेज्जीवनं दत्त्वा तमृणं शोधयाम्यहम् ।
एष मम पणो'; वस्त्रमावृत्य वदनोपरि ।
अब्रवीत् सुन्दरीश्रेष्ठा 'सा वार्ता त्वधुना न हि ॥'
सुवर्णरश्मिजालं यल्लम्बितं छत्रवत् पुरः ।
आकुञ्च्य नीरवं दूरं दिनज्योतिस्तरीर्गता ।
अस्ताचलस्य घट्टं च, तीरस्योपवने तदा ।

सान्ध्यपवनसंलग्ना श्यामायास्तरिणस्तटे ॥
चन्द्रः शुक्लचतुर्थ्याश्च प्रायोऽस्तमगमत् तदा ॥
शान्ते तरङ्गहीनत्वात् क्षीणार्चिः कम्पते जले ।
सुदीर्घ-तटरेखायां तथा झिल्लीस्वनेन च ।
तरुमूले तमस्तावत् सघनं कम्पतेतराम् ।
वीणातन्त्रीर्यथा, दीपं निर्वाप्य तीरसम्मुखे ।
वातायनतले तत्र स्निग्धे दक्षिणवायुना ।
वक्रीभूय स्थिता श्यामा युवकस्कन्धतस्तदा ।
घननिःश्वसितास्येन, निर्बाधं पतितस्ततः ।
उन्मुक्तः सुरभिः केशराशिरस्याः सुकोमलम् ।
'तरङ्गितं तमोजालैराच्छाद्य वक्षसस्तलम् ।
वैदेशिकस्य तन्द्राया निबिड-जालसन्निभैः' ॥
आह अस्फुटकण्ठेन श्यामा तव कृते प्रिय ।
अकार्षं यदहं कर्म, अति सुकठिनं च तत् ॥
तत् कथा-वाचनं तेऽद्य सुकठिनतरं ततः ।
सङ्क्षेपतो वदिष्यामि सकृच्छ्रवणमात्रतः ।
मनसस्ते कथां तां च सम्मार्जयितुमर्हसि ॥
व्यर्थो मे प्रेमतो बालः किशोर उत्तराभिधः ।
उन्मत्तश्च तथाऽधीरः—स हि अनुनयान् मम ।
तव चौर्यापवादं तं नीत्वा स्कन्धोपरि स्वयम् ।

स्वप्राणान् दत्तवांस्तावद्, अये सर्वोत्तम प्रिय ।
पापं सर्वाधिकं ह्येतन्मदीयं सर्वजीवने ।
इदं मे गौरवं किन्तु त्वत् कृते तत् कृतं मया' ॥
अस्तं गतः शशी क्षीणस्तथाऽभून्नीरवं वनम् ।
वहच्च नीरवां सुप्तिं शत-शतस्य पक्षिणाम् ।
स्तब्धं दण्डायमानं सद्, अतीव धीरधीरतः ।
प्रियस्य बाहुरज्जुः सा रमण्याः कटिदेशतः ।
त्रुटित्वा पतिता पार्श्वे क्रमशः शिथिला सती ॥
निःशब्दमुपविष्टोऽभूद् विच्छेदः कठिनस्तयोः ।
मध्ये; वचनहीनः सन् वज्रसेनस्ततः स्थितः ।
सकष्टं कठिनं पश्यन् यथा पाषाणपुत्तली ॥
स्थापयन्ती शिरः पार्श्वे तस्य च्छिन्नलता-समा ।
लुण्ठन्ती पतिता भूमौ श्यामा आलिङ्गनच्युता ॥
मसीकृष्णनदीतीरे तीव्रतिमिरसञ्चयः ।
घनीबभूव धीरेण ( एकत्र मिश्रितो यथा ) ॥
युवकं जानुनी बद्ध्वा सहसा बाहुपाशतः ।
सबलम् आर्तनारी सा निरश्रुशुष्कनेत्रतः ।
क्रन्दन्ती आह 'हे नाथ क्षमस्व मां क्षमस्व माम्' ।
अस्य पापस्य यो दण्डः सोऽभिसम्पात एव च ।
निदारुणतरः सर्वस्तिष्ठतु विधिहस्ततः ॥

अकार्षं त्वत्कृते यद् मां तदर्थं क्षन्तुमर्हसि ॥
अपसार्य च पादौ तौ पश्यंस्तां प्रत्युवाच ह ।
वज्रसेनो–'मम प्राणैः किमासीत् ते प्रयोजनम् ?
क्रीतं ते पापमूल्येन एतन्मे जननावधि ।
महापापास्पदीभूतं जीवनं धिक्कृतं त्वया ।
रे कलङ्किनि ! निःश्वासं मदीयं धिगिमं यतः ।
ऋणी तव समीपोऽयं, धिगिमं च तथा मम ।
नेत्रनिमेषपातञ्च प्रतिनिमेषपाततः ।
बलेनोत्थाय उक्त्वैतत् त्यक्त्वा तरीं तटं गतः ।
वनमध्ये तमश्छन्ने निरुद्देशपथे ततः ॥
राशिश्च शुष्कपत्राणां पादभारस्य शब्दतः ।
अकुर्वच्चकितं तावत् तदरण्यं प्रतिक्षणम् ॥
गुल्मानां घनगन्धस्तु पुञ्जीभूतोऽभवत् ततः ।
वायुशून्य-वनस्थल्यां, तरुकाण्डः समन्ततः ।
नानाशाखाः समुत्तोल्य वक्रास्तमसि ते पुनः ।
विरूपविकृताऽसंख्यानाकारान् दधतः स्थिताः ॥
रुद्धाश्चतुर्दिशश्चासन्, लताशृङ्खलितं वनम् ।
प्रासारयत् करांस्तावत् स्तब्धनिर्णिमेषं यथा ॥
श्रान्तकलेवरः पान्थस्तत्र भूमावुपाविशत् ।
उपच्छाया समा का वा तत्पश्चाद् दण्डवत् स्थिता ।

तमसि तेन सार्धं सा अनुसृत्य पदे पदे ।
शोणितसिक्तपादाभ्यां मौनिन्यनुचरी स्वयम् ।
दीर्घं पथमतिक्रम्य आगता; पथिकस्ततः ।
बद्धमुष्टिद्वयोर्भूत्वा सगर्जनमुवाच ह ।
'न मुञ्चेर्मां तथापि त्वम् ?' धावन्ती रमणी तदा ।
विद्युद्वेगेन आगत्य समावृतवती ततः ।
वन्या-तरङ्गवत् तस्य सर्वाङ्गं दृढहस्ततः ।
आलिङ्गनेन केशस्य पाशेन स्रस्तवेषतः ।
आघ्राणेन घनश्वासैश्चुम्बनैः स्पर्शनैस्तथा ।
अट्टगद्गदवाक्या सा रुद्धकण्ठेन विह्वला ॥
'न मुञ्चामि न मुञ्चामि' वारं वारमुवाच ह ।
'पापं मे त्वत्कृते नाथ तद्दण्डं देहि मे स्वयम् ।
आघातं मे स्वहस्ताभ्यां कठोरं कुरु मर्मणि ।
उपायनस्य दण्डस्य शेषत्वं कुरु मे तथा ॥
ग्रहताराविहीनं तदरण्यं तमसि स्थितम् ।
किमप्येवाऽन्धभावेन अन्वभूच्च विभीषिकाम् ॥
तरुमूलानि सर्वाणि लक्षलक्षं स्थितानि च ।
त्रासतः कम्पितान्येव मृत्तिकाभ्यन्तरे ततः ॥
रुद्धनिष्पेषितश्वासात् काकूतेस्ततस्वरोऽन्तिमः ।
ध्वनिं चकार वारैकं-ततः परक्षणे तदा ।

भूमौ का वाऽपतत् तत्र निस्तब्धपतनेन च ॥
प्रत्याऽऽवृत्तो यदाऽऽयातो वज्रसेनो वनात् तदा ।
किरणस्पर्शतो गङ्गा-सैकते प्रथमोषसः ।
विद्युद्वर्णेव दीप्ताऽभून् मन्दिरशीर्षतः स्थिता ।
त्रिशूलनिर्मिता चूडा, जनहीने च सैकते ।
नदी-तटे तटे दीर्घं दिनं क्षिप्तजनो यथा ।
अयापयदुदासीनो, मध्याह्नस्य ज्वलद्रविः ।
अग्निमय-कशाघातैः सर्वाङ्गं तस्य विद्धवान् ॥
घटकक्षा दशां तस्य दृष्ट्वा ग्रामवधूस्तदा ।
आह करुण-कण्ठेन–'कस्त्वं त्यक्तगृहो जनः ।
अस्माकं गृहमागच्छ ।'–प्रत्युत्तरं न दत्तवान् ॥
तृष्णाविदीर्णवक्षः सन्स्तथापि च नदीतटे ।
सम्मुखतोऽपि नाऽस्पर्शत् कणमात्रं च तज्जलम् ॥
ज्वरतप्तेन दग्धेन शरीरेण दिनान्ततः ।
तरणीं प्राविशद् धावन् पतङ्गो वेगतो यथा ।
आग्रहेण उदग्रेण धावत्यनलदर्शनात् ॥
नूपुरं पतितं चैकं शय्यायां स निरैक्षत ।
पस्पर्श शतवारं तत् सबलं निजवक्षसा ॥
झङ्कारो हृदये तस्य शतमुखशरो यथा ।
आरेभे वर्षितुं, पार्श्वे पतितं नीलमम्बरम् ।

राशीकृत्य मुखं न्यस्य तदुपरि पतन् स्थितः ।
निःश्वासेन च निःशेषं देहगन्धं सुकोमलम् ।
अगृह्णाच्छोषणं कुर्वन्नऽतृप्ताऽऽवेशतस्ततः ॥
शशाङ्कः शुक्लपञ्चम्या अस्ताचलगतोन्मुखः ।
सप्तपर्णतरोः शीर्षे बभूव पतितो नतः ।
शाखाया अन्तराले च, बाहुद्वयं प्रसार्य च ।
आह्वानमकरोद् वज्रसेनः पश्यन् वनं प्रति ।
'एहि एहि प्रिये एहि'—अदूरे नदीतटे ।
सैकते घनकृष्णस्य वनस्य तिमिरे स्थिता ।
उपच्छाया-समा कस्या मूर्तिः संदृश्यते तदा ।
'एहि एहि प्रिये एहि'— 'प्रियतमाऽहमागता ।'
चरणे पतिता श्यामां 'मां क्षमस्व क्षमस्व माम् ।'
तव करुणहस्तेन कठिनं जीवनं मम ।
न गतम्, वज्रसेनश्च केवलं क्षणकालतः ।
मुखोपरि तदीयाया दृष्टिं चिक्षेप च क्षणम् ।
आलिङ्गनाय बाहू द्वौ प्रसार्य कम्पितोऽभवत् ॥
अपसार्य बलाद् दूरं सगर्जनमुवाच ताम् ।
'आगता त्वं कथं वाऽत्र प्रत्यावृत्ता कथं पुनः ।'
नुपूरं तत् समादाय वक्षतो न्यक्षिपद् भुवि ।
ज्वलदङ्गारतुल्यं च चरणयोः समीपतः ।

नीलाम्बरं समाकृष्य निचिक्षिपे च दूरतः ॥
अग्निशय्येव सा शय्या तिष्ठन्ती पादयोस्तले ।
तमारेभे प्रदग्धुं च, निमील्य नयनद्वयम् ।
पश्चात् कृत्यमुखं प्राह—'याहि याहि च सत्वरम् ।
विहाय मामितो गच्छ, नारी नतशिराः सती ।
क्षणं च नीरवं तस्थौ, जानुद्वयं परक्षणे ।
संन्यस्य भूतले यूनश्चरणयुगले ततः ।
अभवत् प्रणता, तस्मात् परं नदीतटे तदा ।
अवतीर्य तमश्छन्ने धीरं वनपथेऽचलत् ॥
निद्राभङ्गे यथाऽपूर्वो दृष्टं स्वप्नः क्षणिकतः ।
निशातिमिरमध्ये तु गच्छति विलयं चिरम् ॥



# उपायनम्

## (पुरस्कार)

आह कवेः प्रिया तस्मिन् धारासम्पातदुर्दिने ।
अन्त्यानुप्रासराशीनामेकत्र मिलनं बहु ।
करोषि च, महाकारपुस्तकान्युपविश्य तत् ।
रचयसि, पतत् प्रायं गृहं ते मस्तकोपरि ।
किं कृतमनुसन्धानं तस्य च छन्दसा बहु ।
ग्रथ्नासि ह्रस्वदीर्घाणि भस्मवत् तुच्छ वस्तु तत् ॥
रात्रिन्दिवं किमेतत् ते बालसुलभखेलनम् ?
इदानीं भारतीं त्यक्त्वा लक्ष्म्या आराधनं कुरु ॥
प्रक्षिप लेखनीं दूरे पुस्तकानि च ते तथा ।
कर्तव्यं विद्यते यच्च अधुनैव कुरुष्व तत् ॥
इयत्यधिगता शिक्षा एतां शिक्षां न लब्धवान् ।
ययाऽऽगच्छेद् गृहं किन्तु स्वल्पं कपर्दकद्वयम् ॥
दृष्ट्वा भयङ्करीं मूर्तिं सर्वनाशकरीमिव ।
तस्यास्त्रस्ताः कवेः प्राणाः परिहसच्छलेन सः ।
ईषत् सहासवक्त्रेण कृताञ्जलिरुवाच ह ।
न बिभेमि कदाप्येवम् एतन्मुखस्य चालनात् ॥

लक्ष्मीहीने जने किन्तु सदा लक्ष्मीर्दयावती ।
विद्यते गृहमध्ये सा भाण्डागारे न विद्यते ।
कस्ते वा श्रृणुयाद् वाक्यं-विपरीतं फलं मम ।
भाले—सा चञ्चला लक्ष्मीरचपला सती स्थिता ॥
भारती न पलं स्थिरा इयत्सेवां करोमि च ।
द्वारं तदर्गलीकृत्य वर्णानां मिलनाऽऽशया ।
कुर्वे सदाऽनुसन्धानं स्वर्गे मर्त्ये च तत्कृते ।
सर्वनाशो भवेत् तेन क्षणमन्यमना यदि ।
कविजायाऽवदच्छक्यं सोढुं नाऽतः परं किमु ।
भस्मसाद् गृहसंसारः, परिहासश्च सर्वतः ॥
कङ्कणशिञ्जनं कृत्वा वक्रीकृत्य मुखं ततः ।
क्षिप्रमञ्चलमाकुञ्च्य चञ्चलेन करेण सा ।
रोषतो गन्तुमारेभे—एवमुक्त्वैव सा यदा ।
दृष्ट्वा भुवनगर्वस्य दमनं गमनं च तत् ।
अभिमानस्य वेगेन अधीरमतिचञ्चलम् ।
उच्चाटितः कविः प्राह 'मा याहि हृदयं प्रिये ।
दलयन्ती त्वमेवं मे, धास्ये ते चरणद्वयम् ।
ध्रियसे स्वयमागत्य यदि न स्वेच्छया प्रिये ॥
कर्तव्यं किं ममेदानीम्—उपायं ब्रूहि केवलम् ।

सुवर्णैं रजतैः पूर्णं करिष्यामि गृहं तव ॥
कुरुष्व बुद्धिसंयोगं–लभेऽहं यत्र शून्यताम् ।
स्वल्पामपि च मूर्तिं ते तत्रैव स्थापयाम्यहम् ॥
कर्षणं नास्ति कुत्राऽपि बुद्धेः–सर्वा मरुस्थली ।
हसन्ती रुषिता चाऽपि गृहिणी प्रत्युवाच तम् ।
भवतु भवतु श्रेयो नास्त्यधिकमियत् परम् ॥
विनयो मे यथाभाग्ये प्रणयश्चाऽपि तादृशः ।
कदाऽपि वचनाऽभावो नाऽभवद् वदने तव ।
यदाऽहमवदं किञ्चिल्लब्धोत्तराऽस्मि तत्क्षणात् ॥
मम वचनमाकर्ण्य वाक्यसम्राट् सकृच्चल ॥
पञ्चाङ्गग्रन्थमुन्मील्य पश्य शुभे दिनक्षणे ।
क्षणकालत आलस्यं विस्मृत्य पुस्तकैः सह ।
चल राजसभामध्यम्–अस्माकं स नराधिपः ।
गुणिनां पालकः–पश्य तस्य च कति मानुषाः ।
दानेन मानुषा जाताः; श्लोकैः पूर्णीकृते गृहे ।
तेन कार्यं भवेत् किं वा? शिरसि शृण्वतः कवेः ।
भङ्क्त्वा वज्रोऽपतत् सद्य, आरेभे चिन्तितुं च सः ।
हा विपदद्य दृश्येत–न जानामि कदाप्यहम् ।
राजानं वा महाराजं–भाले किं वा भवेन् मम ?

हसन् स प्राह वक्त्रेण–कार्यमेतावदेव नु ।
मयेदमुच्यते किं वा करणीयमितोऽधिकम् ॥
प्राणान् दातुं च शक्नुयां; जागर्ति केवलं भयम् ।
( पञ्चत्वं तु मयि प्राप्ते ); विधवा चेद् भविष्यसि ॥
यदि मे तत्र गन्तव्यं किं विलम्बेन तेन वा ।
( यात्रोपयोगिनीः ) सज्जा आनय सत्वरं ततः ॥
मणिमय-शिरोभूषां सुवर्णकुण्डले तथा ।
केयूरे स्वर्णहारं च–आहूय सारथिं वद ।
निर्वाच्य च पृथक् कृत्वा अश्वानानेतुमुत्तमान् ॥
किङ्कराणां च कः को वा मया सह गमिष्यति ।
कुरुष्वायोजनं तस्य, ब्राह्मणी प्रत्युवाच तम् ।
मुखाग्रं यस्य किञ्चिन्न बाधते स इतोऽधिकम् ।
किं वा याचिष्यते वस्तु–मुखे धावति तस्य च ।
प्रयोजनं न दृश्येत रथाश्वेन कथञ्चन ॥
नानावेषास्तथा भूषा हीरकं रजतं तथा ।
आनीतानि सुवर्णानि कृत्वा पल्ल्याश्च याचनम् ॥
वासनापूरणं कृत्वा सज्जा-समापनं कुरु ।
रसना भवतु क्षान्ता, उक्त्वा एतावदेव सा ।
त्वरितगमना नाना वेषवासांसि गेहतः ।

समानयत्, कविर्वक्त्रं विवर्णीकृत्य संस्थितः ॥
निश्चितमद्य मे भाग्यं मन्दमित्थमचिन्तयत् ॥
गृहिणीनिकटे तस्य स्वयं समासीना सती ।
सम्पूर्णं निर्मलीचक्रे मार्जनैर्घर्षणैश्च तम् ॥
कटिबन्धं स्वहस्ताभ्यां बबन्ध यत्नतो दृढम् ।
चक्रे कण्ठाश्रितां कण्ठीम्, उष्णीषं मस्तके ददौ ।
अङ्गदे बाहुयुग्मे च कर्णयोः कुण्डले तथा ॥
यावतो रत्नभारान् सा अङ्गेष्वस्थापयत् सती ।
उपविश्य कविस्तावच्चित्रवत् सम्मुखे स्थितः ।
प्रेयस्या निजहस्तस्य यत्नोऽप्यद्य पराजितः ॥
इत्थं द्वौ प्रहरौ व्याप्य समाप्य भूषणक्रियाम् ।
गृहिणीद्रष्टुमारेभे ईषदपसृता सती ॥
मधुरां बङ्किमीकृत्य ग्रीवाम् तस्याः कवेर्मुखम् ।
गम्भीरमीक्षमाणाया हृदये समजायत ।
महाकौतुकम् उत्थाय गृहीत्वा चिबुके सती ।
हसन्ती प्रत्यवादीच्च–'अहो किं चारुसज्जितः ।'
क्षिप्रं दर्पणमानीय नयनसम्मुखे दधौ ।
अमृतमन्थिवाक्यानि ततो वक्तुं प्रचक्रमे ॥
'विद्ध्वाऽद्य पुरनारीणां प्राणान् यदाऽऽगमिष्यसि ।

मा विस्मर तदा दासीं गर्वतो हे पते ! मम ।
उपकारमिमं सम्यङ् मनसि रक्षणं कुरु ।
एवं भूषणरत्नानि मयाऽपि परिधापयेः ॥
उपविश्य कवेः क्रोडे बाहुपाशेन रागतः ।
बद्ध्वा हासेन संस्थाप्य तस्य कपोलपार्श्वतः ।
स्वस्याः कपोलकं चक्रे कर्णाकर्णि कथाश्च सा ॥
पश्यन्त्यां कविकामिन्याम्–अधरे क्रमशः कवेः ।
उच्छलन् हासराशिर्न स्थितो रुद्धः कथञ्चन ॥
मुग्धं च हृदयं तस्य विदीर्य बहिरागतम् ॥
सोच्छ्वासमवदत् तावत् किमपि मानयामि न ।
व्याख्यास्यामीदृशान् श्लोकान् रक्तपादतले तव ।
आकृष्य राजभाण्डारम् आनेष्यामि सुनिश्चतम् ॥
एवं च वदतस्तस्य वक्षः–स्फीतिरजायत ।
सोष्णीषं शिर उत्तोल्य हर्षेण स ततः परम् ।
गृहद्वारमपावृत्य पथि बहिर्गतोऽभवत् ॥
द्रुतमेकमना राजगृहं प्रति चचाल च ॥
कुतूहलाऽऽप्लुता क्षिप्रमुत्थाय कविकामिनी ।
वातायनस्य पार्श्वस्था दृष्टिं चिक्षेप सुन्दरी ।
हसितमनसा, कृष्णनेत्रे ज्योतिश्च नृत्यति ॥

कति राजपथे लोका यान्ति तेषां न कश्चन ।
पतति तादृशो नेत्रे यादृशो विद्यते मम ॥
निमेषे निमेषे तत्र उल्लासः क्रमशः कवेः ।
न्यूनीभवितुमारेभे, प्राप्ते राजगृहे ततः ।
मर्तुं च शक्नुयां सद्यो जीवेयं तेन निश्चितम् ।
इति भावोऽभवत् तस्य, सर्वे राजसभासदः ।
सैन्यं च रक्षिणश्चैव–गृहिणीवन् न कोऽपि च ॥
दण्डधारिजनश्रेणिर्दिग्भ्रमं जनयन्ति च ॥
इह नाऽऽगमनं युक्तं, सहासं प्रीतिपूर्वकम् ।
आलप्यन्ते कथा द्वित्रास्तादृशं न कथञ्चन ।
राजसभागृहं स्थानम्, मन्त्रितो द्वारपालकाः ।
सर्वे महाशया अत्र दधति यमवत् कथम् ।
मूर्तिं तच्चिन्तयित्वा च कविः स्फूर्तिं न लब्धवान् ॥
वक्षोऽस्य स्तब्धतां प्राप्तम् ( उपविश्य स्थितः कविः ) ।
उपविष्टो महाराजो महेन्द्ररायनामकः ।
महोच्चगिरिश्रृङ्गस्य सदृशो हेलया ततः ।
पश्यति तं जनारण्यं तत्राऽटलाऽचलच्छविम् ॥
शतं शतं च देशानां सरसीकृत्य सन्ततम् ।
पतत्यजस्रधाराभिस्तत्कृपानिर्झरः क्षरन् ।

तं महामहिमानं च नयने परिपूरयन् ।
कविरालोकयामास, विचारेऽवसिते सति ।
देशस्य च चरो मुख्यो मन्त्रिण इङ्गितात् पुरः ।
दण्डायमान आयातः करौ कुर्वन् कृताञ्जली ॥
आकारो व्यवहारश्च अतीव साधुवद् बहिः ।
तिलप्रमाणमात्रोऽपि विकारो नास्ति तन्मुखे ॥
मनुष्यमृगयावृत्तिं जानाति नाऽस्य को जनः ।
परन्तु सततं नाना पालयति व्रतानि च ॥
उपदेशश्च धर्मस्य यस्मै कस्मै जनाय सः ।
आलयमालयं गत्वा छिद्रामेकां कपर्दिकान् ।
अगृहीत्वाऽपि तन्मूल्यं वितरति सदा स्वयम् ॥
अतिगूढः कटाक्षोऽस्य विकिरति सदा स्वयम् ॥
कस्य किं घटितं किं वा कः किं करोति कुत्र च ।
आमूलात् पत्रपर्यन्ता सा वार्ता तस्य गोचरा ॥
गात्रे वैष्णवरूपेण वस्त्रं नामावलीयुतम् ।
दधदागत्य भूपं स ननाम नतमस्तकः ॥
मन्त्री नरपतेः कर्ण उपांशु किं न्यवेदयत् ।
तत्क्षणादेव राज्ञोऽयमादेशश्च बभूव ह ।
मुद्राः पञ्चसहस्त्राणि देह्यस्मै; साधु साध्विति ।

ऊचुः सभासदः सर्व उच्चकण्ठेन नन्दिताः ।
पुलकस्य प्रकाशोऽभूद् गात्रे सर्वजनस्य च ।
योग्यपात्रे इदं दानम्–अस्य देशस्य कोऽपि वा ।
आबालवनितानां च द्वेषमात्रं न मंस्यन्ते ॥
नम्रीभूयाऽनमत् साधुर्दृष्ट्वा सर्वे सभासदः ।
अहो अहो ध्वनिं चक्रुः केवलं मन्त्रिणोऽधरे ॥
हासलेशः सकृत्तत्र, ईषज्जागरितोऽभवत् ॥
वहन् राजसभामध्यं चरणौ धूलिधूसरौ ।
पवित्र-पादपङ्केन चिह्नीकृत्य सभास्तरम् ।
वैयाकरण एकश्च तूर्णं तत्र उपस्थितः ॥
वल्यङ्कितं श्लथं चर्म ललाटे स्वेदबिन्दवः ।
प्रखरमूर्तिः शर्माग्रे विद्यार्थी म्रियते भयात् ॥
लक्ष्मीकृत्य दिशं कां न व्यादाय विकटं मुखम् ।
श्लोकानवाचयत् कांश्चिद् गम्भीरमुच्चकण्ठतः ॥
कर्करमिश्रितान् दन्तैः कलायांश्चर्वितान् यथा ॥
अग्रं तस्य तथा पश्चान्न कश्चिदवबुध्यते ।
उपविश्य स्थिताः सर्वे नम्रीकृत्य च मस्तकम् ॥
'कञ्चिद् दक्षिणहस्तेऽस्मै' राजाऽहदेहि दक्षिणाम् ।
तदनन्तरमायातः कश्चन गणको जनः ॥

तस्य गणनया राजा बभूवाऽतिचमत्कृतः ।
मुद्राः झनत् झनत् कुर्वन् सन्तुष्टः स बहिर्गतः ॥
करपुटे वहन् दूर्वां धान्यं वृद्धैक आगतः ।
गणमान्यो, नृपस्तस्मिन् वदान्योऽतीव चाऽभवत् ॥
प्रपूर्णीकृतवांस्तस्य वस्त्रपेटीं, ततः परम् ।
नटा भटास्तथा राजपुरोहित उपस्थिताः ॥
कश्चिदेकः, सशिष्यः को, लोहितोष्णीषमस्तकः ।
कश्चिच्च, कस्यचिन्मूर्ध्नि, उष्णीषः शोभते हरित् ॥
द्विजाश्च परमाराध्याः कन्या-विवाहहेतुतः ।
अर्थार्थिनस्तथा मातृश्राद्धाय धनकाङ्क्षिणः ।
यस्य यथाऽस्ति निर्दिष्टं स तावद्धनमाप्तवान् ॥
राजाऽद्य कर्णवद् दाता सर्वे स्वं स्वं गृहं गताः ॥
अधुना किं करिष्यामि—मनसाऽचिन्तयत् कविः ।
सभागृहस्य कोणे तं विपद्ग्रस्तमुखच्छविम् ॥
निरैक्षत कविं राजा—'आसीनस्तत्र को बत ।
करवाण्यनुसन्धानं मन्त्रिन्नेहि नृपोऽवदत् ॥
'नाऽहं कोऽपि महाराज' उत्थाय कविरब्रवीत् ।
'केवलः कविरेकोऽस्मि'—नरपतिरुवाच तम् ।
'यद्येतत् एहि एहि, स्यात् काव्यालोचनमद्य तत् ।'

तमुपवेशयामास पार्श्वे स बहुगौरवम् ।
विधृत्य करयुग्मे च,–मन्त्री चिन्तितवांस्तदा ।
गच्छान्यवसरे चाऽस्मिन् बालसुलभखेलनम् ।
अधुनाऽऽरभ्यते नूनं; 'बहुकर्माणि सन्ति मे ।
उत्तिष्ठानि महाराज आदेशः प्राप्यते यदि ॥'
उवाच; तन् नृपः श्रुत्वा मृदुहस्तमचालयत् ।
केवलं, ते बहिर्जग्मुर्नृपस्येङ्गिततस्ततः ।
सभास्थाः सङ्गिभिः सर्वैः स्वजनैश्च ससम्भ्रमम् ॥
अमात्यपात्रमित्राणि वादिनः प्रतिवादिनः ।
अर्थिप्रत्यर्थिनश्चैव विविधोपाधयस्तदा ।
महोच्चा अतितुच्छाश्च यथा वन्याजलं द्रुतम् ॥
गतेषु सर्वसभ्येषु सर्वेषु सुजनेषु च ।
राजा कविश्च तौ तत्र उपविष्टौ मुखामुखि ॥
'कवेऽधुनाऽऽरभस्व त्वं' राजाऽऽह 'काव्यकूजनम्' ॥
कविर्नताननो हस्तौ संयुज्योरसि भक्तितः ।
वाणीं वन्दितुमारेभे–'नयनसम्मुखे मम ।
जननि त्वं प्रकाशस्व सुप्रसन्नमुखच्छवे ॥
स्वच्छमानसवास्तव्ये शुभ्रहासे सिताम्बरे ।
पद्मकुञ्जासने वीणाविनिन्दि-मञ्जुभाषिणी ॥

त्वं कृत्वा हृदयासीनां गृहकोणे सुखं स्थितः ।
धनमानविहीनोऽहम् उन्मत्तचित्तवच्चिरम् ।
अन्यमना उदासीनः, सर्वे दिशां चतुष्टये ।
पृथिवी-वण्टनं कृत्वा गणयित्वा यथायथम् ।
स्वं स्वमंशं च गृह्णन्ति; श्रुत्वाऽहं वचनं तव ।
प्राप्तःस्वर्गसुधां–सा मे श्रेयसी च बहुमता ॥
तथापि क्रन्दति प्राणी मातर्वाणि क्कचित् क्कचित् ।
जानासि सुरखाद्येन नरक्षुधा न पूर्यते ॥
यद्भावि तद् भवत्येव न तच्चिन्तां करोम्यहम् ।
जननि त्वं सकृद् वीणा झङ्कारं कुरु केवलम् ॥
तां विश्वप्लाविनीं धत्स्व सुधानिर्झररागिणीम् ।
शृण्वन् यां रागिणीं दिव्यां व्याप्य दिवानिशं तथा ।
विपुलहर्षभारेण भगवान् द्रवतां गतः ॥
हारयिष्यन् स्वमात्मानं मलिने मर्त्यधामनि ।
वहति नियतं; या च रागिणी गगनं सदा ।
व्याप्य च कम्पते होमशिखा-समोत्थिता सती ।
अनादौ सा असीमे तु विश्वतन्त्र्याश्च झम्पतः ।
पतति, रागिणी या च चिरं जन्म च चेतसः ।
कुहरे व्याप्य उत्तिष्ठेत् तथा कुहरिता सती ॥

धावति अश्रुहासाभ्यां प्रपूर्य जीवनं तथा ।
स्रोतोभिश्च सहस्त्रेण, कुत्र वा कश्च विद्यते ।
कः आयाति च को याति, निमिषे च प्रकाशताम् ।
आगच्छति तथा चैव निमिषेण विलीयते ॥
कालसमुद्रवेलायाम् एवं च बालुकोपरि ।
छायाऽऽलोकस्य क्रीडैका चलत्येवं निरन्तरम् ॥
राजानश्च महाराजा यावन्तो जगतोऽस्य च ।
आसन् य ह्यस्तनास्ते च अद्य सर्वे कुतो गताः ॥
सुखं दुःखं च लज्जा च प्रभाते प्रस्फुटन्ति वै ।
सायं त्रुट्यन्ति सर्वाणि तन्मध्ये केवलं स्वरः ।
गभीरो मधुरश्चैको ध्वनति विपुलो महान् ।
पूर्णं तस्मिंस्तथा मग्नं चिरादेव नभस्तलम् ॥
यो जनः श्रुतवान् दिष्ट्या तमनादिध्वनिं–स हि ।
हृदयतरणीं हर्षात् प्लावितवान्, न वेत्ति सः ।
धरणीञ्च तथाऽऽत्मानं भवकोलाहलं तथा ॥
उन्मत्त जन एवाऽसौ विकलप्राण एव च ।
भवकूलात् समायातश्छित्वा शृङ्खलबन्धनम् ।
त्यक्त्वा सर्वं कथं वा स लग्नश्चरणयोस्तव ।
तवाऽमलसरोजानां सुरभिर्हृदये मम ।

स्रावयति महानन्दं, श्रृणोत्यपूर्वगीतिकाम् ।
आलोकं च तथा छन्दो नित्यं नवनवं हि च ॥
सा वीणा वाद्यतां मातर्माद्यतां धरणीतलम् ।
सकृद् विस्मारय त्वं मां पृथिव्यां को जनो महान् ।
कः क्षुद्रः कोऽथवा दीनो धनी कः कश्च सम्मुखे ।
कश्चाऽवतिष्ठते पश्चात्, कस्य वा च जयोऽभवत् ।
अभूत् पराजयः कस्य, वृद्धिः कस्याऽभवच्च वा ॥
कस्य वा क्षय एवाऽभूद् उत्तमः को जनस्तथा ।
को मन्दः कश्च ऊर्ध्वे वा कश्च निम्ने ह्यवस्थितः ॥
उच्चाः सर्वे तथा नीचाः क्षुद्रस्य जगतो जनाः ।
गीतरवेण चैकेन भवन्तु ग्रथितास्तव ।
स्थास्यन्ति पतिताः पादपल्लवे माल्यवत् सुखम् ॥
विकास्य मधुरां मूर्तिं मानसमध्य एहि मे ।
कुन्दकुसुमवर्णाभे तिष्ठ सुन्दरहासिनि !
हस्ते धृत्वा च वीणां ते वीणापाणे ! रविः शशी ।
तारकाश्च तथा नृणां पङ्क्तधारास्तथा यति ।
प्लवमानाश्चलिष्यन्ति सङ्गीतस्त्रोतस्तव ।
अनादिकालपान्थाश्च तत्र च द्रक्ष्यते मया ।
ऊर्ध्वे व्योम्नि महाकालो वादयन्नतिरंहसा ।

छन्दसा छन्दसा तालान्, दशदिगङ्गनागणः ।
केशपाशान् श्लथीकृत्य दशदिग्भ्यश्च नृत्यति ॥
इत्युक्त्वा च कविस्तावत् प्राकाशयत् क्षणात् परम् ।
वचसा करुणार्द्रेण रघुकुलरवेश्छविम् ।
इतिहासकथां पुण्यां पुराणीं राघवस्य ताम् ।
असहनीयं दुःखं तत्सहमानस्य सन्ततम् ।
दाहयित्वा भृशं जन्म ह्यविक्रान्तं गतञ्च वा ॥
असीमः स निराश्वासो जीवनान्तदिनावधिः ॥
कविस्ततोऽवदच्, 'चिन्तां वारैकं कुरु मानसे ।
कथमेवं दिनं तच्च अतिक्रम्य गतं पुनः ॥
यदा ते वनमार्गेण धृत्वा मलिनवल्कलम् ।
चलितो लक्ष्मणो भ्राता नवीनो वयसा च सः ।
प्रायो लीना विषादेन सीता म्लानछविर्यथा ।
आभरणविहीना सा ह्यनुयात्री नवा वधूः ।
प्रस्थानरथमारूढाः, नृपतिपुरमध्यतः ।
हाहाकारध्वनिस्तत्र उत्थितः—सकलाः प्रजाः ।
क्रन्दन्ति श्रेणिबद्धास्ता; पथि किमीदृशे गृहे ।
कदेदृग् वज्रपातोऽभूद्—अभिषेको भविष्यति ।
तस्य उत्सवतः पूर्णा आनन्देन चतुर्दिशः ॥

निमेष-झञ्झया तावन् मङ्गलवर्तिकावली ।
निर्वाणत्वं गता तेन तमश्छन्ना दिशोऽभवन् ॥
चिन्तय मनसा राजन्नपरेद्युर्यदाऽऽगतः ।
कुटीरं निभृतं तत्र श्रीरामः सहलक्ष्मणः ।
अपश्यज्जानकी नास्ति-जानकि जानकीति च ।
आर्तरोदनशब्देन कानने कानने भ्रमन् ।
विचचाराऽऽह्वयन् रामो, महारण्यं तमोमुखम् ।
आलोक्य नीरवं तस्थौ, पश्य शेषोऽस्य कुत्र वा ॥
तद्दिनस्य कथा-चिन्तां मनसा कुरु भूपते !
एतावतो विषादस्य एतावद्विरहस्य च ।
इयत् साधनवित्तं सा सीता राजसभाऽऽगता ।
प्रणम्य रघुराजं तं प्रस्थानसमयोचितम् ।
लज्जाभिमानतो देवी द्विधाभिन्ने धरातले ।
अदर्शनं गता सद्यः, सर्वदिनानि तान्यपि ।
अतिक्रान्तानि गच्छन्ति, चिह्नं कुत्र न विद्यते ।
तस्याऽसहस्य शोकस्य, नाऽङ्कयित्वा धरातले ।
असीमदाहरेखां स गतो, द्विधा धरातलम् ।
संयुक्तं पुनरेवाऽभूद्, दण्डकस्य वने पुनः ।
प्रस्फुटन्ति च पुष्पाणि, सरय्वाश्च तटे तथा ।

दोदुल्यन्ते समीरेण हिल्लोलिताः पुनः पुनः ।
श्यामरेखाः प्रफुल्लाश्च पूर्ववत् तृणपङ्क्तयः ॥
एक एव स्वरः किन्तु तस्य दिनस्य केवलम् ।
दूरं बहु बहु व्याप्य क्रन्दित्वा सचिरं दिनम् ।
विधुरं कुरुते चित्तं मिष्टकरुणतानतः ॥
तन्महाप्राणमध्ये तु या महारागिणी स्थिता ।
ध्वनिताऽऽसीच्च तद्गीतम् अद्यापि मानवश्रुतौ ।
वादयति महागीतरवेण, तत्परं कविः ।
कुरुपाण्डवसङ्ग्रामवार्ता-कथामुवाच ह ॥
सर्वं भूमण्डलं घोरा गृहविवाहदमत्तता ।
व्याप्तवती, यमौ वृक्षौ पार्श्वापार्श्वि च वर्धितौ ॥
अग्निराशिर्महांस्तत्र तयोर्घर्षणतोऽज्वलत् ।
आरण्यः परिवेशः स महादावानलेन च ।
(क्रमशो विस्तृतिं प्राप्य) ग्रस्तोऽभूत् परिणामतः ॥
एकस्मात् पर्वताज्जातं यथा स्त्रोतस्विनीद्वयम् ।
शीर्णे विद्वेषधारेते सरिसृपगती तथा ।
निष्ठुरेणाऽभिमानेन मिलिते स्तः परस्परम् ॥
सर्वेषां पश्यतामेव यावत् क्षत्रियशोणितम् ।
भारतस्योपनीतं तद् धरणी त्रासिताऽभवत् ।

चक्षुषां सम्मुखे मग्नं क्रमशस्तत् तटद्वयम् ।
आत्मपरप्रभेदश्च सम्पूर्णां विस्मृतिं गतः ॥
निर्मूलीकृत्य गेहस्य बन्धनं धावति द्रुतम् ।
रक्तधारा–ततो जातः फेनिलो मरणाम्बुधिः ।
विश्वमवस्थितं तत्र कृत्वा निःश्वासरोधनम् ॥
निमील्य शतमक्षीणि निर्वाप्य सूर्यतारकाः ।
गगनं कम्पितं तस्थौ; युद्धवन्या यदा गता ।
सुवर्णभारतं प्राप्तं शून्यां महाश्मशानताम् ॥
भूशय्यापातितं सर्वं राजगृहमितस्ततः ॥
रक्ताक्षी भीषणा शान्तिरासीना नतनेत्रतः ।
शोणितपङ्कशय्यायां दत्तदृष्टिर्धरां प्रति ॥
मुखे तस्या वचो नास्ति, खेदो बहुदिनात् परम् ।
दूरितं सर्वविच्छेदो मरणे विलयं गतः ॥
नरमेधो महांश्चाऽपि द्वेषहुताशने तथा ।
समाप्तः, कामनाः सर्वाः प्रपूर्य सकलं च तम् ।
दम्भं सञ्चूर्ण्य आसीनास्तदा ते पञ्चभ्रातरः ।
स्वर्ण-सिंहासने शून्ये, विषादतमसाऽऽवृतः ।
प्रासादः स्तब्धतां प्राप्त-एति श्मशानभूमितः ।
हाहाकारध्वनिस्तीव्रो दीर्घो मर्मन्तुदो रवः ।

राजपुरस्त्रियां तासामनाथानां पुनः पुनः ॥
अवदन् द्वारिणस्तत्र श्रेणिबद्धाः समुत्थिताः ।
'जयन्तु पाण्डुपुत्रा' स्तद् परिहासोऽद्य मन्यते ॥
मिथ्या च मन्यते सर्वं, व्याप्य सर्वं दिनं च तत् ।
भारतं ह्योऽट्टगर्जेन प्रपूर्याम्बरमण्डलम् ।
त्यक्त्वा कुल भयं लज्जां राजशोणितधारया ॥
अकरोद् होलिकां क्रीडां सा भूमिश्च परेद्यवि ।
चिताभस्मविलिप्ताङ्गी एका संन्यासिनी यथा ।
अङ्गमावृत्य शोकार्ता शून्यश्मशानभूमितः ।
उपविष्टा, विलीनाश्च सर्वे कौरवपाण्डवाः ।
अभवन् नीरवश्चाऽपि रणरङ्ग स एव च ।
भस्म नास्ति चितावह्नेस्तस्याऽति भैरवस्य वा ॥
यस्या भूमेः कृते जातं घाताघाति परस्परम् ।
साऽद्य कस्य न तज्जाने, स राजा कुत्र वा स्थितः ।
राजधानी च कुत्राऽऽसीच्चिह्नं तस्य न विद्यते ॥
तथापि कुत आयाति सस्वरस्त्वधुनाऽपि च ।
यथा विराजमानः स समर-सागरोऽमरः ।
आदत्तः नूतनं कायम् एक विराटगानतः ॥
अथ महाप्रयाणं तत् समरे विजयात् परम् ।

सफलाऽऽशासमुत्पन्नो विषादः स महानपि ।
चिरन्तनमनुष्याणां प्राणेभ्यः सम्प्रयच्छति ।
उदासीनां परां शान्तिम्, हा एतस्मिन् धरातले ।
वर्षे वर्षे वसन्ताश्च अनन्ताः शिशिराः कति ।
प्रपूर्यदिग्दिगन्तानि दुःखेन च सुखेन च ।
हसन्तः प्लाविता जाता, अद्यतनाश्च यादृशाः ॥
कति वा आगता वर्षास्तादृशाः कतिसङ्ख्यकाः ।
गगनमानतं कृत्वा नवीनमेघभारतम् ।
अकरोदश्रुराशीनां पातनं बहुधारया ॥
आयाताश्च प्रयाताश्च लोकाः कति युगे युगे ।
अरुदन् दुःखिनस्तत्र, हसिताः सुखिनस्तथा ।
कृतवांश्च रतिं प्रेमी वयमद्यतना यथा ॥
जगुस्ते केवलं तेषां गानं, विकीर्यते गताः ।
दत्त्वा प्रसार्य हस्तौ तद्, देशे देशे न विद्यते ।
परिमाणं च तस्यैवं प्लवन्ते कति वा कति ॥
श्यामलां विपुलां पृथ्वीं प्रति विमुग्धनेत्रतः ।
दृष्टिं निक्षिप्य तिष्ठामि, को जानाति कथं च वा ।
प्राणाः सर्वे प्रपूर्यन्ते नयनसलिलेन मे ॥
बहूनां मानवानां च प्रेमभिरावृतं तथा ।

बहूनां दिवसानाञ्च सुखदुःखैर्विचित्रिता ।
युगलक्षस्य गानेन म्रक्षिता सुन्दरी धरा ॥
एतद् धरणिमध्ये तु निनादं घोषयन्नहम् ।
वादं वा प्रतिवादं न कर्तुमिच्छामि कञ्चन ॥
यान् दिवासांश्च तिष्ठामि कियतः स्वयमेव च ।
मासस्याऽभिलाषं मे मनसा पूरयाम्यहम् ॥
यस्य यदस्ति तत् तस्य तिष्ठतु न हि काम्यते ।
अधिकारं न कस्याऽपि अधिगन्तुं न कञ्चन ।
शान्तौ स्थातुं समर्थश्चेद् एककोणेऽतिनिर्जने ॥
उत्तोल्य देहि मे वंशी हस्ते च केवलं तव ।
मनः प्राणान् समुद्घाट्य वादयाम्युपविश्यताम् ।
सङ्गीतं नभसो भाले स्फोटयिष्ययामि पुष्पवत् ॥
अन्तराद् वच आहृत्य रचयिष्यामि तेन च ।
आनन्दलोकमेकं तु संसारधूलिजालके ॥
सङ्गीतरसधाराणां करिष्ये सेचनं तथा ॥
सततं स्यन्दते सृष्टिशिखरे त्वतिदुर्गमे ।
अन्तविहीनकालस्य महाकन्दरमध्यतः ।
झर्झरगीतशब्देन विश्वनिर्झरिणी; ग्रहाः ।
ताराः स्वरतरङ्गाश्च शून्ये धावति सर्वदा ।

उद्देश्यहीनतः सर्वे, क्षुद्रवंश्यां ततो मम ।
नेष्याम्याकृष्य सङ्गीतधारां, करपुटं भुवः ।
श्यामं पूर्णं करिष्यामि आनीय गाननिर्झरम् ॥
मधुरार्थवहां वाणीमेकां च वायुना सह ।
मिश्रयिष्याम्यहं तत्र नवीनाषाढमासि च ।
रचयित्वा नवां मायां छायां घनतरां तथा ।
अङ्कयिष्यामि; यास्यामि वसन्तवेषसज्जिताम् ।
कृत्वा तनुं वसन्तस्य, करिष्ये धरणीतलम् ।
नभो-गात्रं समुद्रस्य जलं छायां वनस्य च ।
रञ्जितानि तथा किञ्चिदधिकनूतनाऽऽभया ॥
माधुरीकृत्य संसारे स्वरांश्च कतिसंख्यकान् ।
स्थापयित्वा गमिष्यामि; एकं वा कण्टकद्वयम् ।
विदूरीकृत्य संसाराद् गृह्णाम्यवसरं ततः ॥
सुखहासी भवेत् तस्मादुज्जवलतर एव च ।
सुन्दरं च भवेदेवं नयनसलिलं तथा ॥
स्नेहसुधाविलिप्तं च वासगृहतलं पुनः ।
आत्मीयतरमेव स्यात्, प्रेयस्या नयनाधरम् ।
आपूर्य मधुनाऽल्पेन यास्याम्यहं, ततस्तथा ॥
शिशिरबिन्दुवच्छुभ्रं तिष्ठेच्छिशुमुखोपरि ।

स्नेहोऽधिकतरः कश्चिन्; न हि बोधयितुं क्षमः ।
स्वयं न बुध्यते चैव नरो भ्रमति केवलम् ।
कथां मृगयमाणश्च, यथा कूजति कोकिलः ।
पञ्चमस्वरमाश्रित्य याचते च स्वरांस्तथा ॥
अहं दूरीकरिष्यामि किञ्चिद् व्याकुलताञ्च ताम् ।
प्रकाशस्य व्यथां किञ्चिद् शमयिष्याम्यहं तथा ।
प्रस्थानात् प्राक् कथा द्वित्रा मधुराः स्थापयामि च ॥
मातर्भारति ! तिष्ठ त्वं मदीयहृदयासने ।
प्राणानारार्तिरेषा तु त्वदीये चरणे मम ॥
नाऽन्यं कं द्रष्टुमिच्छामि न कस्याऽऽशां करोमि वा ।
जातं बहु सुखं दुःखं, विमुखाः कति बान्धवाः ।
उत्सुका उन्मुखाश्चैव म्लानाश्च प्रणयाः कति ॥
केवलं चरणावेतौ राजेते हृदये मम ।
ध्वनति सा चिरं वीणा स्नेहस्वरेण केवलम् ।
आयाहि वत्स आयाहि-आह्वयत्यन्तरे मम ॥
हासं च क्रन्दनं पश्चात् परित्यज्य समं तथा ।
मिथ्या च बन्धनं सर्वम्-आयाहि, अत्र विद्यते ।
चिरं वायुर्वसन्तस्य च्छाया च चिरनन्दिनी ॥
श्रेयस्तदेव मे मातर्गच्छतु गच्छदेव यत् ।

अतोऽहं भवतीमेव वृणोमि जीवनावधि ।
कमलगन्धयुग्माय पादाय कोमलाय ते ।
वारं वारं प्रणंस्यामि' इत्युक्त्वा भक्तितस्ततः ।
कविस्तत्रैव गानस्य सुसमाप्तिं समानयत् ।
आसीनो मुग्धनेत्रः सन्नवातिष्ठत तस्य च ।
वीणाझङ्कारवद्दध्मुः प्राणांश्च हृदयं तथा ॥
राजा पुलकितो भूत्वा उद्गताश्रुः परित्यजन् ।
आसनादवतीर्णोऽभूद् भुवस्तले; भुजद्वयम् ।
प्रसार्योद्वेलचित्तेन कविं जग्राह वक्षसि ॥
उवाच च, 'कवे धन्य आनन्देनाऽऽप्लुतं मनः ।
वदिष्यामि किमन्यत्ते चिरं तिष्ठ सुखेन हि ।
चिन्तयन् न स्थिरीकुर्यां तत् किं दास्यामि यच्च ते ॥
केन त्वां वोपहारेण तोषयिष्याम्हं पुनः ।
यदस्ति राजभण्डारे सर्वमेव ददानि ते ॥'
प्रेमोच्छ्वसितहर्षाश्रुपूर्णनेत्रोऽवदत् कविः ।
'पुष्पमालामिमां देहि गले मे कण्ठतस्तव ॥'
केशानावेष्ट्य माल्येन कविः सञ्चरते पथा ।
यान्ति शिबिकया के वा रथमारुह्य केचन ।
कर्मेच्छुमानवा नाना दिशो नाना प्रकारतः ॥

मुग्धं नेत्रद्वयं तस्य कल्पधेन्वाः पयोऽमृतम् ।
दोग्धीव मनसा केशपाशान् संयम्य तत्र च ।
सन्ध्यावदरुणं वासो वसाना कविकामिनी ।
वातायनस्य पार्श्वे सा एकाकिनी ह्युपाविशत् ।
मुखे प्रस्फुटितस्तस्य मुखहासः, कपोतकाः ।
परिवृत्य समन्ताच्च नृत्येन कूजनेन च ।
भ्रमन्ति श्रेणिबद्धास्ते, धीरमुत्तोल्य डामिनी ।
यवस्य कणिकास्तेषां चञ्चूपुटे ददाति च ॥
अङ्गुलीषु चलन्तीषु मनस्तस्या अचिन्तयत् ।
कति कति कथास्तावन्, निक्षिप्य नयने पथि ।
सहसा च कविं दृष्ट्वा बाहुं सञ्चाल्य साऽकरोत् ।
मृदुझङ्कारशब्देन करकिङ्कणिकाध्वनिम् ॥
चिक्षेपाऽतुलहासा तम् आवेष्ट्य हासजालिकाम् ॥
उल्लसितं कवेश्चित्तम्, अतिसत्वरमागतः ।
सम्मुखं मृदुहासेन सकौतुकमुवाच सः ।
'पश्य किमानीतं बाले—नानालोकैर्महीपतेः ।
नानारत्नानि लब्धानि; तव कण्ठोपयोगिनी ।
यत्नेनैषा मयाऽऽनीता राजकण्ठस्य मालिका ॥'
एवमुक्त्वा कविर्मूर्ध्नं, उन्मुच्य तां प्रियागले ।

उत्तोल्य उद्यतो दातुं, रोषात् कविप्रिया ततः ।
रुद्ध्वा करौ मुखं पश्चात् कुर्वत्यवस्थिताऽभवत् ॥
मिथ्या-छलनया वक्त्रे कोपं करोति भामिनी ।
जागर्ति हृदये किन्तु रतिभावातिशायिता ॥
गर्वेण पूर्णतां प्राप्तो ह्यनुरागः समुत्थितः ।
हृदये चाऽभवत् तस्याः सुखमुच्छलितं तथा ॥
कविरचिन्तयन् मेऽद्य अप्रसन्नो विधिः खलु ।
आसन्नां विपदां घोरां निरीक्षेऽहं पुरो मम ॥
विषण्णं च मुखं कुर्वन्नुपविश्य स्थिरं स्थितः ।
नयने ऊर्ध्वमुन्मील्य; सुकवेर्ललना ततः ।
वक्रीभूयार्धदेहेन विरम्य च क्षणे क्षणे ।
चौरकटाक्षतोऽपश्यत् पत्युर्भावं मुखस्य सा ।
ददर्श गुण्ठनं मुक्त्वा जहास उच्चकण्ठतः ॥
तुच्छा सा छलना तस्याः प्लवमाना गताऽभवत् ।
सत्वरमुपसृत्याऽथ समीपमागता सती ।
वक्षसि पतिता पत्युर्लीयमानमुखा ततः ।
हासेन क्रन्दनेनैव गृहीत्वा बाहुबन्धतः ।
कविं कण्ठे, चुचुम्बाऽस्य स्वेच्छया शतशो मुखे ॥
कविश्च विह्वलप्रायो विस्मितो हर्षतस्ततः ।

न प्राप्तवान् वचः किञ्चित् कुर्वन्नन्वेषणं कुतः ॥

माल्यमादाय तां साध्वी सादरं पर्यधात् स्वयम् ।
स्वगले सा, कविर्भक्त्या आवेगेन ह्यचिन्तयत् ।
मनसा ह्यवलोक्यैवं प्रेमपूर्णं तदाननम् ।
माल्यैक-बन्धनाऽऽबद्धा लक्ष्मीः सरस्वतीसमा ॥



# नमस्कारः

अरविन्द रवीन्द्रस्य नमस्कारं गृहाण मे ।
हे बन्धो देशबन्धो हे स्वदेशस्यात्मनो भवान् ।
वाणी-मूर्तिर्न मानस्त्वत्कृते सुखं धनं न च ॥
क्षुद्रं दानं तथा न त्वम् अयाचथाः कदापि वा ।
क्षुद्रां कृपाञ्च भिक्षार्थं न च त्वमातुराञ्जलिम् ।
प्रसार्योपस्थितः क्वाऽपि, जागरितोऽवतिष्ठसे ।
सर्वबाधाविनिर्मुक्तः परिपूर्णत्वहेतुतः ॥
त्वत्कृते नर-देवोऽपि चिरं रात्रिं चिरं दिनम् ।
स्थितस्तपसि मग्नः सन्, कविर्वज्रनिनादतः ।
यदर्थं गीतवान् गीतं महासङ्कटवर्त्मने ।
याताः सर्वे महावीरा, लज्जानतशिरास्तथा ॥
विश्रामः सन्निधौ यस्य, मृत्युर्विस्मितवान् भयम् ॥
विधातुः श्रेष्ठदानं तद् देशस्य प्रतिभूर्भवान् ।
अकुण्ठयाऽऽशया चैव सत्यगौरवदीप्तया ।
स्वस्य पूर्णाधिकारत्वम् अयाचद् दीप्तभाषया ।
अखण्डप्रत्ययेनैव, किमद्य प्रार्थनां तव ।
विधाता श्रुतवान् येन तदीयो वाद्यते खलु ।

जयशङ्खस्त्वदीये किं दक्षिणस्मिन् करेऽददात् ।
दुःखस्य दारुणं दीपं कठोराऽऽदरतोऽद्य तत् ?
ज्योतिर्यस्य ज्वलत्येवं भिन्दत् देशस्य तामसम् ।
ध्रुवनक्षत्रवद्वीर ! जयस्तव जयः खलु ॥
पातयत्यश्रु कोऽद्यत्वे को वा भयं करिष्यति ।
कापुरुषः स को वा यः सत्यं खर्वीकरिष्यति ।
आत्मनो रक्षणार्थाय, कः सोऽमानुष एव हि ।
वेदनादुःखतो यस्तु न लभेत बलं तव ॥
मृड्ढि दुर्बलनेत्रे ते, कुरुष्व अश्रुमार्जनम् ।
दैवतं दीपमादाय हस्ते यो भवमागतः ।
वद तं रुद्रदूतं को राजा दण्डयितुं क्षमः ?
बन्धनशृङ्खलं तस्य कृत्वा चरणवन्दनाम् ।
नमस्करोति कारा च स्वागतीकुरुते च तम् ॥
रुष्टो राहुर्विधातुः स सूर्ये बाहू प्रसार्य च ।
विलुम्पति स्वयं नूनं छायावच्च परक्षणे ॥
दण्डो ! दण्डस्तदर्थं हि यश्च दण्डभयाद् बहिः ।
आगन्तुं न समर्थः स्याल्लङ्घयन् निजनिर्मितम् ।
प्राचीरावरणं मिथ्या तथा कपटवेष्टनम् ॥
दृष्टिं निक्षिप्य धर्मेभ्यः कदाप्येव नपुंसकः ।

स्वतन्त्रो निरपेक्षो न तथा निर्भयमानसः ।
भाषतेऽन्यायमन्यायं, न हि स्वीकुरुते च यः ।
विधिदत्तं मनुष्यत्वस्याऽधिकारं चिरन्तनम् ।
स्वकीयं निस्त्रपोलोभात् सभामध्ये भयात्तथा ।
दुर्गत्यै गर्वितो यश्च, तथा यस्य च सर्वदा ।
देशस्य दुर्दशां मूलधनीकृत्य वणिक् कृतिः ।
अन्नं यस्य ह्यकल्याणं मातुः शोणितवत् तथा ॥
भीरुः स नतमूर्धा सन् चिरं दण्डभयेन हि ।
कारायां नित्यमाबद्धो बहिर्देशं स्थितोऽपि च ॥
बन्धनपीडतोत्पन्ने दुःखे तथाऽवमानने ।
तवेमां पश्यतो मूर्तिं कर्णयोर्वाद्यते मम ।
आत्मबन्धनसंयुक्ता गीतिरानन्दजा सदा ॥
सङ्गीतं च महातीर्थ-यात्रिणां वै महात्मनाम् ।
आशायाश्चिरजीविन्या उल्लासातिशयस्तथा ।
गम्भीरा निर्भया वाणी उदारमरणस्य च ॥
कवे ! भारतवर्षस्य वीणापाणिर्मुखे तव ।
दृष्टिं सन्नस्य वीणायास्तन्त्र्यां तन्त्र्या ददाति च ।
विपुलां झङ्कृतिं, दुःखमूर्च्छना नास्ति तत्र का ।
क्षुद्रा लज्जा च तस्यां न, न त्रासो न च दीनता ॥

श्रृणोमि च ततोऽद्याऽहं कुतोऽपि झञ्झया सह ।
समुद्रगर्जनं घोरं भिन्दत् पाषाणपिञ्जरम् ।
अन्धवेगेन पार्वत्या नद्या उत्मत्तगर्जनम् ॥
वज्रगर्जन-शब्देन भेरी-मन्त्रेण भैरवः ।
जागरयति मेघानां पुञ्जं तरङ्गमध्यतः ॥
अस्योदात्तस्य गानस्य रवीन्द्रस्य नमस्कृतिम् ।
अरविन्द ! गृहाण त्वं सश्रद्धां देशनायक ! ।
प्रणंस्यामि ततस्तञ्च यो हि क्रीडाछलेन वै ।
करोति नूतनां सृष्टिं भीषणां प्रलयाग्निना ॥
ददाति मरणात् प्राणान् विपद् वक्षसि सम्पदम् ।
लालयति, सहासञ्च भक्तं प्रेरयति तथा ।
कण्टकाकीर्णकान्तारे रजन्यां घोरतामसे ॥
बहुभिरितिहासैश्च सर्वमहत्सु कर्मसु ।
प्रयासे परमे लाभे चरमे सकले तथा ॥
दुःखं मिथ्या क्षतं मिथ्या मिथ्या क्षतिर्भयं मृषा ।
सर्वं, कुत्र नृपो मिथ्या राजदण्डोऽस्य कुत्र वा ।
कुत्र मृत्युः कुतो वा स्यादन्यायस्य प्रपीडनम् ।
अरे भीत, अरे मूढ, उत्तोलय शिरस्तव ।
अहमस्मि असि त्वञ्च सत्यं स्थिरं च विद्यते ॥

—०—

# शिवाजि-उत्सवः

कस्य दूरशताब्द्याः कस्मिन्नेकस्मिन्नख्यात-दिवसे
न जाने अद्य महाराष्ट्राणां कस्मिन् शैले-
अन्धकार उपविशतो हे राजन् शिवाजि,
तव भालम् उद्भास्य भावनेयं तडित्प्रभावाद्-
अवनताऽऽगतां—'एकेन धर्मराज्यपाशेन
खण्डं छिन्नं विक्षिप्तं भारतम् बन्धीकरिष्यामि ।'
तदाऽयं वङ्गदेश उच्चकितः सन् स्वप्ने
बहिर्धावन्नागतो, नोत्थितस्तस्य प्राङ्गणे
शुभः शङ्खनादः ।
शान्तमुखेन विस्तीर्य स्वस्य कोमलं निर्मलं
श्यामलमुत्तरीयम्
तन्द्रातुरः सन् सन्ध्याकाले शतेन परिजनैः सह
आसीद् धृत्वा वक्षसि ॥
ततः परमेकदा महाराष्ट्राणां प्रान्तरात्
तव वज्रशिखा अङ्कितवती दिग्दिगन्तेषु
युगान्तस्य विद्युद्वह्निना महामन्त्रलेखाम् ।
प्रलय-प्रदोषे मोग़लानां सोष्णीषं-शीर्षं

प्रस्फुटितमभवत् पक्वपत्रवत् ।
तद्दिने वङ्गा न श्रुतवन्तो महाराष्ट्राणां
तस्मिन् वज्रनिर्घोषे का वार्ता आसीत् ॥
ततः शून्या अभवत् झञ्झाक्षुब्धायां निबिडायां
निशीथिन्यां दिल्लीराजशाला ।
शवलुब्धगृध्राणाम् ऊर्ध्वस्वरवीभत्सचीत्कारै-
र्मोग़लमहिमा
अरचयच्छ्मशानशय्याम् ; मुष्टिमेयभस्माकारेण
तस्य सीमा अवशिष्टा जाता ।
तदा तस्मिन् वङ्गप्रान्ते पण्यविपणीनां
पार्श्वैकस्मिन् निःशब्दचरणा
सुरङ्गपथस्य अन्धकारेण आनयद् वणिग्लक्ष्मी
राजसिंहासनम्; वङ्गास्तां स्वकीयगङ्गोदकेन
अभिषिच्य निःशब्दतोऽगृह्णन् ।
वणिजां मानदण्डः स शर्वर्यां प्रभातायाम्
अदृश्यत राजदण्डरूपेण ॥
तदा त्वं कुत्र आसीर्हे भावुक वीरसंन्यासिन्
क्व वा तव नाम ?
गैरिकी तव पताका क्व धूल्यां मृण्मयीभूता-
तुच्छोऽस्य परिणामः ।

वैदेशिकरचितम् इति-वृत्तम् अट्टहासरवेण

दस्युरित्युक्त्वा त्वामुपहसति-

तव यावत्यः पुण्याश्चेष्टास्तस्करस्य निष्फलाः ।

प्रयासा इति सर्वे जानन्ति ।

अयि इतिवृत्तकथे ! क्षमस्व मुखरं भाषणम्,

अयि मिथ्यामयि ! तव लिखनोपरि

विधातुरव्यर्थं लिखनम् अद्य जयि भविष्यति ।

यच्च न मरणीयं तत्कथं तव परिहासवाणी

आवृत्य रक्षेत्;

जानामि निश्चितं या तपस्या सत्या

त्रिदिवे न कोऽपि तां बाधिष्यते ॥

हे राजतपस्विन् ! वीर, तव सा उदारा भावना

विधातुर्भाण्डारे सञ्चिता तिष्ठति,

कालः किं तस्य एकमपि कणं हर्तुं शक्नुयात् ?

तव स प्राणोत्सर्गः, स्वदेशलक्ष्म्याः पूजागृहे

तव सत्यसाधनम्; को जानीयाद्

अभवतां चिरयुगयुगान्तरस्य कृते

भारतस्य धनम् ।

अख्याताऽवज्ञातभावेन दीर्घं कालं तिष्ठन् ।

हे राजवैरागिन् !

गिरिदरीतले वर्षाणां निर्झरो यथा
शैलं विदीर्य जाग्रदुत्थितः परिपूर्णबलेन;
तथा त्वं बहिरागतः;
विश्वलोकोऽचिन्तयद् विस्मयेन;
यस्य पताका अम्बरम् आच्छादितवती
सा एतावत्कालम् इयती क्षुद्रा सती
कुत्र आवृता आसीत्;
तथाऽहं चिन्तयामि, कविरहमस्मिन् पूर्वस्मिन् भारते
किमेतदपूर्वं पश्यामि—वङ्गानां मङ्गलद्वारे
कथं ध्वनिता कुतस्तव जयभेरी,
शतत्रयवर्षाणां गाढतरं तमिस्त्रं विदीर्य तव प्रतापः
अस्मिन् प्राचीदिगन्ते अद्य नवतरं कं रश्मिं
प्रसार्य पुनरुदितः ।
न म्रियते न म्रियते कदापि यत्सत्यं, शतस्य
शताब्द्याः, न म्रियत उपेक्षया,
अपमानेन न अस्थिरं भवति
आघातेन न टलति च ।
सर्वे यं स्थिरीकृतवन्तः कर्मपारावारे
स कदा निःशेषीभूतः,
आगतं तत्सत्यं तव पूजातिथिवेषं

दधद् भारतस्य द्वारम्,
अद्यापि तस्य स मन्त्रो भविष्यदुद्दिश्य
तस्य तदुदारं नयनम् एकदृष्ट्या वीक्षमाणम्
अत्र किं महद्दृश्यं पश्यति
को जानाति ।
अशरीर हे तापस ! केवलं त्वं तपोमूर्तिं
दधद् आगतोऽद्य, तव पुरातनी सा शक्ति-
र्वहन्ती आनीतवती तव तत्कार्यम् ।
अद्य नास्ति तव ध्वजा, नास्ति सैन्यं न युद्धाश्वाः
खरतराणि अस्त्राणि च ।
अद्य पुनर्न वाद्यते आकाशम् उन्मादयन्
हर हर हर इति ध्वनिः ।
केवलमद्य तव नाम पितृलोकतोऽवनम्य
आगतम्-आह्वयच्च, मुहूर्तेन हृदयासने
त्वामेव वृतवन्तो हे स्वामिन्
वङ्गीयानां प्राणाः ।
वाक्यमेतन् न कोऽपि चिन्तितवान्-
एतच्छाताब्दीत्रयं व्याप्य, स्वप्ने न जागरितं ।
तव महानाम

वङ्गान् महाराष्ट्रांश्च विना रणम् एकीकरिष्यति–
तव तपस्यातेजो दीर्घं कालम् अन्तर्धाय
स्थितम्; अद्य अकस्मान् मृत्युहीन–
वाणीरूपेण आनीय दास्येत नवान् प्राणान्
नवं प्रभातञ्च ।
महाराष्ट्राणां प्रान्ततस्त्वमेकदा
धर्मराज यदाऽऽह्वयः,
तेन भैरवरवेण राजेति त्वां न ज्ञातवान्
न मानितवान् न च लज्जां प्राप्तवान् ।
तव कृपाणदीप्तिर्यदा एकदा उदिता अभवद्
वङ्गानाम् आकाशे–तस्मिन् घोरे दुर्योगदिने
तां रुद्रलीलां नाऽवबुध्ये,
निलीनः स्थितस्त्रासेन,
अद्य हे अमरमूर्ते ! समुन्नतभालेन
मृत्युसिंहासन उपविष्टः स्थितः,
यो राजकीरीटः शोभते तस्य दिव्यं ज्योतिः
कदापि कस्मिन् काले न लोपं यास्यति ।
हे राजन् त्वामद्य ज्ञातवान् ज्ञातवान्
हे राजन् ! त्वं महाराजः ।
तव राजकरमादाय अष्टकोटिसङ्ख्यका

वङ्गनन्दना अद्य दण्डायमाना भविष्यन्ति,
वयं तदा न श्रुतवन्तः–
अद्य तव आदेशं शिरसा दधतो ग्रहीष्यामः ।
कण्ठेन कण्ठेन वक्षसा वक्षसा भावेन भावेन
सर्वद्देशो मिलितो भविष्यति तव ध्यानमन्त्रेण,
ध्वजीकृत्य उत्तोलयिष्यामः दरिद्रस्य बलं
वैरागिण उत्तरीयम् ।
अस्मिन् भारते एकं धर्मराज्यं भविष्यति–
एतन्महावाक्यं सफली-करिष्यामः ।
महाराष्ट्रीयैः सह अद्य वङ्गीयाः–
एककण्ठेन वदत जयतु शिवाजिः ।
महाराष्ट्रीयैः सह अद्य हे वङ्गीयाः
महोत्सवे सज्जिताः सन्तः एकीभूय चलत;
अद्य एकस्मिन् सभातले
भारतस्य पूर्वं पश्चिमं दक्षिणं वामं च
तव पुण्यनाम्ना एकत्र भुञ्जतां
सह सर्वैरेकं गौरवम् ॥



# सुप्रभातम्

रुद्र तव दारुणा दीप्तिर्द्वारं भित्वा आगता–
स्वप्नजालं छित्त्वा वक्षसि विद्धो विद्युद्बाणः,
चिन्तयन्नस्मि, 'उत्थास्यामि न वा किम्'?
तन्द्रा जडिमानं मार्जयन् रुद्धे नयने
उन्मीलयामि न वा ?
सपद्येव ईशान तव विषाणं वादयन्नुत्थितम्
वाद्यते गर्जद् वाद्यते रे–
दग्धमेघस्य रन्ध्रे रन्ध्रे दीप्तगगनमध्ये रे ।
पूर्वभुवनं सचकितं लज्जया रक्तवदनं
सज्जागरितम् ।
भैरव त्वं केन वेषेण आगतः–
ललाटे नागी फुस्फुसायते ।
रुद्रवीणायां किमेषा ध्वनिता सुप्रभातस्य रागिणी ?
मुग्धाः कोकिलाः क्व कूजन्ति शाखासु
पुष्पाणि क्व प्रस्फुटन्ति वनानाम् अन्तराले ?
बहुकालात् परं हठादिव अमानिशा भेदं गता ।
खड्गस्तव तामसमहिषं द्विधा कर्तितवान्
व्यथया पूर्णं भुवनम् ।

झर्झरायमाणो रक्तालोको
गगने गगने वर्षति ।
कोऽपि जागरित्वा कम्पमान उत्तिष्ठति,
कोऽपि स्वप्ने बिभेति ।
तव श्मशानकिङ्करगणो दीर्घनिशायां बुभुक्षितः
शुष्कम् अधरं लेलिह्यमानः फूत्करोति,
अतिशयस्ते अस्माकं गृहे नृत्यन्ति
प्राङ्गणोपरि ।
गृहस्थ रे द्वारम् अपावृणु द्वारम् अपावृणु,
निलीयमानः सन् मा तिष्ठ मा तिष्ठ–
हृदयपिण्डं छित्त्वा भाण्डं प्रपूर्य देहि रे ।
अरे दीनप्राण कस्य मोहाय वक्षसि मिथ्यास्नेहो रे ।
उदयस्य पथि श्रूयते कस्य वाणी
भयं नास्ति अरे भयं नास्ति
निःशेषं यः प्राणान् दास्यति क्षयो नास्ति
तस्य क्षयो नास्ति ।
हे रुद्र तव सङ्गीतमहं कथं गास्यामि हे स्वामिन्
कथय मे तत् ।
मरणनृत्येन च्छन्दो मिलयित्वा
हृदयडम्बरुं वादयिष्ये ॥

भीषणदुःखेन डल्लकं प्रपूर्य
तव अर्घ्यं सज्जीकरिष्यामि ।
आगतम् प्रभातम् आगतम्,
तिमिरान्तकः शिवः शङ्करः केनाऽट्टहासेन हासितः ।
जागरिता यस्तस्य चित्तं भीमानन्देन प्लवते;
जीवनं समर्प्य हे जीवनेश्वर तव परिचयः प्राप्तव्यः
जित्वा च सकलां शङ्कां तव डङ्का च
वादयितव्या ।
श्रेयोऽभूदेतद् झञ्झावायुना
प्रलयस्य जटा विस्तीर्य पतिता ॥
श्रेयोऽभूदेतन्मेघस्य सिंहासनेन
प्रभातम् आगतम् ।
मिलनयज्ञे अग्निर्ज्वालयिष्यते
प्रलयशिखाया दाहनेन ।
प्रभाते तिमिररात्रे महासम्पत् लप्स्ये त्वां
हारयित्वा सर्वाः सम्पदः
चरणे तव स्पर्शयन्
मृत्युं करिष्यामि अमृतम् ॥



# उज्जीवनम्

भस्मापमानशय्यां मुञ्च पुष्पधन्वन् !

रुद्रवह्नितो गृहाण ज्वलदर्चितनुम्–

यन्मरणीयं तन् म्रियताम्,

जागृहि अविस्मरणीयां ध्यानमूर्तिं दधत् ।

यच्च रूढं यच्च मूढं तव, यच्च स्थूलं दग्धं भवतु

नित्यं नवो भव ।

मृत्युतो जागृहि पुष्पधन्वन्

हे अतनो ! वीरस्य तन्वां तनुं गृहाण ।

मृत्युञ्जयः शिरसि मृत्युमाहत्य दत्तवान् ।

तस्मात्मृत्युतोऽमृतमानीय देहि ।

दिव्यो दीप्यमानः स दाह उन्मुञ्चतु

अग्नेरुत्सप्रवाहम् ।

मिलनं प्रखरीकरोतु, विच्छेदं करोतु दुःसहं सुन्दरम् ।

मृत्युतो जागृहि पुष्पधन्वन्

हे अतनो वीरस्य तन्वां तनुं गृहाण ।

दुःखसुखवेदनाभिर्बन्धुरः यः पन्थाः–

तस्मिन् दुर्गमे चलतु प्रेम्णो जयरथः–

रजन्यास्तिमिरतोरणे मन्त्रितो भविष्यति

स गम्भीरो रथचक्रनिर्घोषः ।

उल्लङ्घ्य तुच्छौ लज्जात्रासौ

हृतात्मा उद्वेग उल्लासश्च

उच्छलितौ भविष्यतः ।

हे अतनो वीरस्य तन्वां तनुं गृहाण ।



# पूजयित्री

(पुजारिणी)

नृपतिर्बिम्बिसारो नत्वा बुद्धं मृगयित्वाऽगृह्णात्
तस्य पादनखकणम् ।
संस्थाप्य निभृत-प्रासादकानने
तस्य उपरि अरचयद् यत्नेन-
अतिमनोरमं शिलामयं स्तूपं
शिल्पशोभायाः सारम् ॥
सन्ध्यावेलायां शुची वाससी परिधाय
राजवध्वो राजबालाश्च डल्लकेषु पुष्पाणि
सज्जीकृत्य आगताः
स्तूपपादमूले स्वर्णस्थाल्यां स्वहस्तेन प्राज्वालयन्
कनकदीपमालाः ॥

अजातशत्रुर्यदा राजा अभवत् पितुरासन उपविश्य
पितुर्धर्मं शोणितस्त्रोतसा
अमार्जयद् राजपुरीतः ॥

आहूय अवदद् अजातशत्रुः सर्वा राजपुरनारीः–
वेदं ब्राह्मणं तथा राजानम् ऋते
नास्ति भवे कश्चित् पूजार्हः–
एतानि कानिचिद् वाक्यानि मनसा सारभूतानि जानीत–
विस्मरय चेद् विपद् भविष्यति ॥

शारद-दिवावसाने तस्मिन् दिने श्रीमती-नामा सा दासी
पुण्यशीतलसलिलेन स्नात्वा पुष्पप्रदीपान् स्थाल्यां वहन्ती
राजमहिषीसमीपमागत्य
तस्याश्चरणौ पश्यन्ती
दण्डायमाना नीरवं स्थिता ।

सभयं कम्पमाना महिषी अवदत्–
एषा वार्ता किं मनसि नास्ति–
अजातशत्रू रटनां कृतवान्
स्तूपे या अर्घ्यं रचयेत्
शूलोपरि सा मरिष्यति अथवा निर्वासनेन ॥

ततः प्रत्यावृत्य सा धीरं बद्धवा अमिताया गृहं गता ।

सम्मुखे संस्थाप्य स्वर्णमुकुटम्–बन्धनं कृतवती
सीमन्त–सीमोपरि सयत्नमङ्कयितुमारेभे
सिन्दूरम्–
श्रीमतीं पश्यन्त्यास्तस्या रेखा वक्रीभूता
कम्पितश्च हस्तः–
अवदन्–निर्बोधे केन साहसबलेन
आनीता पूजा–अधुनैव गच्छ
कः कुतः पश्येद् घट्येत
तेन विषमो विपत्पातः ।
अस्तोन्मुखरवे रश्मेराभायां मुक्तवातायनपार्श्वे
कुमारी शुक्ला एकाकिनी उपविश्य काव्यकथा–
पठने निरता–
सचकिता जाता श्रुत्वा किङ्किणीध्वनिम्–
द्वारे दृष्टिं निक्षिप्तवती,
श्रीमतीं दृष्ट्वा पुस्तकं भूमौ स्थापयित्वा
द्रुतपादाभ्यां समीपं गता–
सावधानतोऽवदत् तस्याः कर्णमूले–
राजादेशमद्य को न जानाति
इत्थं किं मरणमुद्दिश्य धावनं युज्येत ।

अर्घ्यस्थालीं नयन्ती द्वाराद् द्वारान्तरं गत्वा
प्रत्यावर्तमाना श्रीमती
सा दीर्घं चिकुरम् –
सर्वा आहूय अवदत् हे पुरवासिन्यः
प्रभोः पूजासमय आगतः ।
श्रुत्वा गृहे गृहे का वा अबिभ्यत्
का वा तस्यै अददाद् गालिम् ।
दिवसस्य शेषं ज्योतिर्विलुप्तं
नगर-सौधोपरि–
पन्था जनहीनस्तमसा विलीनः
कलकोलाहलः क्षीणतां गतः ।
आरात्रिकघण्टा अवाद्यत प्राचीनदेवालयगृहे ।
शारदनिशायाः स्वच्छतिमिरे अगण्यास्तारा अज्वलन् ।
सिंहद्वारेऽवाद्यत विषाणं, वन्दिन आरभन्त-
सान्ध्यगानम् ।
द्वार उच्चैरघोषयन् मन्त्रणासभा समाप्तिं गता ।
सचकितास्तदापश्यन् यावन्तः प्रासादरक्षिणः –
राज्ञो विजनकानने मध्ये कथं प्रज्वलिताः
श्रेणिबद्धाः काश्चन् प्रदीपा मालावत् ।
मुक्तकृपाणः पुररक्षकस्तदैव धावन्नागत्य अपृच्छत्-

का त्वम् अरे दुर्मते मरणाय करोषि आरार्तिकम् ?

मधुरकण्ठतोऽशृणोद्–'अहं श्रीमती बुद्धस्य दासी ।'

तद्दिने शारदस्वच्छनिशायां

प्रासादकानने नीरवे निभृते

स्तूपपादमूले हठान् निर्वापिता

शेषाऽऽरात्रिकशिखा ॥



# अभिसारः

संन्यासी उपगुप्तः– मथुरा-
पुर्याः प्राचीरतले
एकदा आसीत् सुप्तः ।
वायुना निर्वापिता नगर्या दीपाः
रुद्धद्वाराणि पौरभवनानि,
निशीथिनीताराः श्रावणगगने घनमेघैरवलुप्ताः ॥
कस्या नूपुरशिञ्जितपदा सहसाऽऽहतो वक्षसि
चकितोऽजागः संन्यासिवरः स्वप्नजडिमा
दूरितः पक्ष्मेण,
रूढप्रदीपज्योतिर्ललाटा
क्षमासुन्दरचक्षुषोः ।
नगर्या नटी चलन्त्यभिसारे यौवनमदमत्ता,
सुनीलवर्णशरीराञ्चला शिञ्जितरववादिताऽऽभरणा
संन्यासिकाये लग्नचरणा
स्तब्धा वासवदत्ता ॥
धृत्वा प्रदीपमैक्षत तन्-नवीनगौरकान्तिम्-
सौम्यं सहासं तरुणं वदनं करुणाकिरणविकचनयने,

तस्य शुभ्रे ललाटे शोभते इन्दुसदृशी स्निग्धशान्तिः ।
आह रमणी ललितकण्ठेन-नयनलग्नलज्जा
दया क्रियेत यदि गृहमेहि मे,
इदं कठिनकठोरं धरणीतलं-
एषा नहि नहि तव शय्या ॥
संन्यासी प्राह करुणवचनेन अयि लावण्यपुञ्जिते-
अधुनाऽपि मम समयो नाऽऽयातो
यत्र यासि याहि धनिनि
समयो यदा आगमिष्यति स्वयं यामि ते कुञ्जम् ॥
सहसा झञ्झा तडिच्छिखया
व्यादाद् विपुलमास्यम् ।
रमणी जाता त्रासकम्पिता, प्रलयशङ्खो-
गगने ध्वनितः,
सपरिहासमट्टहासेन जहास वज्रमाकारो ।
शेषं गतं न तदा वर्षम्, आयाता चैत्रसन्ध्या,
पवनोऽभूदुत्तालाऽऽकुलः, पथि तरुणशाखा धृतमुकुलाः,
राज्ञः कानने स्फुटिताः पारुलबकुलरजनीगन्धाः ॥
अतिदूरतः पवनाऽऽयातो वंश्या मधुरमन्द्रः ।
जनहीनपुरी, पुरवासिजना गता मधुवनं पुष्पोत्सवे,
शून्यनगरीं वीक्ष्य नीरवं हसति पूर्णचन्द्रः ॥

निर्जनपथे ज्योत्स्नाऽऽलोके संन्यासी एकको यात्री
शिर उपरि तरुणशिखोपरि
वारं वारं कूजति कोकिलः ।
इयद् दिनात् परं किमद्य आगता एतस्याऽभिसाररात्रिः ।
त्यक्त्वा नगरं गतो दण्डी बहिः प्राचीरप्रान्तरम्-
परिखापारे स्थिता आम्रवणच्छाय-तामसे
का सा रमणी पतिता पार्श्वे तस्य चरणोपान्ते ।
रोगमसीलिप्ता कृष्णा सा तनुः प्रजाभिरानीय
परिखायाः बहिः
विक्षिप्ता, त्यक्तो विषाक्तस्तस्याः सङ्गः ।
आसीनो दण्डी स्तब्धं शिर उत्तोल्याऽऽनयत् स्वमङ्कम् ।
जलधारां ददौ शुष्काधरे
पपाठ मन्त्रं शिर उपरि
लिलिपे देहं निजकरेण सितचन्दनपङ्केन ॥
पतति मुकुलं कूजति कोकिलो
यामिनी ज्योत्स्नामत्ता ।
कस्त्वमायातो हे दयामय, अपृच्छन् नारी
संन्यासी प्राह-रजनावद्य समय आयातः
आगतो वासवदत्तो ।

# स्वल्पा क्षतिः

(सामान्य क्षति)

वहति माघमासि शीतस्य वायुः-स्वच्छसलिला वरुणा-
पुरीतो दूरे ग्रामे निर्जने शिलामय-घट्टे
चम्पकवने
स्नानाय चलिता शतसखीभिः काश्या महिषी करुणा।
स पन्थाः सघट्टः अद्य प्रभाते जनहीनो राजशासनात् ।
निकटे यानि कति कुटीराणि आसन्
नदीतीरं विहाय ततो गता लोकाः-
स्तब्धे गभीरे कानने केवलम् उत्तिष्ठति पक्षिकूजनम् ॥
उत्तरवायुना अद्य तरङ्गिता उत्तालीभूता तटिनी
स्वर्णवर्णालोको जले पतितः -
लक्षं माणिक्यानि अञ्चलादुज्ज्वलयन्ती नृत्यति
यथा नटी ।
नारीकण्ठस्य काकलिरद्य मुदा लज्जां कलकल्लोलाय ।
मृणालभुजानां कलितविलासेन चञ्चला नदी
उन्मत्ता उल्लासात्-

आलापेन प्रलापेन हासेन उच्छ्वासेन आकाश

आकुलीभूतः ।

स्नानावसाने कूल उत्थिता यदा नार्यः

महिषी अवदत्-अहो शीतेन म्रिये,

सर्वं शरीरं कम्पते, अग्निं प्रज्वालय हला सहचारिण्यः,

अनलेन शीतं निवारयिष्यामि ।

सर्वाः सख्यो गता कुसुमवनं

सञ्चेतुं क्षुद्रकाष्ठखण्डानि ।

कौतुकरसेन उन्मत्तप्राणाः शाखा विधृत्य आकर्षन्ति च,

सहसा सर्वा आहूय सहासवदनाऽकथयद् राज्ञी-

अये यूयमागच्छत, अदूरे दृश्यन्ते केषां कुटीराणि,

अग्निं लगयत तेषु गृहेषु, तापयामि

करपादतलम्,-

उक्त्वैवं राज्ञी आनन्दविह्वला मधुरं हसितुमारेभे ॥

मालती अकथयद् अति सकरुणा-कोऽयं परिहासो-

राज्ञि मातः

अग्निं लगयित्वा कथं नाशयिष्यसि कुटीराण्येतानि

को वा साधुः सन्यासी, को वा दीनो जनः कः पुरवासी

निर्मितवान्-नाऽहं जाने

अवदद् राज्ञी रोषेण–दूरीकुरु इमां दीनदयामयीम् ॥

अतिदुर्दम–कौतुकरता यति यौवनमदनिष्ठुराः

कुटीरेषु अग्निम् अलगयन् । घनघोरः धूमः पुनः पुनः

प्रत्यावृत्य स्फीतः सन्नुड्डीयमानश्चलितुमारेभे ।

पश्यन्तीष्वेव तासु हु–हु–हुं–कृत्य पुनः पुनरुद्गीर्य उल्काम्–

शतं शतं लोलजिह्वाः प्रसार्य वह्निराकाशमावृतवान् ।

पातालं भित्वा उत्थितो यथा ज्वालामयः शतं नागीगणः

फटं नर्तयित्वा अम्बरमुद्दिश्य उन्मत्तः सन् गर्जनगानेन ॥

प्रलयमत्तरमणीगणकर्णे अवाद्यत प्रलयरागिणी ।

प्रभातपक्षिणाम् आनन्दसङ्गीतं भयविलापेन त्रुटितम् ।

उत्तरवायुः प्रबलो जातः, कुटीरात् कुटीरमुद्दिश्य

अनलः पुनः पुनरुड्डीय अधावत् ।

क्षुद्रं ग्रामं लेलिह्यमाना ग्रथितवती प्रलयलोलुपा रसना॥

जनहीनपथे माघप्रभाते शतेन सखीभि राज्ञी

प्रत्यावृत्याऽऽगता ॥

सभायां तदा विचारासने उपविशन्नासीद् भूपतिः-

गृहहीनाः प्रजाः सदलम् आगच्छन्ति-द्विधाकम्पिताः-

सगद्गद्भाषया न्यवेदयन् दुःखं सङ्कोचं

सत्रासं चरणयोः कुर्वन्त्य आवेदनम् ॥

सभासनं व्यक्त्वा राजा उत्थाय गतो
लज्जयाऽऽरक्तममुखः-
प्राविशद् असमयं राज्ञ्या आगारम्-अवदन्-
महिषि क एष ते व्यवहारः? गृहाणि ज्वालितवती
अभाग्यप्रजानां वद केन राजधर्मेण ?
रुष्टा अवदद् राजमहिषी-
गृहाणि वदसि तानि केन बोधेन ?
जीर्णानि कानिचिज्जीर्णकुटीराणि
कियन्ती वा क्षतिरभवत् प्राणिनाम् ?
कियत् परिमाणो धनव्ययो भवेद्
राजमहिष्याः प्रहरैकस्य प्रमोदेन ?
उद्यतं रोषं हृदयेन रुद्ध्वा राजा अवदत्-
यावन्ति दिनानि त्वं राज्ञी सती तिष्ठसि
जानाम्यहं त्वं बोद्धुं न शक्नुया दीनस्य कुटीरे
दीनस्य का हानिः-निर्दयतया त्वां बोधयिष्यामि ।
राज्ञ आदेशात् किङ्करी आगत्य भूषणानि
मोचयित्वा अपातयत्, तद्
अरुणवर्णमम्बरम् आकृष्य निर्दयकरेण अमोचयत् ।
भिक्षुनार्याश्चीरवास आनीय राज्ञ्या देहे उत्तोल्य

अदात् ।

पथि तां नीत्वा अवदद् राजा-

द्वारं द्वारं याचेथाः ।

एकस्य प्रहरस्य

तव लीलया यानि कतिचिद् गृहाणि भस्मीभूतानि

यावद्भिर्दिनैस्तानि सर्वाणि

निर्मातुं शक्यानि, निर्मातव्यानि त्वया ॥

वत्सर एकः समयो दत्तः-ततः प्रत्यावृत्य आगत्य

सभायां दण्डायमाना प्रणम्य

सर्वेषां सम्मुखे ज्ञापयिष्यति भवती-

जीर्णकुटीरनाशेन जगतः कियती स्वल्पा क्षतिर्जाता ॥



# बन्दी वीरः

ग्रथित्वा मस्तके वेणीं तीरे पञ्चनदस्य सः ।
पश्यतामेव लोकानां शिखो जागरितो-स्थितः ।
गुरोर्मन्त्रेण निर्भीको निर्ममो (वीरपुङ्गवः) ॥
'गुरुर्जयतु' शब्देन सहस्रेण च कण्ठतः ।
दिशश्च ध्वनिताः कुर्वन् जागरित्वा नवः शिखः ।
निर्निमेषेण नेत्रेण दिवाकरे नवोषसः ।
दृष्टिं निक्षिप्य अद्राक्षीन्नयनान्दकरं च तम् ॥
उदतिष्ठन् महानुच्चैः शब्दोऽलक्ष्यो निरञ्जनः ।
(अलख निरञ्जन)
त्रुट्यते बन्धनं तेन क्रियते भयभञ्जनम् ॥
झञ्झनायित शब्देन महोल्लासेन वक्षसः ।
असिश्च वाद्यते पार्श्वे । पञ्जाबोऽद्य समुत्थितः ।
'अलख् निरञ्जन' शब्दं गर्जन्नुच्चार्य हर्षतः ॥
तदेकदिनमायातं लक्षं प्राणाश्च न यद्दिने ।
शङ्कां ते न हि जानन्ति रक्षन्त्यृणं न कस्यचित् ॥
जीवन-मरणं तेषां स्वपादभृत्यवत् स्थितम् ।
चित्तं च भावनाहीनम्, तथा पञ्चनदस्य च ।

तदेकदिनमायातं वेष्टयित्वा दिशो दश ॥
दिल्लीप्रासादकुट्यां च बादशाहस्य नेत्रतः ।
धावन्ती याति निद्रा तत् केषां कण्ठस्वरस्तथा ।
मथ्नाति गगनं तावत्-त्रुट्यति निबिडा निशा ।
आकाशललाटे केषां दण्डाग्रोज्ज्वलवर्तिका ।
प्रस्फुटत्यग्निरूपेण ? तीरे पञ्चनदस्य हि ।
विदीर्य लक्षवक्षांसि लहरी किममुच्यत ।
भक्तदेहस्य रक्तस्य ? यूथबद्धविहङ्गवत् ।
प्राणा धावन्ति नीडाय, तथा वीरगणाश्च ते ।
जनन्या भालदेशे तु शोणिततिलकाङ्कनम् ।
कृतवन्तस्तटे तत्र पञ्चनदस्य पुत्रकाः ॥
मोग़लशिखयोर्युद्धे मरणालिङ्गनेन च ।
द्वावेव कण्ठमावेष्ट्य आकृष्य च परस्परम् ।
धृतवन्तो, यथा श्येन-विहङ्गो दशनक्षतः ।
युध्यते सह सर्पेण, तद्दिने कठिने रणे ।
'गुरुर्जयतु' इत्येतद् उच्चैरुच्चारयन् वचः ।
निःस्वनेन गभीरेण वीरः शिखो ह्ययुध्यत ॥
मोग़लः शोणितोन्मत्तो 'दीन् दीन्' इति च गर्जयन् ॥
गुरुदासपुरे दुर्गे बन्दा बन्दी यदाऽभवत् ।

तुराणि सैन्यहस्तेन, सिंहवच्छृङ्खलीकृतम् ।
दिल्लीनगरमुद्दिश्य बद्ध्वा तं सैनिका गताः ॥
गुरुदासपुरे दुर्गे बन्दा बन्दी रणेऽभवत् ॥
पुरो मोग़लसैन्यं तच्चलत्युत्थापयदु धूलिम् ।
उत्तोल्य भिन्दिपालाग्रे छिन्न-शिखस्य मस्तकम् ।
सप्तशती शिखानां सा पश्चाच्चलति तत्र च ।
वाद्यन्ते शृङ्खलाः सार्धम्, तदा राजपथोपरि ।
उच्छलितं जनस्त्रोतः, उद्घाट्यन्ते च पार्श्वतः ।
वातायनानि दृष्ट्यर्थम्, विस्मृत-प्राणभीतयः ।
'गुरुर्जयति' गर्जन्ति शिखा वीराः समन्ततः ॥
मोग़लाश्च शिखाश्चैव अद्य दिल्लीपथस्य वै ।
धूलीरुत्थापयामासुरन्धीकृता दिशस्ततः ॥
अहं पूर्विकया को वा अग्रे प्राणान् प्रदास्यति ।
कोलाहलरवैर्जाता तद्धेतोः प्रतियोगिता ॥
दिनावसानतः प्रातर्वीरा घातकहस्ततः ।
शतं शतं शिखश्रेण्यो 'गुरुर्जयतु' वाक्यतः ।
उपहारस्वरूपेण शिरांसि ददिरे स्वयम् ॥
प्राणाः सप्तशतं तेषां सप्ताहकालमध्यतः ।
निःशेषतां गता यावत् काज़िरुत्तोल्य दत्तवान् ।

बन्दावीरस्य अङ्के तु तदीयं पुत्रमेककम् ।
हन्तव्योऽयं स्वहस्तेन अवददवहेलया ।
बद्धबाहुं किशोरं तं कुमारं तस्य नन्दनम् ।
पातयित्वाऽददात् तस्य क्रोडदेशे तु लोष्टवत् ॥
वाणीं कामपि नोक्त्वा च बन्दा तं क्षुद्रबालकम् ।
अगृह्लाद् वक्षसाऽऽकृष्य धीरेण क्षणकालतः ।
मूर्ध्नि अस्थापयत् तस्य स्वकीयं हस्तदक्षिणम् ॥
केवलमेकवारार्थम् अचुम्बत् तच्छिरः स्थितम् ।
उष्णीषं रक्तवर्णं तद्-विकोषीकृत्य धीरतः ।
सुतीक्ष्णां छुरिकां स्वस्य कटिवसनतस्ततः ।
बालकमुखमुद्वीक्ष्य कर्णे ह्यकथयद् वचः ।
'गुरुर्जयतु हे पुत्र, किमपि नास्ति ते भयम् ।'
नवीने वदने तस्य उत्साहवशतोऽज्वलत् ।
अभयः किरणो दीप्तः, सभातलमकम्पत ।
किशोरकण्ठशब्देन, गातुमारब्धबालकः ।
बन्दाया मुखमालोक्य-'गुरुर्जयतु किं भयम् ।'
वीरो बन्दा तदा वामबाहुपाशमवेष्टयत् ।
तद्गले दक्षहस्तेन च्छुरिकां पुत्रवक्षसि ।
सबलं विद्धवान्-बालो लुलोठ धरणीतले ।

'गुरुर्जयतु' इत्युक्त्वा । सभा निस्तब्धतां गता ।
बन्दावीरस्य तद्देहं लौहदंशेन घातकः ।
उत्तप्तेनाऽच्छिनच्छब्दं न हि कृत्वा ह्यकातरः ।
स्थिरः सन् वृतवान् मृत्युं, दर्शका द्रष्टुमक्षमाः ।
न्यमीलयंश्च नेत्राणि सभा निस्तब्धतां गता ॥



# भारतभाग्यविधाता

जनगणमनोऽधिनायक जय हे भारत भाग्यविधातः,
पञ्जाब-सिन्धुगुर्जरमहाष्ट्र-द्राविडोत्कलवङ्गाः-
विन्ध्य-हिमाचल-यमुना-गङ्गा, उच्छलजलधितरङ्गा-
स्तव शुभनाम्ना जाग्रति, तव शुभाशिषं याचन्ते
गायन्ति तव जयगाथाम् ।
जनगणमनोऽधिनायक जय हे भारतभाग्यविधातः ।
जय हे जय हे जय हे जय जय जय जय हे ॥
अहरहस्तव आह्वानं प्रचारितम्
शृण्वन्तस्तव उदारवाणीं
हिन्दु-बौद्ध-सिख-जैन-पारसिक-मुसलमान-ख्रीस्तीयाः
पूर्वः पश्चिम आयान्ति तव सिंहासनपार्श्वम्
प्रेमहारो ग्रथिता भवति ॥
जनगणैक्यविधायक जय हे भारत भाग्यविधातः
जय हे जय हे जय हे जय जय जय जय हे ॥
पतनाभ्युदय-बन्धुरपन्थाः युग-युग-धाविता यात्री ।
हे चिरसारथे तव चरणचक्रै-
र्मुखरितपथे दिवारात्रम्
दारुण-विप्लवमध्ये तव शङ्खध्वनिर्वाद्यते

सङ्कटदुःखत्रातः,

जनगणपथपरिचायक जय हे भारतभाग्यविधातः ।

जय हे जय हे जय हे जय जय जय जय हे ॥

घोरतिमिरघननिविडनिशायां

पीडित-मूर्च्छित-देशे

जागरितम् तव अविचलमङ्गलम्

नत-नयने त्वनिमेषे ।

दुःस्वप्ने, आतङ्के रक्षितवानङ्के

स्नेहमयी त्वं माता ।

जय हे जय हे जय हे जय जय जय जय हे ॥

रात्रिः प्रभाता उदिता रविच्छविः

पूर्वोदय-गिरि-भाले

गायति विहङ्गमः पुण्यः समीरणो

नवजीवनरसं क्षरति

तव करुणारुणरागेण निद्रितं भारतं जागर्ति

तव चरणे नतमस्तकम् ।

जय जय जय हे जय राजेश्वर भारत-भाग्य-विधातः

जय हे जय हे जय हे जय जय जय जय हे ॥

# राजविचारः

विप्र आह गृहे यस्मिन् शयिता गृहिणी निशि ।
धर्मनाश-कृते तस्याः प्राविशच्चौर एककः ॥
को दण्डो दीयते तस्मै मया स शृङ्खलीकृतः ।
राजा रतनरायस्तं प्राह-'मृत्युश्च केवलम् ॥'
युवराजो हि चौरः स-दूत एतन्न्यवेदयत् ।
बन्दीकृत्य निशायां तं विप्रः प्रातः शिरोऽच्छिनत् ॥
धृत्वा स विप्र आनीतो दण्डस्तस्य विधीयताम् ।
प्राह रतनरायस्तं 'देहि मुक्तिं च केवलम् ॥'



# तदानीन्तनकालः

## (सेकाल)

यद्यहं जन्म अग्रहीष्यं कालिदास्य काले ।
दैवादभविष्यं दशमं रत्नं नवरत्नस्य माल्ये ॥
श्लोकेनैकेन स्तुतिं गीत्वा राज्ञोऽग्रहीष्यं याचित्वा ।
उज्जयिन्या विजनप्रान्ते काननवेष्टितं गृहम् ॥
रेवातटे चम्पकतले सभा उपावेक्ष्यत् सन्ध्याकाले ।
क्रीडाशैले स्वमनसा अत्यक्षं कण्ठम् ।
जीवनतरीर्वहन्ती अचलयिष्यन् मन्दाक्रान्ता तालेन ।
यद्यहं जन्म अग्रहीष्यं कालिदास्य काले ।
चिन्ताम् अदास्यं जलाञ्जलये नहि अस्थास्यत् त्वरा-
मृदुपद्भ्याम् अचलिष्यम् नाऽभविष्यतां मृत्युर्जरा ।
षड्तून् प्रपूर्य मिलनमटिष्यत्, स्तरे स्तरे-
षट्सु सर्गेषु वार्ता तस्य अस्थास्यत् काव्येन ग्रथिता ॥
विरहदुःखम् दीर्घम् अभविष्यत् सुतप्ताश्रुनदी यथा ।
मन्दगतिरचलिष्यद् रचयद् दीर्घां करुणां गाथाम् ॥
आषाढमासस्य मेघ इव मन्थरतया पूर्णा ।

जीवनमध्ये न अस्थास्यत् कियन्मात्रा त्वरा ॥
अशोककुञ्जः प्रास्फुटिष्यत् प्रियायाः पादाघातेन
बकुलोऽफुल्लिष्यत् प्रियायाः मुखमदिरया ।
प्रियसखीनां सर्वनामानि च्छन्दांसि प्रपूर्य अकरिष्यन् रवम्।
रेवायाः कूले कलहंसध्वनिर्यथा ॥
एकमपि नाम मन्दालिका किमपि वा चित्रलेखा
मञ्जुलिका मञ्जरिणी झङ्कारमकरिष्यन् ॥
आगमिष्यंस्ताः कुञ्जवनं चैत्रज्योत्स्नारात्रे
अशोकशाखा प्रास्फुटिष्यत् प्रियायाः पादाघातात् ।
पर्यधास्यन् कुरबकस्य चूडां कृष्णकेशस्य मध्ये-
लीलाकमलम् अस्थास्यद् हस्ते न जाने केन कर्मणा,
अलकमभविष्यत् सुसज्जितं कुन्दपुष्पेण
शिरीषम् अधास्यन् कर्णमूले
मेखलायाम् अदोलयिष्यन् नवनीपस्य मालाम् ।
धरायन्त्रे स्नानस्य शेषे धूपस्य धूमम्
अदास्यत् केशे
लोध्रपुष्पस्य शुभ्ररेणून् मुखे अप्रक्षिष्यन् बाला ।
कालागुरौ गुरुर्गन्धः सज्जायाम् अलगिष्यत् ।
पर्यधास्यत् कुरबकस्य मालां कृष्णकेशस्य मध्ये ॥
अञ्चलस्य प्रान्ते अस्थास्यद् हंसमिथुनम् अङ्कितम् ।

विरहेणाऽऽषाढमासे अपेक्षया अस्थास्यद्

बन्धोराशया ।

एकेनैकेन पूजापुष्पेण दिनमगणयिष्यद् उपविशन्ती

वीणामुत्तोल्य वक्षसि गानकाले वाणीं व्यस्मरिष्यत् ।

रूक्षम् अलकं साश्रुचक्षुषोः

पुनः पुनरपतिष्यत् ।

मिलननिशि पादयोरवादयिष्यत् वक्रं नूपुरद्वयम् ।

कुङ्कुमस्य पत्रलेखया वक्षः अस्थास्यदावृतम् ।

अनर्तयिष्यन् मयूरं कङ्कणझङ्कारेण

कपोतं वक्षसि धृत्वा आदरिष्यत मुखेन मुखं संस्पृश्य ।

सारसीम् अखादयिष्यत् पद्मकोरकं वहन्ती,

अलकं कम्पयन्ती वेणीं दोलयन्ती

अभाषिष्यत् वाक्यं शौरसेन्या ।

गले धृत्वा सखीमवदिष्यत्, 'हला पिय सहि ॥'

जलम् अस्रेक्ष्यद् आलवाले तरुणसहकारे-

प्रियं तन्नाम अशिक्षयिष्यत् प्रियां सारिकाम् ।

नवरत्नसभामध्ये अस्थास्यम् एकः प्रधानीभूय-

दूरतः अनमिष्यं दिङ्नागाचार्यम् ।

आशां कुर्वे नाम मेऽभविष्यत् तेषां मध्ये भद्रवत्-

विश्वसेनः किं वा देवदत्तोऽथवा वसुभूतिः ।

स्त्रग्धरया किं वा मालिन्या बिम्बाधरस्य स्तुतिगीत्या
अरचयिष्यं द्विचतुराणि क्षुद्र-क्षुद्राणि पुस्तकानि ।
श्लोकरचनावसाने गृहम् अगमिष्यं सत्वरम्-
नवरत्नसभामध्ये अस्थास्यम् एकः प्रधानीभूय ॥
यद्यहं जन्म अग्रहीष्यं कालिदासस्य काले
बन्दी अभविष्यं न जाने कस्या मालविकाया जालेन-
कस्मिन् वसन्तमहोत्सवे वेणुवीणायाः कलरवे-
मञ्जरितकुसुमवनस्य सुगुप्तान्तराले
कस्य फाल्गुनस्य शुक्लनिशि यौवनस्यैव मादकतया
सचकितं कस्यां साक्षाद्
अप्राप्स्यं
राज्ञश्चित्रशालायाम् ।
छलेन तस्य अञ्चलं लग्नमभविष्यत् ।
सहकारस्य शाखायाम् ।
यद्यहं जन्म अग्रहीष्यं कालिदासस्य काले ॥
हा हा रे कदा अतीतो जातः
कालिदासस्य कालः ।
पण्डितास्तर्कयन्ति अधिकृत्य तस्य
तारिकाम् अब्दं च ।
विनष्टास्ते सर्वे अब्दाः

इतिवृत्तमस्ति स्तब्धम् ।
गता यदि आपद् गता मिथ्या कोलाहलः ।
हा हा रे गतास्तैः सह तद्दिनानां पौरनार्यो-
निपुणिका चतुरिका मालविकाद्याः ।
कं स्वर्गं नीतवत्यो वरमालस्य स्थालीम्
हा हा रे कदा अतीतो जातः कालिदासस्य कालः ।
याभिः सह मिलनं नाऽभवत् ताः सर्वा वराङ्गणाः-
विच्छेदस्य दुःखेन मामन्यमनस्कं कुर्वन्ति ।
तथापि प्रबोधोऽस्ति मनसि तथा बकुलं प्रस्फुटति-
वृक्षे-यद्यपि स न प्राप्नोति नार्या मुखमदस्य प्रोक्षणम् ।
फाल्गुने मासि अशोकच्छायाम् अलसप्राणेषु
शिथिलगात्रे दक्षिणतः स वायुस्तथा मिष्टोऽनुभूयते ।
अनेकाभ्यः दिग्भ्यः प्राप्स्यन्ते अनेकाः सान्त्वनाः-
यद्यपि न सन्ति कुत्र ताश्च वराङ्गणाः ॥
अधुना या सन्ति मर्त्यलोके
तासां चित्रं कालिदासस्य चक्षुषि
श्रेयोऽन्वभविष्यत् ।
परिदधति ताः चर्मापादुकां पादद्वयाऽऽवरण्या सह
चलन्ति च ऋजुभावेन गदन्ति च वाक्यानि
देशान्तरभङ्ग्या-

तथापि पश्य स कटाक्षः अक्ष्णोः कोणे

ददाति साक्ष्यम्-

यथा खलु अदृश्यत कालिदासस्य काले ।

न मरिष्यामि भ्रातर्निपुणिकाचतुरिकयोः शोकात्

ताः सर्वा नामान्तरेण विद्यन्ते मर्त्यलोके ।

आपातत आनन्देनानेन गर्वेण भ्रमामि नृत्यन्-

कालिदासस्तु नाम्नैव तिष्ठति अहमेव जीवन्नस्मि ।

तस्य कालस्य संवादं गन्धं प्राप्नोम्यहं मृदु मन्दम्

मम कालस्य कणमात्रं नाप्नोन् महाकविः ।

वेणीं दोदुल्यमाना या आधुनिकी विनोदिनी चलति-

महाकवेः कल्पनायां नाऽसीत् तस्याश्छविः ।

प्रिये तव सकरुणनेत्रयोः पुनः पुनः

प्रसादं याचमानः

कालिदासं पराजित्य भ्रमामि नृत्यन् ।



# साधारणी कन्या

(साधारण मेये)

अहम् अन्तःपुरस्य नारी-त्वं मां न जानासि

भद्रशरच्चन्द्र-अहं तव शेषकथा-पुस्तकं पठितवती-

पर्युषित पुष्पाणां माला-( वासि फुलेर माला )

तव नायिकाम् एलोकेशीम् ( आलुलायितकुन्तलां )

मरणदशा प्राप्ता-

पञ्चत्रिंशवर्षवयसि तस्याः प्रतियोगिता

आसीत् पञ्चविंशवर्षीयस्या सह ।

दृष्टवत्यहं त्वं खलु महाशयस्त्वां विजयिनीमकृथाः ।

स्वस्याः कथां भाषे–वयो मम अल्पम्

कस्यचिदेकस्य जनस्य मनः स्पृष्टवती

ममेयमपक्ववयसो माया ।

तदवगम्य पुलको जागरितोऽभून्

मम देहे–

विस्मृतवत्यहं यदहमत्यन्तं साधारणी कन्या-

मादृशा ईदृश्यः सन्ति सहस्त्रं सहस्त्रं कन्यकाः ।

अल्पवयसो मन्त्रो यासां यौवने ।

त्वामहमनुरुध्नामि–दयया लिख–एकस्याः

साधारण्याः कन्याया आख्यानम् ।

अत्यन्तं दुःखं तस्याः,

तस्या अपि स्वभावस्य गभीरतायाम्

असाधारणत्वं यदि किञ्चित् कुत्र

तलदेशे वर्तते–कथं वा सा तत्

प्रमाणीकुर्यात् ? ईदृशाः कति जना अदृश्येरन्

ये तद् द्रष्टुं समर्था भवेयुः ?

अपक्ववयस इन्द्रजालं लगति तासां चक्षुषि ।

मनो न गच्छति सत्यस्य अन्वेषणाय ।

वयं विक्रीता भवेम मरीचिकाया मूल्येन ।

इयं कथा कथम् उत्थापिता ब्रवीमि-

मनसि कुरु नाम नरेशः तस्य

सोऽब्रवीन्-न काऽपि तस्य चक्षुषि पतिता मादृशी ।

एतस्मिन्नुच्चभाषणे विश्वसिष्यामि स साहसो
न भवति-न विश्वसिष्यामि सा शक्ति वा कुतः ?
एकदा स गत आङ्ग्लदेशम्-
पत्रादि कदापि वा प्राप्नोमि-मनसा चिन्तयामि-
रामो रामः, एतावत्यः कन्याः सन्ति तस्मिन् देशे,
इयत् तासां स्कन्धास्कन्धिजनबाहुल्यम् । उपरन्तु सर्वास्ताः
किम् आविष्कृतवत्य एकं नरेशसेनम्-
स्वदेशे यस्य परिचय आच्छन्न आसीद् दशानां
जनानां मध्ये विगतया पत्रप्रेरणव्यवस्थया
प्रेरितपत्रे लिखितवान्-
लिज्या सह स गतः
समुद्रे स्नातुम्-वङ्गीयकवेः कवितातः
कतिपंक्तीरुद्धृतवान्-
तत्रत्याद् यत्र उर्वशी उत्तिष्ठति समुद्रात् ।
ततो बालुकोपरि उपविष्टौ पार्श्वापार्श्वि-
दूरतो दोदुल्यते नीलसमुद्रस्य तरङ्गः ।
आकाशे विकीर्णो निर्मलः सूर्यालोकः ।
लिजिस्तम् अति धीरधीरम् उक्तवती-

एष त्वं तस्मिन्नेव दिने आयातो-
दिनद्वयात् परं प्रत्यावृत्य गमिष्यसि-शुक्तेरावरण-
शङ्खद्वयस्य मध्यवर्ति-
क्षुद्रं स्थानम् एकेन घनीभूतेन अश्रुबिन्दुना
दुर्लभेन मृत्युहीनेन पूर्णमस्तु ।
काऽप्यसामान्या वचनभङ्गी-
तेन सह नरेशोऽलिखत्-
वचनानि तानि यदि वा कृत्रिमाणि भवेयुः-को दोषः,
किन्तु चमत्काराणि, हीरकखचितं स्वर्णपुष्पं किं सत्यम्-
तथापि किं न सत्यम् ? बोद्धुं समर्थोऽस्मि-
तस्य पत्रं मां ज्ञापयति-एकस्यास्तुलनायाः
संङ्केतम्-अदृश्यकण्टकवन् मम वक्षःसमीपे
विध्यति-अहमतीव साधारणी कन्या ।
मूल्यवते पूर्णं मूल्यं परिशोध्य दास्यामि ईदृशं धनं
नास्ति मे हस्ते । भो नो चेत् तदेवाऽस्तु,
नो चेद् ऋणी तिष्ठेयं चिरं जीवनम् । तव पादयोः
पतानि महाशय शरच्चन्द्र, लिख एकाम् आख्यायिकाम्-
अतीव साधारणयाः कन्याया आख्यायिकाम्-दूरतो

यया दुर्भगया तुला अधिरुह्येत अन्ततः पञ्चभिः

सप्तभिर्वा असमान्याभिः सह । अर्थात् सप्तरथिनीनाम्

आघातः ।

बोधं गताऽस्मि-यन् मम भालो भग्नः ।

मम पराजयोऽभवत् ।

किन्तु त्वं मम प्रतिनिधिर्भूत्वा यस्याः कथां लेखिष्यसि-

तां विजयिनीं कुर्याः-

पठन्ती यस्य कथां वक्षः स्फीतं भवेत् ।

पुष्पचन्दनौ पततां तव लेखनीमुखे-

तस्यै नाम देहि मालती, तदेव मम नाम ।

नाम्ना परिचयप्रकाशापराधेन धृतो भविष्यसि-

इति भयं नास्ति ।

ईदृश्यो बह्व्यो मालत्यः सन्ति वङ्गदेशे

सर्वा याः साधारण्यः कन्याः-

न जानन्ति ताः फ़ारसीभाषां जर्मन्भाषां वा -

केवलं जानन्ति रोदितुम् ।

कथं तां विज्ञापययेः ? उच्चं तव मनः,

महीयसी तव लेखनी ।

त्वं किं वा चेन्नयेस्ताम् त्यागस्य पन्थानं दुःखस्य चरमतां शकुन्तलामिव । मयि दयां कुरु-

अवनम्य आगच्छ मम समतलम् ।

शय्यायां शयाना शयाना रात्रेरन्धकारे देवतायाः समीपे यम् असम्भवं वरं मृगयामि—तं वरं नाऽहं प्राप्स्यामि ।

किन्तु प्राप्नोतु ते नायिका ।

स्थापय नरेशं सप्तवर्षाणि लण्डननगरे—वारं वारं अनुत्तीर्णः स भवतु तस्य परीक्षायाम्—सादरं तिष्ठतु स्वस्य उपासिकामण्डल्याम् ।

इतो मध्ये मालती उत्तीर्णा भवतु स्नातकोत्तर-परीक्षायां कलिकाता-विश्वविद्यालयतः—तव लेखन्या एकेन वेधेन गणिते प्रथमस्थानम् अधिकरोतु । किन्तु-अत्रैव यदि विरम-तव 'साहित्य सम्राड्' इति नाम्नि कलङ्कः पतिष्यति ।

मम दशा यादृशी भवतु-मा कुरुष्व क्षुद्रां तव कल्पनाम् ।

त्वं तु न कृपणोऽसि विधाता इव ।

प्रेरय तां कन्यां यूरोपमहादेशम् ।

तत्र ये ज्ञानिनो ये विद्वांसो ये वीरा ये कवयो

ये शिल्पिनो ये राजानः एकत्रीभूय आगन्छन्तु तस्याश्चतुर्दिक्षु।
ज्योतिर्विद इव आविष्कुर्वन्तु ताम्-
न केवलं विदुषी नारी इति परिचयेन,
तस्यां या विश्वविजयिनी शक्तिरस्ति
तस्या रहस्यं प्रकाशं गच्छतु न हि मूढस्य देशे-
तस्मिन् देशे सन्ति गुणग्राहिणः,
सन्ति महोदयाः सन्ति आङ्ग्लाः
सन्ति शर्मण्याः फरासयश्च ।
मालत्याः सम्मानार्थं सभाया आह्वानं भवतु-
महोच्चानां पण्डितानां सभा ।
मनसि ईदृशी भावना भवतु-
तत्र मुषलधारया वर्ष्यन्ते चाटुवाक्यानि-
मध्यतः सा चलतु अवहेलया-
तरङ्गोपरि यथा चलति लम्बितपट्टिका नौका ।
तस्याश्चक्षुषी ।( अत्र जनान्तिकं वच्मि-सृष्टिकर्तुः प्रसादः
सत्यमेव वर्तते मम चक्षुषि ) ।
उच्यते स्वमुखेनैव अधुनाऽपि न कस्याऽपि यूरोपीय-
रसज्ञस्य साक्षाद् दर्शनं घटितं मम ललाटे ।

नरेश आगत्य दण्डायमानो भवतु तस्मिन् कोणे तथा

तस्य सा ह्यसामान्या तरुणी श्रेणी ततः परम् ?

शाकलता मुण्डशून्या जाता ।

स्वप्नश्च मम विलयं गतः ।

हा रे साधारणी कन्या, हा रे विधातुः

शक्तेरपव्ययः ॥



# एकतानः

विपुलाया अस्याः पृथिव्याः कियत् स्वल्पमहं जाने ।
देशे देशे कति वा नगराणि कति वा राजधान्यश्च-
मनुष्याणां कति कीर्तयः, कति नद्यो गिरयः,
सिन्धवो मरुभूमयश्च, कति वा अज्ञाता
जीवाः कति च अपरिचितास्तरवोऽपि
अगोचरा एव स्थिता वर्तन्ते ।
विशालं विश्वस्य आयोजनम्-
मनो मम तस्य अतिक्षुद्रकोणैकमेव अधिकृत्य अवस्थितम् ।
तेन क्षोभेण अक्षयेन
उत्साहेन पठामि ग्रन्थान् यत्र विद्यन्ते भ्रमणवृत्तान्तानि ।
प्राप्नोति यत्र चित्रमयीं वर्णनावाणीम्-
उञ्छवृत्या संगृह्य आनयामि,
तां ज्ञानस्य दीनतां मम
इत्थं भिक्षालब्धेन धनेन यथासाध्यं पूर्णीकरोमि ।
पृथिव्याः कविरहम् - तत्र यत्र यतिध्वनय उत्तिष्ठन्ति-
मम वंशीस्वरेण सपद्येव जागर्ति तेषाम् आह्वानम् ।
एतस्यां स्वरसाधनायां न

उपस्थितानि बहुतराणि आह्वानानि ।
अवस्थिता तत्र शून्यता ।
कल्पनया अनुमानेन च धरित्र्या
महानेकतानः पूर्णीकृतवान्
कतिषु वा निस्तब्धक्षणेषु मम प्राणान् ।
दुर्गमतुषारगिरिनिःशब्देन नीलिम्ना
यद् अश्रुतं गानं करोति-अन्तरे स
मम वारं वारं प्रेरितवांस्तस्य निमन्त्रणवार्ताम् ।
दक्षिणमेरोरूर्ध्वे अज्ञाता या तारका
महाशून्यतायां निजरात्रिं यापयति-अर्धरात्रे
सा मम निर्निमेषचक्षुषि अपूर्वज्योतिषा अनिद्रां स्पृष्टवती ।
सुन्दरस्य महाप्लावी प्रचण्डो निर्झरो मनसो गहने
मम प्रेरितवान् स्वनम् ।
प्रकृतेरेकतान-स्त्रोतसि नाना कवयो नाना दिग्भ्यः
स्त्रावयन्ति सङ्गीतानि–तैः सर्वैः सह मम
एतावान् योगः–सर्वेषां तेषां सङ्गः प्राप्नोमि–
आनन्दस्य च भोगं लभे ।
तथा निखिलस्य सङ्गीतस्वादं गीतभारत्याः
प्रसादं च प्राप्नोमि–

स्वस्य अन्तराले सर्वथा दुर्गमो यो मानुषस्तस्य
न विद्यते परिमाणं किञ्चन बहिर्देशं बहिर्ग्रामं च-
यतः अन्तरमयः सः । अन्तरेण सम्मिश्रितो
भवेच्चेत् तस्य आन्तः परिचयो लभ्येत ।
नाऽहं सर्वत्र तत् प्रवेशद्वारं प्राप्नुयाम्,
जीवनयात्रायां प्राचीरा बाधाः सत्यो विद्यन्ते ।
कृषकः क्षेत्रे हलं कर्षति,
उपविश्य तन्तुवायश्च वयति वस्त्रम्,
जालिकश्च विस्तृणोति जालम् ।
एतेषां विचित्रभावस्तु बहुदूरं प्रसारितः ।
तदुपरि सन्नस्य भारं चलति संसारः ।
अतिक्षुद्रांशे तस्य सम्मानस्य चिरनिर्वासनक्षेत्रे
समाजस्य उच्चमञ्चे सङ्कीर्णवातायनतले तिष्ठामि-
कदा कदा वा गतोऽस्मि
तत्पल्ल्याः प्राङ्गणसन्निकटम् ।
तत्र अन्तः प्रविशामि
सा शक्तिर्मम कियन्मात्रमपि नाऽऽसीत् ।
जीवनेन जीवनस्य योगो न क्रियते चेत्
कृत्रिमपण्यैरेव भवेद् व्यर्थं गानपात्रम् ।

स्वीकरोमि ततोऽहम् एतन् मम निन्दावचनम्-
मम स्वरस्य अपूर्णताम् मम कविता-
अहं जाने- विचित्रपथगामिनी सत्यपि-
नाऽभवत् सर्वगामिनी।
कृषकस्य जीवनस्य यः समांशभाजनम्-
कर्मणा वाक्येन च यः सत्याम् आत्मीयताम् अर्जितवान्,
विद्यते यो मृत्तिकाया अत्यन्तं सन्निकटे,
तस्य कवेर्वाण्याः कृते अहम् उत्कर्णस्तिष्ठामि।
साहित्यानन्दभोगोत्सवे यत्र अहं यातुं न शक्नुयां
तस्य अनुसन्धाने नित्यं रतस्तिष्ठामि।
सत्यं भवतु तत् केवलं
भङ्गीभावतश्चक्षुर्भ्रान्तिं मा जनयतु
सत्यं मूल्यम् अदत्वा सहित्यख्यातेरपहरणं न श्रेयः-
न श्रेयसी कृतिमविलासतः श्रमिकजनकर्माणुकृतिः।



हे अख्यातजनस्य कवे, आगच्छ,
निर्वाङ्मनसो यावतीर्मम-वेदना, ताम् उद्धर,
अस्मिन् प्राणहीने देशे
यत्र चतुर्दिशो गानहीना,
अज्ञातततापतः शुष्का निरानन्दा च,
तां मरुभूमिं रसपूर्णां कुरुष्व ।
स्वस्य अन्तरे तस्य य उत्साहः अस्ति
तमेव त्वम् उद्गार्य देहि
साहित्यस्य एकतानसङ्गीतसभायां
येषाम् एकतानतन्त्रिका
ते अपि सम्मानं प्राप्नुयुः ।
सुखे दुःखे ये मूकाः, विश्वस्य सम्मुखे
ये नतशिरसः स्तब्धाः, हे गुणिन्
निकटे स्थित्वाऽपि ये दूरवर्तिनः-
तेषां वाणीं शृण्वाम ।
तिष्ठ त्वं तेषां ज्ञातिः,
तव ख्यात्याऽपि ते ख्यातिं प्राप्नुयुः
पुनः पुनस्त्वामहं नमस्करोमि ॥

# पृथिवी

(पृथिवी)

अवनतदिनावसानस्य वेदिमूले शेषनमस्काररूपेण
अद्य पुनर्नमस्कारं मम गृहाण पृथिवि !
महावीर्यवती त्वं वीरभोग्या, विपरीता असि
लालित्येन कठोरतया च, प्रकृतिस्तव मिश्रिता
पुरुषत्वेन नारीत्वेन च, मनुष्यजीवनं करोषि
दोलायितं दुःसहद्वन्देन ।
दक्षिणहस्तेन पाययसि सुधां
वामहस्तेन चूर्णयसि पात्रम् ।
निजविलासक्षेत्रं मुखरं करोषि अट्टविलापेन ।
महज्जीवने यस्य अधिकारः–
तज्जीवनं करोषि दुःसाध्यम्, दुर्मूल्यं करोषि श्रेयः,
न करोषि कृपां कृपापात्रे, वृक्षे वृक्षे त्वया प्रच्छन्नीकृत्य
स्थापितः प्रतिमुहूर्तस्य सङ्ग्रामः ।
फलेन शस्येन च भवति सार्थकं

तस्य जयमाल्यम् ।

जले स्थले च तव क्षमाहीना रङ्गभूमिः ।

तत्र मृत्युर्मुखतो घोषिता भवति विजयिजीवनस्य

वार्ता ।

तव निर्दयताया भित्तौ उत्थापितं सभ्यतायाः

जयतोरणम् ।

त्रुटिर्भवति चेत् तस्याः पूर्णमूल्यं विनाशेन शोधयितव्यम् ।

तव इतिहासस्य आदिपर्वणि

दानवस्य प्रतापो दुर्जय आसीत्

स परुषः, स बर्बरः स मूढः

तस्य अङ्गुलिरासीत्

स्थूला कलाकौशलहीना च ।

गदा मूषलं हस्ते गृहीत्वा स समुद्रं पर्वतं च विजितवान् ।

अग्निना वाष्पेण तथा दुःस्वप्नेन तेन विमिश्रित आकाशः ।

आसीत् स जडराज्यस्य एकाधिपतिः, जीवनस्य उपरि

आसीत् तस्य अन्धा ईर्ष्या, परस्मिन् युगे देवता आगत्य

पपाठ दानवदलनं मन्त्रम्, अभवदभिभूतं

भयस्य औद्धत्यम् ।

उपविष्टा जीवधात्री श्यामलास्तरणं विस्तीर्य ।

उषा दण्डायमाना अभवत् पूर्वाचलस्य शिखरचूडायाम् ।
शिरसि शान्तिघटं गृहीत्वा पश्चिमसागरतीरे
सन्ध्या अवनता ।
अवनतश्च शृंङ्खलाबद्धो दानवः ।
तथापि स आदिमो बर्बर आकृष्य स्थितस्तव इतिहासम् ।
सुव्यवस्थायां स आनयति विशृङ्खलाम् ।
तव स्वभावस्य कृष्णगर्ततो हठाद् रविरागच्छति-
जङ्गमगत्या ।
तव नाड्यां विद्यते तस्य उन्मत्तता ।
उदात्तानुदात्तमन्त्रस्वरेण देवताया मन्त्र उत्तिष्ठति-
-आकाशे वायौ अरण्ये दिवा रात्रौ च ।
तथापि तव वक्षसः पातालतलाद् अर्धलालितो
नागदानवः फणमुत्तोल्य क्षणम् उत्तिष्ठति-



# दिल्ली-संस्कृत-अकादम्याः समाचाराः

## ( जनवरीमासतः मार्च ( २००१ ) पर्यन्तम् )

–डॉ० जीतरामभट्टः

### ४८. विद्यालयीय/महाविद्यालयीय-संस्कृतसेवासम्मान-समारोहः

६-१-२००१ दिनाङ्के मण्डीहाउसस्थ फिक्कीसभागारे संस्कृत अकादमी विद्यालयीय/महाविद्यालयीय संस्कृत-सेवा-सम्मानमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली विधानसभायाः वरिष्ठाः सदस्याः डॉ. पी.सी. कौशिक-महोदयाः प्रावोचन् यत् **'संस्कृतसाहित्ये सर्वविधं ज्ञानं विद्यते । संस्कृतज्ञैः विद्वद्भिश्चैव राष्ट्रस्य सम्यग्विकासः कृतः । स्वतन्त्रतायै, धर्मनिरपेक्षतायै, शान्त्यै विकासाय च संस्कृतसाहित्ये बहुविधं चिन्तनमवलोक्यते । साम्प्रतं देशे संस्कृतशास्त्रेष्वाधारितस्य ज्ञानस्य प्रसारस्यावश्यकता विद्यते । कार्येऽस्मिन् संस्कृतशिक्षकाः प्रवृत्ताः भवन्तु ।'** समारोहस्याध्यक्षाः दिल्ली संस्कृत-अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवोचन् यत् **'शिक्षकाः समाजस्य मार्गदर्शकाः भवन्ति । शिक्षकाणां सम्मानेनैव राष्ट्रस्य मानवृद्धिः भवति । संस्कृतस्य शिक्षकास्तु गुरोः गौरवं निर्वहन्ति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रोक्तवन्तः यत् **'दशमद्वादशयोः परीक्षयोः येषां शिक्षकाणां परिणामः शतप्रतिशतं भवति, तेषां कृते संस्कृत-अकादमी प्रतिवर्षं विद्यालयीय/महाविद्यालयीय संस्कृतसेवासम्मानसमारोहमायोजयति । वर्षेऽस्मिन् षट्शतसंख्यकाः शिक्षकाः सम्मानेनानेन सम्मानिताः भवन्ति, सप्तविंशति विद्यालयाः महाविद्यालयाः, संस्कृतविद्यालयाश्चापि सम्मानिताः सन्ति ।'** पूर्वविशेषगृहसचिवाः डॉ. सत्येदवत्रिवेदि-महोदयाः प्रावोचन् यत् **'पाश्चात्याः संस्कृतस्य ज्ञानविज्ञानपरकविषयाणां कृते उत्सुकाः सन्ति । तेषां जिज्ञासाशान्त्यै कार्यक्रमाणामावश्यकता विद्यते ।'** डॉ. के.के. मिश्र महोदयाः अवदन् यत् **'संस्कृतभाषा अतीव सरला विद्यते ।'** समारोहेऽस्मिन् डॉ.

गणेशदत्तशर्ममहोदयैः स्वकीयैः सारगर्भितवक्तव्यैः शिक्षकाणां मार्गदर्शनं कृतम् । अस्मिन् अवसरे श्रीमन्तः सुभाषविद्यालंकार महोदयाः प्रधानाचार्याः श्रीमन्तः टम्टामहोदयाः नैके च शिक्षकाः समुपस्थिताः आसन् ।

## ४९. कवेः साक्षात्कारः ( डॉ० रामकरण शर्मा )

नवदिल्ल्याम् । झण्डेवालानस्थ संस्कृत अकादम्याः संगोष्ठीकक्षे ७-१-२००१ दिनाङ्के दिल्ली-संस्कृत-अकादमी 'कवेः साक्षात्कारः' कार्यक्रममायोजितवती । कार्यक्रमेऽस्मिन्, संस्कृतजगतः प्रसिद्धानां कवीनां डॉ. रामकरणशर्ममहोदयानां व्यक्तित्वस्य कृतित्वस्य च विषये तेषामेव सान्निध्ये साक्षात्कारविधिना परिचर्चा सञ्जाता । कार्यक्रमस्योद्घाटने मुख्यातिथयः दिल्लीविधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः प्रोक्तवन्तः यत् **'कवेः अभिव्यक्तिः कदापि पराधीना न भवति । सः शब्दशक्तेः माध्यमेन स्वकीयानाम् अन्तर्भावानां प्राकट्यं करोति ।, डॉ. रामकरणशर्माणः संस्कृतजगतः प्रतिष्ठिताः विद्वांसः सन्ति । संस्कृतस्य प्रसाराय संवर्धनाय च एतैः बहुविधं प्रयासः कृतः ।'** अकादम्याः सचिवाः श्रीकृष्णसेमवालमहोदयाः प्रोक्तवन्तः यत् **'कवेः साक्षात्कारः' नाम्ना कार्यक्रमस्य नवीना विधिः दिल्ली-संस्कृत-अकादम्याः वर्षेऽस्मिन् समारब्धः । कार्यक्रमेऽस्मिन् संस्कृतकवीनां साक्षात्कारः भवति । यस्मिन् कविः काव्यलेखनस्याभिप्रेरणाया विषये स्वानुभवान् प्रस्तौति ।'** डॉ. रामकरणशर्ममहोदयाः प्रावोचन् यत् **'मम जन्म विहारप्रान्तस्य सारण जनपदान्तर्गते शिवपुरग्रामेऽभवत् । संस्कृतस्य साधनया कदा राजधान्यां कदा च वाराणस्यामेवमेव विभिन्नेषु स्थानेषु परिभ्रमन् सम्प्रत्यपि संस्कृतसंवर्धने दत्तचित्तोऽस्मि । ममाजीविकायां जीवनव्यवहारे च पदे-पदे यादृश्यः अनुभूतयः सञ्जाता तासामेव अभिव्यक्तिः मम काव्येषु अभवत् ।'** डॉ. रमाकान्तशुक्लमहोदयाः अवदन् यत् **'संस्कृतसेवायै भारतस्य महामहिमराष्ट्रपतिमहोदयैः सम्मानिताः डॉ. शर्ममहोदयाः प्रबुद्धाः चिन्तकाः सन्ति । एतेषां रचनाः 'मा भैषीः', 'तुलसीस्तवः',**

**'मदालसा', 'पाथेयशतकम्', 'सन्ध्या', 'वीणा', 'दीपिका', सर्वमङ्गला', सीमा, रवीशः लोकविश्रुताः सन्ति ।** कार्यक्रमेऽस्मिन् श्रीमन्तः सुभाषविद्यालंकारमहोदयाः, श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः, श्रीमन्तः सुभाषविद्यालंकारमहोदयाः, श्रीमन्तः कृष्णदत्त-शास्त्रिमहोदयाः, डॉ. गणेशदत्तशर्ममहोदयाः, श्रीमन्तः सुभाषवेदालंकारमहोदयाः, डॉ.धर्मामहोदयाः, डॉ. जयन्तीप्रसादमिश्रः, डॉ. प्रतिभा, श्रीमन्तः दुर्गाप्रसादडोभालमहोदयाः समुपस्थिताः आसन् ।

## ५०. द्विदिवसीयः संस्कृतनाट्यसमारोहः ( २०००-२००१ वर्षीयः )

नवदिल्ल्याम् । पहाडगंजस्थ महाराष्ट्रियशिक्षासंस्कृति-संस्थायाः सभागारे जनवरी (२००१) मासस्य सप्तदश-अष्टादश-दिनाङ्कयोः दिल्ली-संस्कृत-अकादमी द्विदिवसीयं संस्कृतनाट्यसमारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली-संस्कृत-अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् **'नाटकानि साहित्यस्याधारभूतानि भवन्ति । समाजस्य कृते अभिप्रेरणादानाय नाटकानां मञ्चनमावश्यकं विद्यते ।'** समारोहस्याध्यक्षाः प्रसिद्धाः पत्रकाराः श्रीमन्तः विजयशंकरचतुर्वेदि महोदयाः अवोचन् यत् **'संस्कृतभाषायामुत्कृष्टानि नाटकानि सन्ति । येषां मञ्चनं विश्वस्यानेकेषु देशेषु वर्तमानेऽपि भवति ।'** समारोहस्य भूमिकायां संस्कृत-अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् **'नाटकस्य कल्पना सर्वप्रथमं संस्कृतभाषायामेवा-भवत् । संस्कृतेः प्रसारस्य कृते संस्कृतनाटकानां मञ्चनमावश्यकं वर्तते ।'** समारोहेऽस्मिन् पश्चिमएन्क्लेवस्थ डी.ए.वी. सेन्टेनरी पब्लिक विद्यालयस्य, पालमस्थ डी.ए.वी. पब्लिक विद्यालयस्य, आनन्दपर्वतस्थ रामजस विद्यालयस्य, झण्डेवालानस्थ सरस्वतीबालमन्दिर-विद्यालयस्य संगमपार्कस्थ महावीरमॉडलविद्यालयस्य नाटकानां मञ्चनं जातम् । समारोहेऽस्मिन् डॉ. रमाकान्तशुक्लमहोदयाः, श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः आचार्य नरेन्द्रपाण्डेयमहोदयाः, डॉ. शक्तिकपूरमहोदयाः, श्रीमन्तः ओम्प्रकाशठाकुरमहोदयाः, डॉ. रमेशपाण्डेयमहोदया-श्चोपस्थिताः आसन् ।

## ५१. गणतन्त्रदिवसस्य स्वर्णजयन्त्युपलक्ष्ये राष्ट्रियं संस्कृतकविसम्मेलनम्

दिल्ल्याम् । २०-१-२००१ दिनाङ्के कश्मीरीगेटस्थ गुरुगोविन्दसिंह-इन्द्रप्रस्थ-विश्वविद्यालयस्य सभागारे दिल्ली संस्कृत अकादम्या गणतन्त्रदिवसस्य स्वर्णजयन्त्युपलक्ष्ये राष्ट्रियसंस्कृतकविसम्मेलनमायोजितम् । सम्मेलनस्योद्घाटनं कुर्वन्तः संसत्सदस्याः डॉ. कर्णसिंहमहोदयाः प्रावोचन् यत् **'संस्कृतभाषायां सर्वविधं ज्ञानं विद्यते, सर्वासां विधानां साहित्यं संस्कृतभाषायां वर्तते । ज्ञानविज्ञानयोः सर्वे विषयाः संस्कृतशास्त्रेषु सन्ति । गौरवस्य विषयः वर्तते यत् वर्तमानेऽपि संस्कृतभाषायां रचितानां ग्रन्थानां संख्या अधिका विद्यते, साम्प्रतमपि संस्कृते काव्यरचना भवति, कविसम्मेलनञ्चायोज्यते । अनेन संस्कृतस्य सार्वभौमिकता अनुभूयते ।'**

विशिष्टातिथयः दिल्लीसर्वकारस्य विकासखाद्यापूर्तिमन्त्रिणः श्रीमन्तः डॉ. योगानन्द शास्त्रिमहोदयाः प्रावोचन् यत् **'कस्यापि देशस्य जगतश्च इतिहासस्य ज्ञानाय संस्कृत-शास्त्राणामध्ययनमावश्यकं वर्तते । कवयः समाजस्य प्रतिबिम्बं स्वकीयासु रचनासु प्रस्तुवन्ति ।'** दिल्ली सर्वकारस्य गृहविभागस्य प्रधानसचिवाः श्रीमन्तः सेवारामशर्म महोदयाः दिल्लीसर्वकारस्य शिक्षायाः संयुक्तसचिवाः श्रीमन्तः डी.आर.टम्टा महोदयाश्चावसरे-ऽस्मिन्नुपस्थिताः आसन् । स्वकीये प्रास्ताविके भाषणे अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवोचन् यत् **'दिल्ली-संस्कृत-अकादमी प्रतिवर्षं विविधानां समारोहाणां क्रमे गणतन्त्रदिवसस्योपलक्ष्ये राष्ट्रियं संस्कृतकविसम्मेलनमायोजयति । यस्मिन् भारतवर्षस्य विविधेभ्यः प्रान्तेभ्यः कवयः कवयित्र्यश्च सम्मिलिताः भवन्ति ।'**

कविसम्मेलनेऽस्मिन् अमृतसरतः डॉ. दलवीरसिंहः, बनारसतः डॉ. मनुलता, डॉ. शिवजी-उपाध्यायश्च, सागरतः डॉ. राधावल्लभ त्रिपाठिमहोदयाः, विहारतः श्रीमत्प्रकाशपाण्डेयः मसूरीतः डा. हरिदत्तभट्ट शैलेशः, पञ्जाबतः डॉ. जगदीशप्रसादसेमवालः, विलासपुरतः डॉ. पुष्पादीक्षितः, पटियालातः डॉ. इन्द्रमोहनसिंहः, उज्जैनतः डॉ. विन्देश्वरीप्रसादमिश्रः डॉ. श्रीनिवासरथः, जयपुरतः डॉ. सुभाषवेदालंकारः, हरियाणातः डॉ. एम.डी. पाण्डेयः, पिलखुवातः

डॉ. वागीशदिनकरः, रायबरेलीतः डॉ. प्रशस्यमित्रशास्त्री, उत्तराञ्चलतः डॉ. जनार्दनप्रसाद-मणिः, दिल्लीतः डॉ. रमाकान्तशुक्लः, आचार्यश्रीधरप्रसादः, कविरत्नं श्रीकृष्णसेमवालः, मुम्बईतः डॉ. कमलशङ्कर-अभ्यंकरश्च काव्यपाठमकुर्वन् । सम्मेलनस्याध्यक्षाः दिल्ली-संस्कृत-अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः उक्तवन्तः यत् **'कवयः सूक्ष्मद्रष्टारः, भवन्ति ये स्वानुभूत्या समाजस्य समस्यानां प्रकाशनं कुर्वन्ति ।'** अवसरेऽस्मिन् अतिरिक्त शिक्षा निदेशकाः श्रीमन्तः एन.एस. टोलियाः प्रसिद्धाः पत्रकाराः श्रीमन्तः विजयशङ्कर- चतुर्वेदिनः, प्रो. पुष्पेन्द्रकुमारमहोदयाश्चाप्युपस्थिताः आसन् ।

## ५२. 'भावना' ग्रन्थस्य लोकार्पणसमारोहः

दिल्ल्याम् । शामनाथमार्गस्थ प्रधानगृहसचिवानां कार्यालयीयकक्षे १२-२-२००१ दिनाङ्के दिल्ली-संस्कृत-अकादमी 'भावना' ग्रन्थस्य लोकार्पणसमारोहमायोजितवती, समारोहस्योद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य प्रधानगृहसचिवाः श्रीमन्तः सेवारामशर्म-महोदयाः प्रावोचन् यत् 'संस्कृत ग्रन्थानामन्यासां भाषाणामपेक्षया महत्त्वमधिकं विद्यते । संस्कृतभाषायां साहित्यस्य विविधाः विधाः सन्ति 'भावना' पुस्तके तासु विधासु एवैका विधा अवलोक्यते ।' कार्यक्रमस्य प्रारम्भे अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः प्रोक्तवन्तः यत् 'प्राचीनकालत एव विदुषां परीक्षणाय विविधाः प्रतियोगिताः आसन् तास्वेव श्लोकसमस्यापूर्तिः विद्वत्वपरीक्षायै निकषा आसीत्, तामाधार्य 'भावना' शब्दस्योपरि अकादमी श्लोकसमस्यापूर्तिप्रतियोगितामायोजितवती, पुस्तकेऽस्मिन् षट्चत्वारिंशत् कवीनां श्लोकाः प्रकाशिताः सन्ति ।' कार्यक्रमस्याध्यक्षाः अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रोक्तवन्तः यत् 'भावना' शब्दमाधार्य साम्प्रतिके काले प्रतियोगितामायोज्य अकादम्या महत्वपूर्णं कार्यं कृतम् । यतः वर्तमाने 'भावना' शब्दस्यास्तित्वं नावलोक्यते । कवय एव भावप्रेरकाः भवन्ति, भावनायामाधारिताः श्लोकाः जनेषु सद्भावनां प्रेरयिष्यन्ति इति मे विश्वासः' । अवसरेऽस्मिन् डॉ. कृष्णलालः, डॉ. अवनीन्द्रकुमारः

डॉ० पुष्पेन्द्रकुमार:, डॉ. शक्तिकपूर:, आचार्य: रामनाथसुमन:, डॉ. महावीर: डॉ० ओम्प्रकाश-ठाकुरश्च उपस्थिता आसन् ।

## ५३. कवे: साक्षात्कार: ( श्रीओम्प्रकाशठाकुर: )

दिल्ल्याम् । करोलबागोपनगरस्थ झण्डेवालानस्थाने दिल्ली-संस्कृत-अकादम्या कवे: साक्षात्कार: कार्यक्रम: आयोजित: । साक्षात्कारे अस्मिन् प्रसिद्धानां कवीनां श्रीमताम् ओम्प्रकाशठाकुरमहोदयानां साक्षात्कार: सञ्जात: । कार्यक्रमस्योद्घाटनं कुर्वन्त: दिल्ली संस्कृत अकादम्या: उपाध्यक्षा: श्रीमन्त: कुलानन्दभारतीयमहोदया: प्रावोचन् यत् **'संस्कृतस्य लेखका: कवयश्च परोक्षरूपेणैव कार्यं कुर्वन्ति, लोकेषणा क्षुत्पिपासा तेषु बहुधा न दृश्यते, अत एव तेषां कृतीनां व्यक्तित्वस्य च परिचय: प्रकाशनीयो वर्तते ।'** अकादम्या: सचिवा: श्रीमन्त: श्रीकृष्णसेमवालमहोदया: अवदन् यत् **'अकादमी कवीनां लेखकानाञ्च कृते विविधानां कार्यक्रमाणामायोजनं विदधाति, किन्तु तेषां कृतित्वव्यक्तित्वयो: परिचयाय 'कवे: साक्षात्कार:' कार्यक्रमोऽयमायोज्यते । यस्मिन् कवे: मुखादेव काव्यलेखनायाभिप्रेरणाया: परिचयो भवति। कार्यक्रमेऽस्मिन् कवे: श्रीमन्त: ओम्प्रकाशठाकुरस्य साक्षात्कार: वर्तते ।'** साक्षात्कारेऽस्मिन् श्रीमन्त: ओम्प्रकाशठाकुर-महोदया: उपस्थितानां जनानां प्रश्नानामुत्तराणि अयच्छन् । तेऽवदन् यत् **'संस्कृतसाहित्यस्य लेखनायै काव्यस्य रचनायै च ममाभिप्रेरणा: जीवनेऽनुभूता: अनुभवा एव सन्ति । समये-समये मित्राणां प्रेरणया मम रचनासु परिष्कार: सञ्जात: ।'** डॉ. रमाकान्तशुक्ल:, डॉ. क्षेमचन्द्र:, श्रीकृष्णदत्तशास्त्री, आचार्य: नरेन्द्र पाण्डेय:, डॉ. कृष्णलालश्च नैके विद्वांस: विदुष्यश्चोपस्थिता: आसन् ।

## ५४. 'श्रीरवीन्द्रकाव्यकुसुमाञ्जलि:' ग्रन्थस्य लोकार्पणसमारोह:

नव दिल्ल्याम् । पूर्विपटेलनगरे-दिल्ली-संस्कृत-अकादमी २०-२-२००१ दिनाङ्के

अकादम्या प्रकाशितस्य **'श्रीरवीन्द्रकाव्यकुसुमाञ्जलिः'** ग्रन्थस्य लोकार्पण समारोहमायोजितवती। समारोहस्योद्घाटनं कुर्वन्तः दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः अवोचन् यत् **'संस्कृतभाषायामाधारितस्य ज्ञानस्य अन्यासु भाषासु अनुवादः करणीयः, येन अन्यभाषाभाषिणः अपि संस्कृतसाहित्यस्य परिचयं प्राप्तुं समर्थाः भविष्यन्ति।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवोचन् यत् **'श्रीमतां रवीन्द्रनाथठाकुरमहोदयानां साहित्यं विशिष्टं विद्यते, तेषां साहित्यस्य बंग्लाभाषातः संस्कृतभाषायामनुवादकार्याय दिल्ली-संस्कृत-अकादमी प्रयासमकरोत् प्रकारणेऽस्मिन् अयमेतादृशः प्रथमः प्रयासः विद्यते, 'श्रीरवीन्द्रकाव्यकुसुमाञ्जलिः ( प्रथमोभागः ) । ग्रन्थोऽयं त्रिषु भागेषु प्रकाशितो भविष्यति ।'** अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवोचन् यत् 'श्रीमतां रवीन्द्रनाथठाकुर महोदयानां साहित्ये तेभ्यः विश्वस्तरीयः नोबेलपुरस्कारः प्रदत्तः । तेषां ग्रन्थानां संस्कृतभाषायामनुवादायाकादम्यै अहं वर्धापनं प्रयच्छामि ।' दिल्लीविश्वविद्यालयस्य संस्कृतविभागस्याध्यक्षाः डॉ. कृष्णलालमहोदयाः, पूर्वप्राचार्याः डॉ. गणेशदत्तशर्माणः, प्रो. पुष्पेन्द्र कुमारमहोदयाः, श्रीमन्तः ओ.पी.सर्राफ महोदयाः, आचार्याः नरेन्द्रपाण्डेयाः पूर्वकुलपतयः श्रीमन्तः सुभाषविद्यालंकार महोदयाश्चावसरेऽस्मिन्नुपस्थिताः आसन् ।

## ५५. पुरस्कारवितरणसमारोहः

दिल्ल्याम् । २७-२-२००१ दिनाङ्के दिल्ली संस्कृत अकादमी राजनिवासमार्गस्थे शाहसभागारे पुरस्कारवितरणसमारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली-सर्वकारस्य भाषाकलासंस्कृतिविभागस्य सचिवाः आदरणीयाः नीताबालीमहोदयाः प्रोक्तवत्यः यत् **'संस्कृतभाषया एव भारतराष्ट्रस्य विश्वस्मिन् विश्वे सम्मानोऽस्ति । ज्ञानविज्ञानयोः अनुसन्धानाय संस्कृतसाहित्यमनुकरणीयमेवास्ति ।'**

समारोहस्य प्रास्ताविकेऽकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन्

यद् **'अकादम्या आयोजितासु विभिन्नासु प्रतियोगितासु पुरस्कृतेभ्यः छात्रेभ्यः समारोहेऽस्मिन् पुरस्कारराशिः, प्रमाणपत्रं संस्कृतसाहित्यञ्च प्रयच्छति । अकादम्या वर्षेऽस्मिन् 2200 छात्रेभ्यः छात्राभ्यश्च पुरस्काराः प्रदीयन्ते ।'** समारोहस्याध्यक्षाः अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् 'संस्कृतभाषया छात्रेषु सुसंस्काराणां स्थापना भवति । संस्कृतोच्चारणेन तेषां कण्ठशुद्धिः प्रतियोगिताभिश्च तेषां बौद्धिकविकासः भवति । अवसरेऽस्मिन् डॉ. शक्तिकपूरमहोदयाः, श्रीमन्तः शब्बीर अहमद महोदयाः, डॉ. कृष्णलालमहोदयाः, श्रीमत्यः वेदवती धींगड़ामहोदयाः, डॉ. क्षेमचन्द-महोदयाश्चोपस्थिताः आसन् ।

## ५६. संस्कृतशिक्षणकेन्द्रस्योद्घाटनसमारोहः

झण्डेवालानस्थ दिल्ली संस्कृत अकादम्याः संगोष्ठी कक्षे २८-२-२००१ दिनाङ्के अकादम्या संस्कृतशिक्षणकेन्द्रस्योद्घाटनसमारोहः आयोजितः । समारोहस्योद्घाटने श्रीलालबहादुर शास्त्रीराष्ट्रिय संस्कृत विद्यापीठस्य कुलपतयः श्रीमन्तः डॉ. के.पी.ए. मेनन् महोदयाः अवदन् यद् **'अन्येषां विषयाणां ज्ञानेन सह यदि संस्कृतभाषायाः तस्य साहित्यस्य च ज्ञानं भवेत् तर्हि विषयाणामुपयोगितायै साहाय्यं प्राप्यते । ये जनाः संस्कृतं पठितुमुत्सुकाः सन्ति, तेभ्यः अकादम्याः केन्द्रमेतत् सहायकं भविष्यति ।'** समारोहस्याध्यक्षाः श्रीमन्तः कुलानन्दभारतीय महोदयाः अवदन् यत् 'आजीविकायै संस्कृतस्य अध्ययनं यद्यपि उपयोगी न मन्यते, तथापि आजीविकायाः विविधासु विधासु संस्कृतस्योपयोगिता दृश्यते ।' केन्द्रेऽस्मिन् पञ्चाशत् जिज्ञासवः संस्कृतं पठितुमुपस्थिताः आसन् । केन्द्रस्यास्य प्रशिक्षकाः श्रीमन्तः डॉ. सन्तोषकुमारशुक्लमहोदयाः अवदन् यत् **'संस्कृत भाषा कठिना नास्ति, जनेषु तस्याः साहित्यिकं स्वरूपं प्रचारितं विद्यते, अनेन तस्याः काठिन्यविषये दुष्प्रचारोऽस्ति सम्भाषणे तु संस्कृतस्येव मधुरा काऽपि अन्या भाषा एतादृशी नास्ति ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः प्रावोचन् यत् **'संस्कृतेन संस्कृता संस्कृतिः**

**एव मानवैः अनुकरणीया, आजीविकादिषु व्यवहारेषु संस्कृतस्य महत्त्वमधिकं विद्यते ।'** समारोहेऽस्मिन् श्रीमन्तः प्रकाशचन्दजैनमहोदयाः, श्रीमन्तः बचनलालमहोदयाः, श्रीमन्तः दुर्गाप्रसादडोभालमहोदयाश्चोपस्थिताः आसन् ।

## ५७. अकादम्याः वार्षिकी-लोकार्पण-समारोहः

दिल्ली सर्वकारस्य शिक्षायाः संयुक्तसचिवानां कक्षे, पुराना सचिवालये ५-३-२००१ दिनाङ्के दिल्ली संस्कृत अकादम्या प्रकाशितायाः वार्षिक्याः लोकार्पणसमारोहः आयोजितः । समारोहस्योद्घाटने दिल्लीसर्वकारस्य शिक्षायाः संयुक्तसचिवाः श्रीमन्तः डी.आर.टम्टामहोदयाः अवदन् यत् **'संस्कृतभाषायामाजीविकायै सर्वे विषयाः सन्ति, किन्तु तेषामुपयोगा-यानुसन्धानकार्यस्यावश्यकता विद्यते । दिल्ली-संस्कृत-अकादमी विभिन्नैः कार्यक्रमैः संस्कृत साहित्ये स्थितानां विषयाणां प्रसाराय कृतसङ्कल्पा विद्यते । 'वार्षिकी'ति पुस्तके तेषामेव कार्यक्रमाणां परिचयः प्रकाशितोऽस्ति ।'**

अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवदन् यत् **'संस्कृतशास्त्रेषु आधारितानि शोधकार्याणि विभिन्नेषु विश्वविद्यालयेषु सम्पाद्यमानानि सन्ति, अनेन सिद्ध्यति यत् संस्कृते सर्वविधं ज्ञानं विद्यते । अकादम्याः विविधैः कार्यक्रमैः केवलं दिल्ल्यामेव नहि अपितु अखिलेऽस्मिन् भारते संस्कृतस्य प्रसारोऽभवत् ।'** समारोहेऽस्मिन् श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः, आचार्याः नरेन्द्रपाण्डेयमहोदयाः, श्रीमन्तः सुभाषविद्यालंकार-महोदयाः, डॉ. गणेशदत्तशर्ममहोदयाः, डॉ. मोहनचन्दमहोदयाः, डॉ. धर्मामहोदयाः, डॉ. सुन्दरी सिद्धार्थमहोदयाश्चोपस्थिताः आसन् ।

## ५८. 'प्रियदर्शिनीयम्' काव्यस्योपरि परिचर्चा

नवदिल्ल्याम् । मण्डीहाउस्थ त्रिवेणीसभागारे १४-३-२००१ दिनाङ्के दिल्ली-संस्कृत-अकादमी 'प्रियदर्शिनीयम्' काव्यस्योपरि परिचर्चामेकामायोजितवती । परिचर्चायाः उद्घाटनं

कुर्वन्तः दिल्लीसर्वकारस्य शिक्षा-उद्योगतकनीकीशिक्षापर्यटनभाषा-ऊर्जामन्त्रिणः श्रीमन्तः डॉ. नरेन्द्रनाथमहोदयाः प्रावोचन् यत् **'संस्कृतस्य साहित्यकाराः प्राचीनकालादेव इतिहासाधारितस्य साहित्यस्य रचनाः अकुर्वन् । प्रियदर्शिनीयं काव्यमपि तस्यामेव परम्परायां रचितं काव्यं विद्यते ।' राष्ट्रियैकतायै 'प्रियदर्शिनीयम्' काव्यं महत्त्वपूर्णं वर्तते ।'** दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः अवोचन् यत् **'श्रीमत्याः इन्दिरागान्धिमहोदयायाः जीवनं राष्ट्राय समर्पितमासीत् । तासां व्यक्तित्वे सेवा-राष्ट्र-प्रेम-दया- सदृशाः गुणाः आसन् ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् **'श्रीमत्याः इन्दिरागान्धिमहोदयायाः जीवनमाधार्य मया पञ्चविंशतिवर्षेभ्यः पूर्वमपि 'इन्दिराकीर्तिशतकम्' नाम्ना काव्यं रचितम् । परमधुना मया श्रीमत्याः इन्दिरागाँधिमहोदयायाः जीवनस्योत्तरार्द्धस्य वृत्तान्तं संयोज्य प्रियदर्शिनीयमिति काव्यं विरचितम् ।'**

अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः अवदन् यत् 'संस्कृतकाव्येषु वर्णितानां राष्ट्रनेतॄणां विवरणानां सूत्राणि गृहीत्वैव इतिहासविदः इतिहाससाहित्यसंवर्द्धने प्रवृत्ताः भवन्ति ।' परिचर्चायामस्यां डॉ. गणेशशर्ममहोदयाः 'प्रियदर्शिनीयं काव्यस्य समीक्षाम् अकुर्वन्, डॉ. सत्यदेवचौधरीमहोदयाः प्रियदर्शिनीयमं काव्ये राष्ट्रैक्यं, डॉ. मोहनचन्दमहोदयाः श्रीमतीनामिन्दिरागाँधिमहोदयानामुपरि लिखितानां काव्यानां परिचयं, डॉ. धर्मामहोदयाः राजनीतिकदृष्ट्या प्रियदर्शिनीयम्, डॉ. प्रवेशसक्सेनाः सामाजिकदृष्ट्या प्रियदर्शिनीयम्, डॉ. चन्द्रभूषण झाः इन्दिराकाव्यपरम्परा-दृष्ट्या प्रियदर्शिनीयम्, डॉ. सन्तोषकुमारशुक्लः मातृशक्तिपरक काव्यपरम्परादृष्ट्या प्रियदर्शिनीयम्, डॉ. उर्वी महोदयाश्च इतिहासकाव्य-परम्परादृष्ट्या प्रियदर्शिनीयमिति प्रस्तुतवन्तः । परिचर्चायामस्यां प्रसिद्धाः पत्रकाराः श्रीमन्तः विजयशङ्कर चतुर्वेदिमहोदयाः श्रीमन्तः कृष्णदत्तशास्त्रिमहोदयाः आचार्याः नरेन्द्रपाण्डेय-महोदयाश्चाप्यु- पस्थिताः आसन् ।

## ५९. द्विदिवसीय-अखिलभारतीय संस्कृतपत्रकारसम्मेलनस्योद्घाटन-समारोहः

दिल्ल्याम् । अकादम्याः संगोष्ठीकक्षे १७-३-२००१ दिनाङ्के अकादमी द्विदिवसीय-अखिल भारतीयसंस्कृतपत्रकारसम्मेलनस्योद्घाटनसमारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली विधानसभायाः वरिष्ठाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामि महोदयाः प्रावोचन् यत् **'पत्रकारितायाः कार्यमन्येषां कार्याणामपेक्षया सुकरं नास्ति, यद्यपि कार्येऽस्मिन् दक्षिणा अधिका विद्यते । संस्कृतस्य पत्रकारितायां तु दक्षिणापि नास्ति अतः संस्कृतपत्रकारितायाः अर्थदृष्ट्या चिन्तनमावश्यकमस्ति ।'** कार्यक्रमस्याध्यक्षाः दिल्ली-संस्कृत-अकादम्या उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयामहोदयाः अवदन् यत् **'संस्कृतपत्रकाराः स्वान्तःसुखाय पत्रकारितां कुर्वन्ति । ते सर्वेऽपि वन्दनीयाः सन्ति ये निःस्वार्थभावेन संस्कृतपत्रकारितायां संरताः सन्ति ।'** दिल्ली विश्वविद्यालयस्य संस्कृतविभागस्य पूर्वाध्यक्षाः डॉ. कृष्णलालमहोदयाः अवदन् यत् **'पत्रकारितायाः विकासः संस्कृतभाषया एवाभवत्, यद्यपि लोके प्रचलितानां भाषाणां पत्रकारिता अर्थदृष्ट्या समृद्धा जाता, किन्तु पत्रकारितायाः अवधारणायाः कृते संस्कृतसाहित्यस्याध्ययनमावश्यकं वर्तते ।'**

सम्मेलनेऽस्मिन् पञ्चाशत् संख्यकाः संस्कृतपत्रकाराः सम्मिलिताः अभवन् । कानपुरतः 'पारिजातम्' पत्रिकायाः सम्पादकाः श्रीमन्तः प्रकाशमित्रशास्त्रिणः, वाराणसीतः सागरिकायाः सम्पादकाः डॉ. रामजी उपाध्यायाः, 'गाण्डीवम्' पत्रस्य सम्पादकाः डॉ. राधेश्यामधरद्विवेदिनः अर्वाचीन संस्कृतस्य सम्पादकाः डॉ. रमाकान्तशुक्लाः, महाराष्ट्रतः शारदापत्रिकायाः सम्पादकाः श्रीमन्तः वसन्तगाड्गिलमहोदयाः, कानपुरतः 'नवप्रभातम्' पत्रस्य पत्रकाराः, जयपुरतः भारतीपत्रस्य सम्पादकाः श्रीमन्तः पद्मशास्त्रिणः, अभिव्यक्ति पत्रिकायाः सम्पादिकाः डॉ. दीपा-अग्रवालाः, आर्षज्योतिःपत्रिकायाः सम्पादकाः सूर्यनारायणनन्दाः संस्कृतमकन्दाकिन्याः सम्पादकाः, 'सन्देश' पत्रिकायाः सम्पादकाः श्रीमन्तः विश्वासमहोदयाः, सुधर्मापत्रस्य सम्पादकाः, चन्दामामा पत्रिकायाः सम्पादकाः, नागरी संगमस्य पत्रकाराः सम्पादकाश्च

सम्मेलने उपस्थिता आसन् ।

**६०. द्विवदिवसीय-अखिल-भारतीय-संस्कृतपत्रकारसम्मेलनस्य समापनसमारोहः**

दिल्ल्याम् । अकादम्याः संगोष्ठी कक्षे १८-३-२००१ दिनांङ्के दिल्ली संस्कृत अकादमी द्विदिवसीय-अखिल भारतीय संस्कृतपत्रकारसम्मेलनस्य समापनसमारोहमायोजितवती। समारोहेऽस्मिन् द्विदिवसीय-अखिलभारतीय संस्कृत पत्रकारसम्मेलने उपस्थिताः संस्कृत पत्रकाराः संस्कृतपत्रकारितायाः, संस्कृतभाषायाश्च स्थितेः विकासस्य च विषये विविधान् प्रस्तावान्नपि पारितवन्तः । सम्मेलने प्रस्तुतानां विषयाणां समीक्षाऽपि सञ्जाता । 'अर्वाचीनसंस्कृतम्' पत्रिकायाः सम्पादकाः श्रीमन्तः डॉ. रमाकान्तशुक्ल महोदयाः अवोचन् यत् **'सङ्घेशक्तिः कलौ युगे' वचनमनुसृत्य संस्कृतपत्रकाराः यदि प्रत्येकं वर्षे एकत्रीभूय स्वकीयानां समस्यानां चिन्तनं कुर्युः, तर्हि संस्कृतपत्रकारितायाः विकासस्य सन्दर्भे कार्यमपि कर्तुं शक्नुवन्ति ।'** शारदापत्रिकायाः सम्पादकाः श्रीमन्तः वसन्तगाडगिलमहोदयाः उक्तवन्तः यत् **'संस्कृतपत्रिकाणां पाठकसंख्या न्यूनतमा विद्यते, पत्रिकाप्रकाशनस्य व्ययोऽपि स्वयमेव पत्रकाराः सम्पादकाः वा कुर्वन्ति । प्रकाशितासु पत्रिकासु अधिकतमाः प्रतयः निःशुल्कमेव वितरिताः भवन्ति । अतः सर्वतो प्राक् पाठकसंख्यावृद्ध्यै प्रयासः करणीयः** 'सागरिका' पत्रिकायाः सम्पादकाः डॉ. रामजी उपाध्यायाः अवोचन् यत् **'संस्कृतमेव स्वकीये मूलभूते स्वरूपे व्यवह्रियते । अतः संस्कृतज्ञानां, संस्कृतसाधकानां, संस्कृताधारितानाञ्च चिन्ता करणीया, यदा ते अर्थदृष्ट्या चिन्ताविहीनाः भविष्यन्ति, लोके संस्कृतं प्रति आकर्षणं स्वयमेव भविष्यति ।'** गाण्डीवपत्रस्य सम्पादकाः प्रो. राधेश्यामधरद्विवेदिनः अवोचन् यत् **'संस्कृतभाषायां विभिन्नाः पत्रिकाः प्रकाशिताः भवन्ति, किन्तु तेषां प्रसारसंख्यायाः विषये चिन्तनं करणीयम् ।'**

अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवदन् यत् **'संस्कृतपत्रकारिता आजीविकाधारिता नास्ति, अतएव संस्कृतपत्रकाराः अर्थदृष्ट्या**

**चिन्तिताः सन्ति । यदि संस्कृतपत्रकाराः पत्रकारितामेव जीविकायाः आलम्बनं स्वीकुर्युः तर्हि संस्कृतपत्रकारितायाः विकासः भवितुं शक्नोति ।'** अवसरेऽस्मिन् स्वातन्त्र्यसेनान्यः आचार्याः नरेन्द्रपाण्डेय महोदयाः, श्रीमन्तः कृष्णदत्तशास्त्रि महोदयाश्चप्युपस्थिताः आसन् ।

## ६१. संस्कृतसाहित्यसेवासम्मानसमारोहः

नवदिल्ल्याम् । दिल्ली-सर्वकारस्य शामनाथ-मार्गस्यातिथिभवनस्य प्राङ्गणे २०-३-२००१ दिनाङ्के दिल्ली-संस्कृत-अकादमी संस्कृतसाहित्यसेवासम्मानसमारोह-मायोजितवती । समारोहमुद्घाटयन्तः दिल्ली-सर्वकारस्य शिक्षामन्त्रिणः श्रीमन्तः डॉ. नरेन्द्रनाथमहोदयाः प्रावोचन् यत् **'कस्याः अपि भाषायाः साहित्यकाराः एव तत्समाजस्य मार्गदर्शकाः भवन्ति । साहित्यकाराणां सम्मानेन साहित्यस्य सम्मानः भवति ।'** दिल्ली विधानसभायाः सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः अवदन् यत् **'सम्मानेन विद्वद्भ्यः साहित्यरचनायै अभिप्रेरणा मिलिष्यति, अतः साहित्यसंवर्धनाय साहित्यकाराणां सम्मानः करणीयः ।'**

समारोहाध्यक्षाः दिल्ली-संस्कृत-अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीय-महोदयाः अवोचन् यत् **'संस्कृतभाषायाः साहित्यकारा एव साम्प्रतमपि मौलिकं चिन्तनं कुर्वन्ति, अन्यासु भाषासु तु पूर्वजानां लेखकानां पिष्टपेषणमेव भवति । संस्कृतसाहित्यकाराणां सम्मानेन वयं सम्मानिताः स्मः ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः उक्तवन्तः यत् **'अकादमी प्रतिवर्षं संस्कृतसाहित्यस्य भाषायाश्च साधकानां सम्मानं करोति वर्षेऽस्मिन् नवसंख्यकाः विद्वांसः संस्कृतसाहित्यसेवासम्मानेन सम्मानिताः सन्ति ।'** शालवस्त्र-प्रशस्तिपत्रसंस्कृतसाहित्यैः सह एकपञ्चाशत्सहस्र-रूप्यकाणामखिलभारतीयसंस्कृत साहित्यसेवासम्मानः दिवंगतेभ्यः डॉ. ओगेटिपरीक्षितशर्म-महोदयेभ्यः तेषां धर्मपत्नी श्रीमती शीलापरीक्षितशर्मा स्वीकृतवती, शालवस्त्र-प्रशस्तिपत्र-संस्कृतसाहित्यैः सह एकविंशतिसहस्ररूप्यकाणाम् अखिल भारतीय संस्कृतसाहित्यसेवासम्मानः

(आयुर्वेदः) डॉ. मायाराम-उनियालमहोदयेभ्यः, शालवस्त्र-प्रशस्तिपत्रसंस्कृतसाहित्यैः सह एकविंशतिसहस्त्ररूप्यकाणाम् अखिलभारतीयसंस्कृतसाहित्यसेवासम्मानः (ज्योतिषः) श्रीमद्भ्यः शिवमङ्गलमिश्रमहोदयेभ्यः । शालवस्त्र-प्रशस्तिपत्रसंस्कृतसाहित्यैः सह एकविंशति-सहस्त्ररूप्यकाणां (प्रत्येकं) संस्कृतसाहित्यसेवासम्माना: डॉ. सूबेसिंहराणामहोदयेभ्यः, डॉ. उषाचौधरीमहोदयेभ्यः, डॉ. अवनीन्द्रकुमारमहोदयेभ्यः स्वामिअनन्तभारतीमहोदयेभ्यश्च वितरिताः अभवन् । शालवस्त्र-प्रशस्तिपत्रसंस्कृतसाहित्यैः सह एकादशसहस्त्ररूप्यकाणां संस्कृतसेवासम्मानौ आचार्य विद्यानिधिपाण्डेयमहोदयेभ्यः श्रीहीरालालशास्त्रिमहोदयेभ्यश्च वितरितौ । अवसरेऽस्मिन् दिल्ली सर्वकारस्य प्रधान गृहसचिवाः श्रीमन्तः सेवारामशर्ममहोदयाः भाषाकलासंस्कृतविभागस्य सचिवाः आदरणीयाः नीताबालीमहोदयाः संयुक्तसचिवाः श्रीमन्तः डी.आर.टम्टा महोदयाः शिक्षानिदेशालयस्यातिरिक्तनिदेशकाः श्रीमन्तः एन.एस. टोलिया महोदयाः प्रसिद्धाः पत्रकाराः श्रीमन्तः विजयशङ्करचतुर्वेदिमहोदयाः प्रो. पुष्पेन्द्रकुमार महोदयाश्चोपस्थिताः आसन् । अन्येऽपि विद्वांसः विदुष्यश्चावसरेऽस्मिन्नुपस्थिताः आसन् ।

## ६२. संस्कृत-विद्यालयीय-नाट्य-समारोहः

दिल्ल्याम् । विष्णुदिगम्बरमार्गस्थ श्रीपुरुषोत्तमहिन्दीभवनन्याससमितेः सभागारे २२-३-२००१ दिनाङ्के दिल्ली-संस्कृत-अकादमी संस्कृतविद्यालयीयनाट्यसमारोहमायोजितवती। समारोहस्योद्घाटने दिल्ली-संस्कृत-अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रावोचन् यत् **'नाट्येन अभिव्यक्तिः सरला भवति, नाट्यमाध्यमेन शिक्षायाः प्रसारः शीघ्रं भवितुं शक्नोति । नाटकानां कल्पना सर्वतो पूर्वं संस्कृतभाषायामेवाभवत् ।'** अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवाल महोदयाः अवोचन् यत् **'अकादम्याः कार्यक्रमैः केवलं दिल्ल्यामेव नहि अपितु समग्रेऽपि भारते संस्कृतस्य प्रसारोऽभवत् । संस्कृतस्य पारम्परिकविद्यालया एव संस्कृतभाषायाः मौलिकं शिक्षणं कुर्वन्ति । संस्कृतविद्यालयीय नाट्यसमारोहेऽस्मिन् षड्विद्यालयानां संस्कृतनाटकानि प्रस्तुतानि**

**भविष्यन्ति ।'** अवसरेऽस्मिन् प्रसिद्धाः उद्योगपतयः श्रीमन्तः रामजीलालअग्रवालमहोदयाः, राष्ट्रिय संस्कृतसंस्थानस्य पूर्वनिदेशकाः श्रीमन्तः कमलाकान्त-मिश्रमहोदयाः संस्कृतविद्यालयानां महाविद्यालयानाञ्च प्राचार्यांश्चाप्युपस्थिताः आसन् । नाट्यसमारोहेऽस्मिन् राजघाटस्थ-ब्रह्मर्षि-रामप्रपन्नाचार्य-संस्कृतवेद-वेदाङ्ग महाविद्यालयेन 'योगक्षेमं वहाम्यहम्', बकोलीस्थ भारती ऋषिकुल-संस्कृतमहाविद्यालये 'कः खलु राष्ट्रनिर्मापकाः', रमेशनगरस्थ श्रीमोतीनाथ संस्कृतमहाविद्यालयेन 'दूतघटोत्कचम्' दरीबाकलाँस्थ रामदलसंस्कृतमहाविद्यालयेन 'प्रेमविजयः', 'आधुनिकौः कृष्णः सुदामा च', करालास्थ श्रीरामऋषिसंस्कृतमहाविद्यालयेन 'परिश्रमेण एव सिद्ध्यन्ति कार्याणि' दरियागंजस्थ शारदादेवी संस्कृतविद्यापीठेन 'साक्षरो भव' नाटकानि प्रस्तुतानि । समारोहेऽस्मिन् नैके विद्वांसः विदुष्यश्चोपस्थिताः आसन् ।

### ६३. 'दिल्लीस्थाः विंशशताब्दीयाः संस्कृतरचनाकाराः' ग्रन्थस्य लोकार्पणसमारोहः

दिल्ल्याम् । २८-३-२००१ दिनाङ्के दिल्ली विधानसभापरिसरस्थ सर्वकारस्य शिक्षामन्त्रिमहोदयानां कक्षे दिल्ली-संस्कृत-अकादमी 'दिल्लीस्थाः विंशशताब्दीयाः संस्कृतरचनाकाराः' ग्रन्थस्य लोकार्पणसमारोहमायोजितवती । समारोहस्योद्घाटनं कुर्वन्तः दिल्ली सर्वकारस्य शिक्षा-उद्योगतकनीकिशिक्षापर्यटनभाषा-ऊर्जामन्त्रिणः श्रीमन्तः नरेन्द्रनाथ महोदयाः प्रावोचन् यत् 'विंशतिशताब्द्यां संस्कृतरचनाकारैः विविधाभिः रचनाभिः देशस्य मार्गदर्शनं कृतम् । देशस्य स्वातन्त्र्यै संस्कृतज्ञैः बहुविधः प्रयासः कृतः । दिल्लीस्थानां संस्कृतज्ञानां देशस्य विकासाय महद्योगदानं विद्यते । दिल्ली-संस्कृत-अकादम्या तेषामेव विदुषां विदुषीनाञ्च परिचयः ग्रन्थेऽस्मिन् प्रकाश्य प्रशंसनीयं कार्यं कृतम् ।' अकादम्याः सचिवाः श्रीमन्तः श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'भारतस्य राजधान्यां दिल्ल्यां विभिन्नाः कार्यक्रमाः प्राचीनकालतः एव आयोज्यन्ते । स्वातन्त्र्ययुद्धायापि दिल्ल्यामेव बहुविधाः प्रयासाः अभवन् । येषु संस्कृतज्ञाः विद्वांसः विदुष्यश्चापि सम्मिलिताः अभवन् । दिल्ली-संस्कृत-अकादमी तेषामेव रचनाकाराणां विदुषां कृतित्वस्य परिचयाय पुस्तकमेतत्

प्रकाशितवती ।' अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः प्रोक्तवन्तः यत् 'दिल्ल्यां सर्वासां भाषाणां साहित्यकाराः निवसन्ति स्म, किन्तु संस्कृतभाषायाः साहित्यकाराः सर्वेषां योजकाः भवन्ति स्म ।' अवसरेऽस्मिन् येषां विदुषां विदुषीनाञ्च परिचयः ग्रन्थेऽस्मिन् प्रकाशितः तेषु कतिपयाः उपस्थिताः आसन् । ग्रन्थस्य लेखकाः सेन्टस्टीफनमहाविद्यालयस्य संस्कृतप्राध्यापकानां डॉ. चन्द्रभूषण झा महोदयानां सम्मानोऽपि सञ्जातः कार्यक्रमेऽस्मिन् नैके विधायकाः, संस्कृतविद्वांसः, विदुष्यश्चोपस्थिताः आसन् ।

## ६४. नवसंवत्सराभिनन्दनसमारोहः

दिल्ल्याम् । मथुरामार्गस्थ दिल्लीसर्वकारस्य मुख्यमन्त्रिवर्याणां निवासे सभास्थले ३१-३-२००१ दिनाङ्के दिल्ली-संस्कृत-अकादमी वित्तवर्षस्य समापने विक्रमनवसंवत्सरस्याभिनन्दनस्यावरे च वैदिकमन्त्रोच्चारैः माननीयानां मुख्यमन्त्रिवर्याणां श्रीमतीनां शीलादीक्षितमहोदयानां सान्निध्ये नववर्षस्य अभिनन्दनसमारोहमायोजितवती । समारोहेऽस्मिन् दिल्ली-संस्कृत-अकादम्याः उपाध्यक्षाः श्रीमन्तः कुलानन्दभारतीयमहोदयाः, दिल्ली विधानसभायाः सदस्याः दिल्ली-संस्कृत-अकादम्याश्च सदस्याः श्रीमन्तः रमाकान्तगोस्वामिमहोदयाः अपि उपस्थिताः आसन् । अकादम्याः सचिवाः डॉ. श्रीकृष्णसेमवालमहोदयाः अवोचन् यत् 'माननीयाः मुख्यमन्त्रिवर्याः दिल्ली-संस्कृत-अकादम्याः अध्यक्षाः सन्ति, एतासां सान्निध्ये अकादमीयं दिल्ल्यामेव नह्यपितु अखिलेऽस्मिन् भारते संस्कृत-प्रसारे संरता अस्ति ।' विक्रमनवसंवत्सरस्याभिनन्दनस्य परम्परातीव प्राचीना वर्तते ।' अकादम्याः रजतकलशशालवस्त्र-पुष्पगुच्छश्रीफलैः माननीयानां मुख्यमन्त्रिवर्याणामभिनन्दनमप्यस्मिन्नवसरे कृतम् ।

